ननु वेदेभ्योऽप्यादौ पुराणोत्पत्तिर्ब्रह्मणो मुखादिति मात्स्ये "पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम्। नित्यं शब्दमयं पुण्यं शतकोटिप्रविस्तरम् ॥३७॥ अनंतरं च वक्त्रेभ्यो वेदास्तस्य विनिःसृताः" इति। छांदोग्ये[1] बृहदारण्यके[2] च वेदैः सह पुराणानामपि विद्यात्वं छांदोग्यभाष्यकृद्भिस्तत्र भारतस्य ग्रहणात्प्रसिद्धान्येव पुराणानीति चेत्सत्यम्। तथाप्यस्तु श्रुतिसमप्रामाण्यं पुराणानाम्। किंतु न श्रुतिबाधकरणे सामर्थ्यं तेषाम्। एवं श्रुतिभिस्तु मातुः स्थितिर्निर्णीता। श्रुत्यनुकूलः समन्वयोऽपि यथा स्यात्तथा चोक्तः। पुराणवाक्यानां संगतिरितरस्मिन्नध्याये निर्णेष्यामः।

हरिः ॐ तत्सत् श्रीगंगामात्रमृतपाने मातुश्चरणस्थाने श्रुतिविचारो नाम प्रथमः कवलः।

## द्वितीय कवलः

अथ पुराणवचनानां समन्वयमाह। पुराणैकदेशं कक्षीकुर्वाणा यानि वचनानि चोदाहरंति तान्येवादौ प्रदर्श्यंते। पंचसहस्रवर्षाणि कलौ गंगा तिष्ठति तदनंतरं गमिष्यतीति सनत्कुमारसंहितायाम्। ब्रह्मवैवर्तेऽपि भगवन्निजधामगमनकालेऽस्माकं का गतिर्भगवन्निति गंगाप्रश्ने भगवदुत्तरं "कलेः पंचसहस्राणि वर्षाणि तिष्ठ भूतले (ब्रह्मवैवर्त अ. १२९ कृष्णजन्मखंड श्लो. ५१) पंचसहस्रहायनांतं कलौ स्थित्वा पुनरागमिष्यसीति। सरस्वत्याः शापाद्गंगा पंचसहस्रहायनानि भूलोके स्थित्वा पुनर्वैकुंठं गतेति। "कलेः पंचसहस्रं च वर्षं स्थित्वा च भारते। जग्मुस्तत्र सरिद्रूपं विहाय श्रीहरेः पदम्" (ब्रह्मवैवर्त अ. ७ श्लो. ४०)। इत्येतानि वचनानि पूर्वपक्षिणोदाह्रियंते। तत्रास्माकमयं प्रश्नः। किमेतेषां वचनानां विरोधीनि वचनानि न प्रदर्श्यंते पुराणेषु वा। मात्स्ये प्रयागमहात्म्ये "कल्पान्ते तत्समग्रं हि

१ छांदोग्य ७।१।२ – २ बृहदारण्यक २।४।१०

रुद्रः संहरते जगत् । तदा प्रयागतीर्थे च न कदाचिद्विनश्यति (मत्स्यपुराण अ. १११ श्लो. ४) इदं प्रयागक्षेत्रं सृष्टिप्रलयेऽपि न नश्यति । तथाच स्कंदपुराणे काशीखंडे चोक्तमियं भागीरथीयुता काशी त्रिशूले धृत्वा महादेवः प्रलयेऽधितिष्ठतीति । तथा च भगीरथवरसमये यावच्चंद्रदिवाकरौ तावन्मत्पुण्यप्रवाहबलात्ते कीर्तिर्भविष्यतीति स्पष्टम् । योगवासिष्ठेऽपि भगीरथेन महात्मना गंगाऽत्र समानीता सा नित्यैवात्रेत्युक्तम् । पुनश्च महाभारतेऽपीयं गंगा सर्वेषां पापानां परिहर्त्री सर्वदैव मातेव बालान् पास्यतीति । कौर्मेऽपि तथैवोक्तम् । "कृते तु नैमिषं क्षेत्रं त्रेतायां पुष्करं वरम् । द्वापरे च कुरुक्षेत्रं कलौ गंगा विशिष्यते । कृते च सर्वतीर्थानि त्रेतायां पुष्करं तथा । द्वापरे च कुरुक्षेत्रं कलौ गंगैव केवला" । सर्वाणि तीर्थानि कलौ गंगायां स्वसामर्थ्यं क्षिप्त्वा जनानुद्धरिष्यंति किंतु गंगा तु स्वयमेव जनानुद्धरिष्यति । न तु स्वसामर्थ्यं कुत्रापि क्षिपतीति चान्यत्र विद्यते । यत्तु सिंहस्थयात्रादिसमये गोदावर्यादीनां महात्म्यं श्रूयते तदपि गंगोपजीवितयैव न स्वातंत्र्येण । काशीस्थभागीरथ्येव तत्रागतवतीत्यादि-लोकप्रवाददर्शनात् । यत्तु श्रीमत्तुकारामैः काश्या अपि पंढरीमहात्म्यमधि-कमुक्तं तत्तु तातकूपभक्तवत्सात्विक्या श्रद्धया न तु शास्त्रीयश्रद्धया । काश्या माहात्म्यमपि गंगागमनादेवाधिकमिति काशीखंडे चोक्तम् । पुरा मणिकर्णिका नाम तीर्थं काश्यामासीत् । किंतु भागीरथ्या महात्म्यं ततोऽपि दशगुणम-धिकम् । हरिद्वारः प्रयागश्च वाराणसी कुरुक्षेत्रं हिमालयश्चेत्येतानि पंचक्षे-त्राणि घोरेऽपि कलौ स्थित्वा जनान् पास्यंति । गंगा तु सर्वत्र सर्वदैव । उपर्युक्तानि क्षेत्राण्यपि गंगाद्वारैवेत्यन्यत्र । सर्वेषामेषां वचनानां विरोधः परिहार्यः । स यथा । यानि गंगागमनवचनानि श्रूयंते तानि तु भूतकल्प-पराणीति केचित् । वस्तुतस्तु वरशापौ परस्परभाषणादिदर्शनात् देवतानामेव शक्यौ । यथा शंतनुस्त्री गंगा जाता । सा न जलरूपेण किंतु देवतारूपेण तद्वच्छापसमुद्भवोऽपि देवतारूपेणैवेति तदेत्थं योजना । गंगायाः शापस्तु

यदा विनष्टो भवेत् तदा वैकुंठगमने तस्या देवताया अप्रतिबंध इति लीलामात्रोऽर्थः । भूलोके गंगाया अनादिस्थितौ श्रुतिप्रामाण्यसत्वे गंगाया भगीरथानयनं तु शंखासुरेण नीतानामनादिवेदानां मत्स्यावतारानयनवज्ज्ञेयम्। रुक्मांगदप्रकटितानादिहरिदिनमहात्म्यवन्महात्म्यप्रकटनं वा ।

इति: ॐ तत्सत् श्रीमान्नमृतपाने पुराणवाक्यविचारो नाम द्वितीयः कवलः

## तृतीय कवलः

अथ युक्तिकवलारंभः । किमेतद्गंगामहात्म्यं देवतायाः प्रचक्ष्यते उत जलस्य । आद्ये शापादीनां देवतायाः परिपक्षग्रहणाद्गंगायाः गमनं भविष्यतीति तत्र सामर्थ्यस्याऽपि नाशः स्यात् । द्वितीये जलस्य प्रत्यक्षत्वात् प्रत्यक्षगंगामहात्म्यं कुत्रापि न दृश्यते । वैकुंठादीनां तत्स्वामिनां च परोक्षतयैवोपलब्धिर्न प्रत्यक्षतया । उपासनायाः कर्तृतंत्रत्वाच्छ्रद्धाजाड्याच्च वस्तुतंत्रेणापि गंगाया महात्म्यं न गृहीतुं शक्यते । इति प्राप्ते ब्रूमः । या यस्याभिमानी देवता भवति तस्या रूपद्वैविध्यं जायते । तद्रूपेण स्वशरीरेण च। यथा सूर्यस्य भगवतस्तेजोरूपेण रथस्थवेदत्रयमूर्तिरूपेण च शरीरदर्शनात् तद्वद्गंगाया अपि जलरूपेण गोलोकादिगोचररूपेण चेति देवताशरीरं द्विविधम् । तत्र द्वितीये भाषणादिगोचरं स्यात् । तथा भगवान् सूर्य आद्येन शरीरेण लोकान् द्योतयति द्वितीयेन च भक्ताननुभावयति । तथा भगवती गंगाऽपि पापं दूरीकृत्य प्रथमेन शरीरेण द्वितीयेन च भक्ताननुभावयति स्वस्वलोकादिव्यवहारञ्च करोति । ननु पार्थिवत्वेन च शरीरस्योपलंभाजलरूपेण शरीरमघटमानमिति चेन्न । जलरूपेण शरीरं नैय्यायिकैः स्वीकृतमस्ति । तथापि तत्र हस्तपादादिकल्पना मानुषशरीरवदशक्येति चेन्न । नहि देवानां मानुषशरीरवत् स्थाननियमितैरिंद्रियैर्व्यवहारो भवति तेषां सत्ववैशेष्यात् । सत्व वैशेष्येण हि भौतिकानां प्राकृतानां वेंद्रियाणां सर्वदा सर्वत्र प्रकाशसंभवात्

नियमनविशेषस्य तमसोऽभावाच्च । नेश्वरस्यापि नियामकत्वे तमस्त्वं नियम्यस्यैव नियमनप्राबल्येनाभिभूतत्वात् । देवतानां मानुषशरीरसमानवर्णनं तु तत्तदुपासनागोचरीकर्तव्यतया प्रतिभाति । अन्यथा चतुर्मुखपंचमुखचतुर्भुजादिष्वप्ययाथार्थ्यात् । अतो जलोपहितेन देवताशरीरेणैव भगवती गंगा पास्यति । तत्र तदुपाधित्यागात् सर्पत्वक्त्यागवत् गमनवाक्यानां सामर्थ्यविनाशेऽर्थसंभावना स्यादिति चेन्न । जलस्यैव तद्रूपत्वदर्शनात् । "तत्राप्लुतासो" इत्यादि श्रौतपदेन "भवत्तीरवानीरवातोत्थधूलीलवस्पर्शतस्तत्क्षणं क्षीणपापः" "तव शिवजललेशं वायुनीतं समेत्य सपदि निरय जालं शून्यतामेति गंगे" तज्जलानिल एव पुनातीत्यादि स्मार्तपदेन चैतदुपलंभदाचार्यैः काव्यकारैरपि जलस्य महात्म्यवर्णनाच्च । सर्पत्वच इवोपाधित्यागस्याप्रत्यक्षत्वादननुमानत्वात् शाब्दे गले पतिते तत्र विरोधाभावात्पूर्वकवलयोस्तत् सिद्धत्वात् सर्वमपास्तम् । जलमयमूर्तिस्तु "सेयं वाङ्मयी मूर्तिरित्यादिवज्ज्ञेयम् । न भौतिकत्वशंकाऽपि कार्या दैविकसामर्थ्यस्याप्रतिबंधात् । तदभिप्रायेणैव "गंगाजललवकणिका पीते"त्याद्याचार्यकामधुक्प्रवृत्तिः । वस्तुतंत्रत्वं तु तस्यास्तीरविभक्तदेहेऽपि श्रृंगारानंदप्रदर्शनान्नश्यतीति चेन्न । ऋतुकालीनकामिनीभूषाहानिभूषणादिवत् प्रत्यक्षदर्शनात् । न परोक्षज्ञानस्य सर्वथा कर्तृतंत्रत्वमनुमानस्य वस्तुतंत्रत्वात् । नापि देशनामश्रवणेन देशस्य कर्तृतंत्रत्वं दृश्यते । यत्तु उपासनायां कुत्राचित्कर्तृतंत्रश्रद्धया कलातिशयो धर्ममनपेक्ष्यापि शिलपिल्लादिवत् दृश्यते तत्र तदुपहितेश्वरस्य ग्रहणाद्वस्तुतंत्रोपजीवितत्वैवेति ज्ञेयम् । अतिशयस्तु वस्तुनैकव्यकरणाद्यभावेन मूढानामेव । स्यादेतत् । देवताया वस्तुतंत्रत्वं न जलस्येति चेन्न । कर्तृतंत्रस्य यावद्दार्ढ्यमनेकवारप्रसक्तिश्रवणात् । अत्र नैकवारप्रसक्त्या कार्यसिद्धिश्रवणात् सुगुणैश्च । तद्यथा—"समृद्धं सौभाग्यं सकलवसुधायाः किमपि तत् । महैश्वर्यं लीलाजनितजगतः खंडपरशोः । श्रुतीनां सर्वस्वं सुकृतमथ मूर्तं सुमनसां । सुधासौंदर्यं ते सलिलमशिवं नः शमयतु" । सौभाग्यमित्यनेन

सर्वदा मंगलप्रदत्वमुक्त्वा महैश्वर्यमित्यनेन सर्वसामर्थ्यवत्वं सूचितमस्ति । महेश्वराज्ञातत्वाच्छ्रुतिवदीश्वरजत्वम् । श्रुतीनां यो धर्मः स तत्रैव साध्यतेऽतः श्रुतीनां सर्वस्वम् । सुमनसां सुकृतं मूर्तमित्यनेन न जीवपुण्यकृतामित्युक्तम् । न हि जीवस्य पुण्यं क्वचिदपि मूर्तत्वेन प्रतिभाति । अत ईश्वरस्य सत्यसंकल्पत्वात्तस्यैव मूर्तं सुकृतम् । सत्यसंकल्पत्वेन मूर्तत्वेनोपलंभात् । बहुमानार्थं बहुवचनम् । सुष्ठु धारणमेव शोभनम् । अथवा सुधाऽमृतं तत्सौंदर्ये सहोदरत्वेनामरकरणे सामर्थ्येऽपि सलिलत्वे सत्याशिव-शामकत्वेनाधिकत्वं दर्शयति । एवं गुणानुक्त्वा वस्तुतंत्रत्वमाह । "दरिद्राणां दैन्यं दुरितमथ दुर्वासनहृदाम् । द्रुतं दूरीकुर्वन् सकृदपि गतो दृष्टिसरणिम् । अपि द्रागाविद्याद्रुमदलनदीक्षागुरुरिह । प्रवाहस्ते वारां श्रियमयमपारां दिशतु नः" । अत्युत्कटपुण्येन प्रारब्धस्याभिभवकरणादियं गंगा दरिद्रदैन्यहर्त्री । दुर्वासनामयं हृदयं येषां तेषामपि दुरितहर्त्रीत्यनेन ज्ञातपापानामपि सहजप्रायश्चित्तकारिणी क्षमाकर्त्री बालकज्ञातापराधक्षंत्री मातेव । द्रुतमित्यनेनात्युत्कटत्वं दर्शितम् । तथापि न दृढीकरणाभ्यासापेक्षा वस्तुतंत्रत्वादिति "प्रवाहस्ते वारां सकृदपि गतो दृष्टिसरणिमि"त्यनेन सूचितम् । नन्वेतस्योपासनाकांडत्वसंभवात् श्रद्धाजाड्यत्वमिति चेन्नेत्याह । अपि द्रागाविद्याद्रुमदलनदीक्षागुरुरिहेति । उल्हासेनाऽहं ब्रह्मास्मिति स्फूर्तिजनकत्वात् । सिद्धमतः श्रीमद्गंगामात्रमृतस्य जलरूपेण वस्तुतंत्रमैश्वर्यम् । सकलवसुधाया इत्यनेन पूर्वोक्तत्वाज्जलस्य च प्रत्यक्षत्वात् समृद्धामिति वचनेन नित्यत्वाच्च गंगागमनपक्षः प्रतिषिद्धः । अग्रे तु निष्कलंकैर्महात्मभिर्मातुस्तनपानाय महात्म्यमाश्रणीयम् ।

हरिःॐ तत्सत् श्रीमात्रमृतपाने युक्त्या पूर्वपक्षनिराकरणं नाम तृतीयः कवलः

———

# ६

श्रीज्ञानेश्वरमाउली समर्थ

# भिषगिंद्रशचीप्रभा

उभा माता पिता शंभुगुरुर्ज्ञानेश्वरो महान्
पातिः कृष्णो राधिकाद्या भगिन्यो गोपिका मम ॥१॥
पंचायतनमित्येतत् हृद्यास्थाप्य प्रपूज्य च
अष्टांगसंग्रहे टीकां शिशुबोधाय तन्यते ॥२॥
सर्वान् गदानपनयत्यमृतार्द्रदृष्ट्या
भूतेषु साम्यमतिरप्यवसंज चित्ते
नत्वा तमेकमुमया सहितं परेशम्
वक्ष्ये हिताय भिषगिंद्रशचीप्रभां स्वाम् ॥३॥

स्वमतं यथार्थतया द्योतयन् निर्विघ्नग्रंथसमाप्तये गुरुदेवादिनमस्काररूपं मंगलं शिष्यशिक्षार्थमर्थतो निबध्नाति । श्री धन्वंतरये नम इत्यादिना । धन्वंतरिर्भगवान् विष्णुरेव । रोगा मानसाः शारीरादयश्च बहुविधाः । तथापि मानसा एव रोगा वस्तुतो भवितुमर्हंति । सर्वं दुःखं मनोमात्रमेवेति वैज्ञानिककापिलभाष्यवचनात् । चरकाचार्यादिभिर्जितचेतसां रसायनत्वेन ग्रहणात् जितमानससंगादर्थादेव पारकीया रोगाः शाम्यंति । तेषूत्कृष्टसत्वात् । किंच ये विषयासक्ता रसायनरूपिणीं सत्पुरुषसंगतिमनुपलभमानाः किंचिद्भूतसत्वां वृक्षादिजातिमौषधरूपेण संगृह्य मानसबीजोच्छेदरहितां शाखाच्छेदन्यायभूतां शारीररोगाभिभवरूपिणीं शांतिमुपलभंते । सचेतसानां रोगासंभवात् । दुश्चेतसानामधर्मेण रोगवृद्धिदर्शनात् चित्तमेव रोगबीजम् । तन्निवृत्तिस्तु ज्ञानामृतेनैव भवति । ज्ञाने प्राप्तेऽपि प्रारब्धभोगेन रोगा यावद्विदेहकैवल्यं मानसाः शारीराश्च जायंते । "ग्रंथिभेदेऽपि संभाव्या इच्छाः

प्रारब्धदोषतः ”। अहंतास्पदं दुःखं त्ववश्यमेव भोक्तव्यमिति विद्यारण्यादिवचनैर्वेदान्तिनो मन्यंते। ते तु ज्ञानिनोऽपि जीवन्मुक्तिं नो लभंत इति स्पष्टं ब्रूमहे। ज्ञानानंतरमपि विद्वत्संन्यासादिषु प्रयत्नप्रामाण्यात्। यावद्देहस्तावत्प्रारब्धं भोक्तव्यमिति चेत् ज्ञानानंतरं यावन्मनोवृत्त्यवशेषस्तावत् किमु यत्न आक्षिप्यते। अनया युक्त्या च प्राप्तपुरुषेणापि प्रारब्धाभिभवार्थं मानसव्याधिजये योगरूपः शारीरव्याधिजये रसादिरूपश्च यत्नो विधेयः। प्राप्तस्यापिपुरुषस्य कुतूहलान्नेंद्रियपरिपालनं हिताय भवेत्। “क्षुद्व्याधिश्च चिकित्स्यतां प्रतिदिनं भिक्षौषधं भुज्यताम्”। जीवन्मुक्तौ रसोऽधिष्ठेय इत्यादि श्रीमज्ज्ञानेश्वरतातश्रीमच्छंकराचार्यादीनां वचनात् समुपलभामहे। येषां तु मनोबलं प्रबलं तेषां न रोगपरिस्थितिरिति प्राचीनैस्त्रिदोषवादिभिरर्वाचीनैरनार्यैर्जंतुवादिभिश्च संग्रहणात् सिद्धोऽस्मदीयः सिद्धांतः। अतः पामराणां विषयसुखार्थं विषयिणां च धर्मश्रमोपहननार्थं मुमुक्षूणां तितिक्षावर्धनार्थं परोपकारार्थं च तथा सिद्धानामपि भक्तियोगाभ्यां प्रारब्धाभिभवेऽपि प्रमादेन शारीरव्याधि मनोव्याकुलतादिजयार्थं वेदान्तयोगादिशास्त्रापेक्षावत् वैद्यशास्त्रस्याऽप्यावश्यकोपयोगः। “धर्मार्थकाममोक्षाणामारोग्यं मूलकारणम्” इति स्मृतेः। यद्यपि “ततः प्रत्यक्चेतनाधिगमोऽप्यंतरायाभावश्च” इति सूत्रेण भगवद्भिर्योगशास्त्रप्रणेतृभिरीश्वरप्रणिधानादेवांतरायनिवृत्तिरुक्ता, व्याधिस्त्यानेत्यादिसूत्रे तैरेव व्याधे रप्यंतरायेऽतर्भावादीश्वर प्रणिधानेनैव व्याधिनिवृत्तिः प्रारब्धाऽभिभवोपयोगिनी तथापि “गामाविश्य च भूतानि धारयाम्यहमोजसा। पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मक” इति भगवद्भिरेव सोमस्य स्वविभूतित्वकथनात् पुनश्च स्वस्मिन् ओजस आधारोक्तेः सोमेनैव च तस्य परिपोषणात् सोमस्य च सर्वौषध्युपलक्षणत्वात् जरामृत्युविनाशनसामर्थ्यात् विभूतीनां दशमाध्याये परमेश्वरत्वेन भाव्यत्वमिति परमेश्वरोक्तेर्भक्ताश्च कोमलांतःकरणा निष्कामाः प्रियं प्रेमपात्रं परमेश्वरं व्याधिनिवृत्त्यादिश्रमं प्रदातुं नेच्छंति। ततः सोमादिरूपेण प्रारब्धाभिभवाय परमेश्वरविभूत्याराधनं

तेषामस्माकं च न विरुध्यते। आयुर्वेदस्यैतिहासिकप्रयोजनमगीत्यमेव श्रूयते। यदा मर्त्यलोके रोगाः समुद्भूतास्तैरभिभूता महर्षयः क्षीणतमात्मान बभूवुः। तदा भगवंत आत्रेयादयः ब्रह्मनिश्वसितमायुर्वेदमिंद्रं प्रति गत्वाऽस्मिंल्लोक आनीतवंतः स्वशिष्यानग्निवेशादीनध्यापयामासुरिति। तस्मात् चित्तबीजप्रशमनेन सर्वरोगप्रशमनम्। "चित्तमेव हि संसारस्तत्प्रयत्नेन शोधयेत्" इति दृष्टिसृष्टिवादान्वितवासिष्ठवाक्यात्। अत्रेयं योजना। रोगा द्विविधाः सहजा बीजभूता मूलभूतास्तत्प्रभवाः शाखापर्णभूताश्चेति भेदात्। तत्र सहजा मूलभूताश्चित्ताश्रयाः चित्तमेव हि दृढीभूतं शरीरत्वेन परिणतमिति दृष्टिसृष्टिवादे सिद्धान्तितत्वादर्थादेव शखापर्णभूतास्तदाश्रयाः। ते च प्रथमा आधिशब्देन द्वितीयाश्च व्याधिशब्देन संगिरंते। तत्र प्रथमानां रागादयो द्वितीयानां वातादयश्च हेतुः। प्रथमे हेतुकार्ययोरभेदः। द्वितीये भेदश्च। तत्र ये तु ज्ञानिनस्ते तु केवलान् प्रथमानेव प्रहरंति। ये तु वैद्यशास्त्रज्ञास्ते तु केवलान् द्वितीयानेव प्रहरंति। तथापि वेदान्तशास्त्ररहिता वैद्याः शाखापर्णछेदेऽपि मूलानुच्छित्तिरिव शारीररोगावच्छेदेऽपि बीजभूतान् रोगान्नानुच्छिदंति। ये तु वैद्यशास्त्ररहिता वेदान्तिनस्ते मूलभूतान् रोगानपनयंति। तथापि कंटकतरोर्मूलच्छेदेऽप्यवशिष्टकंटकेभ्यस्ताप एव भवति तद्वदाधिविनाशेऽपि बलेन प्रारब्धभोगावशिष्टव्याधिना यावद्विदेहकैवल्यं ताप एव भवति। तापस्तु त्रिविधोऽपि हंतव्यः "अथ त्रिविधदुःखात्यंतनिवृत्तिरत्यंत पुरुषार्थः" इति कापिलसूत्रात् वेदान्तवैद्यकं च द्वयमप्यध्येतव्यमिति सिद्धम्। तदध्ययनं साधनदशायामपि यमनियममिताहारदेशकालपथ्यापथ्यादिज्ञानेन योगशास्त्रस्य ह्युपयोगित्वात्। तातपादैरपि योगाभ्यासे धातुसाम्यस्यावश्यकतोक्तेः। तथाप्ययं व्याधिद्वयक्रमस्तु बालबोधाय। वस्तुतस्तु मानसाएव व्याधयो मुख्या इत्यस्माभिरुपर्युक्तम्। "यावच्चित्तसत्ता तावद्दुःखमनुमीय" इति सांख्यभाष्यवचनाच्च संगच्छते।

तृष्णादीर्घमसद्विकल्पशिरसं प्रद्वेषचंचत्फणम्
कामक्रोधविषं वितर्कदशनं रागप्रचंडेक्षणम्
मोहास्यं स्वशरीरकोटरशयं चित्तोरगं दारुणम्
प्रज्ञामंत्रबलेन यः शमितवान् बुद्धाय तस्मै नमः ॥१॥

विरुद्धाचारेण विषपरिणतेस्तथैव रोगसंभवात्सर्वेभ्यो विषेभ्यो सर्पविषस्य बलवदुक्तेर्बीजभूते विषसमाष्टिभूते चित्ताख्ये रोगकारणे सर्परूपकं न्याय्यम्। अतोऽयं चित्ताख्यः सर्पो दीर्घः। तृष्णैवास्य दीर्घत्वम्। अस्य च महत्तरसंसाररूपानंतजन्ममयं कुंडलाकारत्वात्। न हि तृष्णां विनाऽनंतजन्मसंभोगो भवति। "तदेव सक्तः सहकर्मणैति लिंगं मनो यत्र निषिक्तमस्य" "यं यं वापि स्मरन् भावं त्यजत्यंते कलेवरम्। तं तमेवैति कौंतेय सदा तद्भावभावितः" इति सौषुमजाग्रच्छुतिभ्याम्। तृष्णादीर्घत्वेऽपि नात्मतृष्णा किंतु असद्विकल्पनं शिरः। आदौ असत्संसारं सत्यं मत्वा तृष्णया तदनु जन्मसु व्रजति यथा शिरःपुरस्कृत्य फणिर्गच्छति। प्रकर्षेण यो द्वेषः स एव फणः। अतिचंचलः नैकस्मिन् विषये स्थिर इत्यर्थः। शीतकाले शीतद्वेषादुष्णकाले उष्णद्वेषात् मलविसर्गकाले भोजनद्वेषात् भोजनकाले मलविसर्गद्वेषादेश्च। कामक्रोधादयो विकारा विषमस्य। यथा सर्पविषवेगान् सहंते तथा कामक्रोधादीनां वेगान् नापि न सोढुं शक्नुवंति। यथा सर्पाणां सप्तवेगास्तथाऽस्यापि सप्तधातुपचनरूपा वेगाः। विषं दशने तिष्ठति। तथा कामक्रोधादयः विपरीततर्के देहादिसत्यभावनायां तिष्ठति। आदौ दृष्ट्वा पश्चात्सर्पो धावति तथा विषयेषु प्रीतिमयीं दृष्टिं कृत्वा चित्तं तेषु प्रधावाति। आदौ रागः पश्चात् असत् सत्यकल्पनम्। पश्चात् तृष्णेत्यादिक्रमेण भानम्। भानशब्दस्तु क्षणिकविज्ञानवादिनां चित्ताक्षेपविनिवर्तकः। मोहास्यम् मोहे एव कामक्रोधादयः समावृत्तास्तमस्त्वात्। स्वशरीरे कोटरे शेते इति तथाविधः न त्वात्मज्ञान-

रूपेण जागर्तीति रहस्यम्। स्वशरीरं संपूर्णं व्याप्य तिष्ठति। पादं विनैव स्वेच्छयैव कुत्रापि गच्छति वा। गमनेनोरःस्फोटसमानं श्रमं करोतीत्यर्थः। अयं चित्तसर्पो दारुणो दुस्तरः सर्वमनेन भुक्तं भक्षयति भक्षयिष्यति च। एवंविधः सर्पः श्रीमच्छंकराचार्यैरपि विवेकचूडामणौ रूपकेणारोपितः। "ब्रह्मानंदनिधिर्महाबलवताहंकारघोराहिना। संवेष्ट्यात्मनि रक्ष्यते गुणमयैश्चंडैस्त्रिभिर्मस्तकैः। विज्ञानाख्यमहासिना द्युतिमता विच्छिद्य शीर्षत्रयम्। निर्मूल्याहिमिमं निधिं सुखकरं धीरोऽनुभोक्तुं क्षमः॥३०३॥" तथाऽप्ययं सर्पश्चित्तमेव चित्तमात्ररूपः। अधिष्ठाने कल्पित इत्यर्थः। "मन एवोल्लसन्मात्रं बद्धतामगमद्यत" इति वाक्यात्। तमेतम् भूतभाविनि परोक्षे वर्तमानेऽपरोक्षे जन्मनि च व्याप्तं ज्ञानमंत्रेण यः शमितवान्। प्रज्ञानामात्माकारबुद्धिः स एव मंत्रः। तस्य बलम्। बलशब्देन ह्यात्माकारबुद्धेरनुमीयते। शून्याकारबुद्धेर्निवर्तकत्वात्। बौद्धानां शून्यवादः प्रखंडितः। यतः शशशृंगाकारबुद्ध्या न शत्रुं जेतुं शक्यते। न वा स्कंधारोहणेन वैकुंठगमनं भवति। प्रज्ञा चात्र श्रुतिसंबंधिनी। "विज्ञानाख्यमहासिना द्युतिमते" त्युपरिनिर्दिष्टाचार्यवाक्योक्ता ज्ञेया। ब्रह्मरज्जौ कल्पितोऽयमहिर्नहि ज्ञानेन विना विरमति। तदुक्तं सुरेश्वराचार्यैः स्वाराज्यसिद्धौ। "अविद्योत्थेष बंधो विरमति न विना वेदनं कर्मजालैः। मालोभूतोऽहिरस्तं व्रजति किमु नमस्कारमंत्रौषधाद्यै" रिति। तस्मात्सुष्ठूक्तं प्रज्ञाबलेन शमितवानिति। "मनः प्रशमने राम मोक्ष एवावशिष्यते" इति वासिष्ठोक्तेः। अतो मनोजयेन सर्वे रोगा नश्यंतीत्येतदलोकसंवित्प्रकाशे मानसायुर्वेदव्याख्याने प्रपंचयिष्ये। एवं दारुणाहिं मर्दितवान् संसारे मिथ्यादृष्टिं कृतवान् जीवन्मुक्तो यो ज्ञानित्वेऽपि बुद्ध इव करुणावान् तस्मै नमः। बुद्धे सदयहृदयत्वं प्रसिद्धं गीतगोविंदोक्तेः। बुद्धनमनात् वाग्भटो बौद्धमतानुयायी चासीदित्यर्वाचीनवैतंडिकेतिहासकल्पका जल्पंति तदसत्। देवद्विजगुरुहरिहरादिभक्तेस्तैनैव बोधनात्। ततोऽयं वैदिकमतानुयायी कोऽप्यासीदित्यनुमीयते।

मद्यमांसगुणादीनां वक्ष्यमाणत्वादौषधिषु तन्नियोगाच्च बौद्धमतानुयायिनामेव-मुपदेशे प्रत्यवायान्नायं बौद्ध इति स्पष्टमेव प्रतीयते। अस्य पितुर्नाम सिंहगुप्त इत्यनेनैव ग्रंथकर्त्रा चोक्तम्। एतन्नाम्ना ब्राह्मणोऽयं वैश्यो वेति संशयो वर्तते। अस्तु कोऽपि वर्णः। किं त्वस्य ग्रंथा अष्टांगसंग्रहोऽष्टांगहृदयस्तथा रसरत्नसमुच्चयश्चातीवोत्तमाः। एतं ग्रंथं प्राचीना भिषग्वर्या बृतत्रय्यां संगृण्हंति। "सुश्रुतं न श्रुतं येन वाग्भटो नैव वाग्भटः। नाधितश्चरको येन स वैद्यो यमकिंकरः" इति। अस्य ग्रंथनिर्बंधनप्रणाली समीचीनतमा। यथा वेदग्रंथादपि न्यायानुभवानुगृहीतमध्यात्मग्रंथमेव समाश्रयेदिति मुमुक्षुव्यवहारे वासिष्ठोक्तिस्तथाऽस्याऽप्युक्तिः। "ऋषिग्रंथेषु प्रीतिश्चेद्विना चरकसुश्रुतौ। भेडाद्याः किं न पठ्यंते तस्मात् ग्राह्यं सुभाषितमिति"। अलमतिविस्तरेण। सहजानां बीजभूतानां रोगाणां संख्यानं लक्षणं चाग्रे वक्ष्यति।

भवरोगापहं यस्य पीयूषं नाम कीर्तितम्।
श्रीमज्ज्ञानेश्वराचार्यम् वंदे बद्धांजलिर्मुदा॥

हरिः ॐ तत्सत् श्रीअष्टांगसंग्रहटीकायां भिषगिंद्रशचीप्रभायां प्रथमः समुल्लासः।

———

द्वितीयः समुल्लासः

रागादिरोगाः सहजाः समूला। येनाशु सर्वे जगतोऽप्यपास्ताः
तमेकवैद्यं शिरसा नमामि वैद्यागमज्ञांश्च पितामहादीन् ॥२॥

राग आदिर्येषां ते रागादयः। तद्गुणसंविज्ञानबहुव्रीहिः। आदिशब्देन द्वेषाभि-निवेशादीनां ग्रहणम्। रुजंति देहमनसोः संतापयंतीति रोगाः। ननु मनः स्थित-

त्वान्मन एव ते रुजंतीति चेन्न। देहमनसोराधा।धेयसंबंधात्। यथाऽऽधारस्य वस्तुनः कटाहादेः परितापे आधेयस्य घृतादेस्तापः। आधेयेनायोगोलकादीनां परितप्तेनाधारस्य कटाहादेस्तापः। तद्वत् द्वयोरपि संतापो युक्तः। अत्र देहस्याधारत्वं मनस आधेयत्वं मनोऽणुवादिनो नैय्यायिकाः कल्पयंति। तद्विपरीतं योगवादिनः। द्वयोर्मध्ये योगवादिनामेव युक्तत्वम्। आधारेणैव मनसाऽऽधेयस्य देहस्य चेष्टनात्। न ह्याधेयेनाधारश्चेष्टतीति लोके दृश्यते। आकाशयानमिव नौरिव वा चेष्टतीति चेन्न। आकाशयाने हंसादीनां वाहकत्वं भारते श्रवणात्। नौकाया अपि जलाधारेण चेष्टनात्। तत्राधारस्तु द्विविधः। ओतप्रोतत्वरूपः संबंधरूपश्चेति। आद्यो यथा पटस्य तंतुर्घटस्य मृदिव। अंत्यो घृतादेः कटाहादिरिव। तत्रांत्यलक्षण आधारेऽस्मदीयकथनव्यभिचारः स्यात् आद्यलक्षण आधारे क्वचिदपि नास्त्येवेति निश्चयः। मनो ह्याद्यलक्षणं लक्षिताधाररूपं तस्यैकैकेनापि विकारेण कामादिना संपूर्णदेहव्याप्तिदर्शनात्। तदेतदोतप्रोतत्वमाधारलक्षणं नैय्यायिकाः समवाय इति वदंति। वेदान्तिन आरोप इति। यथा हेम्न्याधारमंतरेणालंकारस्य मानावर्धनादिनाऽऽधेयत्वे-नानुपलंभस्तद्वन्मनो विना देहस्य सुखदुःखयोर्वा नितरामनुपलंभः। देहाघाता-दिना मनस्तापोऽप्यपास्त एव। प्रसुप्त्यादौ व्यभिचारदर्शनात्। मुख्यतया देहस्यारोपितत्वान्मानसत्वेन हि ते रोगास्तथापि देहमपि संतापयंति। मूलपीडनाच्छाखादीनां पीडनमिव ते रागादयः सहैव जाताः। बाह्य सन्निकृष्टविप्रकृष्टकारणरहिताः। ननु सर्वथा कारणरहितत्वात्तेषां निराकरणं न स्यात् ब्रह्मवेति चेन्न यतस्ते रोगा आत्मनोऽननुकूला इत्यर्थः। सहजा इत्यनेन वासनाजालनिबद्धस्य रोगतीव्रभूतस्य दृश्यस्य विवर्तत्वमुक्तम्। आयुर्वेदोक्तं कारणं यद्यप्येषां रोगाणां नोपलभ्यते तथाप्यध्यात्मशास्त्रोक्तं कारणमस्त्येवेत्याह समूला इति। अविद्या हि तेषां मूलम्। उक्तं च पातंजले "अविद्याक्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम्"। सर्वेषां क्लेशाना-मविद्यैव मूलमिति सूत्रसारार्थः। "अस्यानर्थहेतो" रिति वाक्येन श्रीमच्छं-

कराचार्यविरचिते शारीरभाष्येऽप्यध्यासपर्यायपर्यालोचिताऽविद्यैव सर्वेषामनर्थानां कारणमित्युक्तम् । न्यायमतस्तेषां सहजत्वं समूलत्वंच । ये त्वयं ग्रंथप्रणेता बौद्ध एवासीदित्याधुनिकाः प्रलपंति ते तु गगनकुसुमायमानमौर्तिग्रं प्रश्रयन्त इति ब्रूमः । यतो बौद्धसमये उभयहेतुकस्य समुदायस्य न किमपि कारणमुक्तम् । कारणाभावे कार्यमेव न घटत इति प्रस्थापितं भगवत्पूज्यपादाचार्यैस्तर्कपादे । न तस्य प्रसक्त्यप्रसक्तिनिरूपणस्य स्थलमेतत् । यद्यपि कैश्चित्सुगतानुसारिभिर्घटयंत्रन्यायेनाविद्यादीनामितरेतरतश्चोत्पत्तिरुक्ता तथापि संघातासंभवादिति निरस्तैवाद्वैतचूडामणिभिः । क्वचिदपि सुश्रुतकच्छैर्न रागादीनां मूलमुक्तम् । न हि मूलं शाखादिभ्यः पुनरुत्पद्यते किंतु मूलादेव ते शाखादय उत्पद्यंते । अत एव मम पश्चादयं वादो उद्भवेदिति रसायनसामर्थ्येन वैद्यवर्येण वाग्भटाचार्येण विज्ञाय स्वस्य बौद्धारोपापलापायास्मिन् श्लोके "समूला" इति पदमुक्तम् । नोक्तं सबीजा इति । यतो बीजं पुनर्वृक्षादपि संभवति न तथा मूलम् । तद्वत् खंडितेऽपि बौद्धसमय आग्रहाद्रागादिभ्यो बीजवदविद्योत्पत्तिः स्यादिति प्रसक्तिरपाकृता मूलशब्देन । अतः सिद्धमयं ग्रंथकप्रणेता वैदिकधर्मानुयायीति । पुनश्चाग्रेऽपि यत्र कुत्र विषयानुषंगादस्य बौद्धत्वारोपं निराकरिष्यामः । पूर्वस्मिन् श्लोके प्रज्ञामंगबलेन शमितवानिति यदुक्तं तत्र तदंतर्गतस्य शमितवानिति पदस्य सर्वदैव प्रज्ञाभूतोऽयं परमेश्वरो नित्यमेव शमितवान् न ते कदाचिदपि रोगास्तं प्रति जाताः । स एव परमात्मा सर्वेषामपि गुरुः "स एषः पूर्वेषामपि गुरुः कालेनानवच्छेदात्" इति योगसूत्रादित्याह । येनाश्विति । येन परमेश्वरेणाशु जगतोऽपि रागादयोऽपास्ताः स्वप्रकाशवशात् परमानंददानाच्च मिथ्यैव ते कृताः । असौ न जडो भवितुमर्हति । चेतनस्य सौगतसमये सर्वथाऽनभ्युपगमात् । बौद्धमतानुयायित्वमनेनापि निरस्तमस्य ग्रंथप्रणेतुः । तं चेतनं परमेश्वरमेकवैद्यं न द्वितीयस्तत्समो वैद्यस्तमेकमेवाद्वितीयमिति श्रुतेः । ननु महायानागमे आदिबुद्धस्येश्वरत्वग्रहणादीश्वरवादेनास्य बौद्धमतानुसारित्वं न

हीयते इति चेदनेनैव महात्मनाऽष्टांगहृदये हरिहरभजनमुक्तं तच्च महायान-समयेऽपि यतो नास्त्यतः स वैदिक एव। तस्माद्वैदिकमेतं परमेश्वरं वैद्यं शिरसा नमामीति तिष्कृष्टोऽर्थः। वैद्यागमज्ञांश्च पितामहादीनित्यनेन श्लोकचतुर्थपादेन मान्यप्रतिष्ठाप्रदानमुक्तम्। यतः "सत्यवादिनमक्रोधमध्यात्मप्रवणेंद्रियम्। यद्वृत्तिनिरतं शान्तं विद्यान्नित्यं रसायन" मिति वाक्यात्साक्षाद्रसायनस्वरूपास्ते मान्याः। अतस्तानपि नमामि।

एवं श्लोकद्वयेनात्र दर्शितो भिषगीश्वरः
सैव तट्टीकयाऽस्माभिर्लक्षितोऽलंदिवल्लभः ॥१॥

हरिः ॐ तत्सत् श्रीमत्सद्गुरुज्ञानेश्वरकृपाप्रसादनिर्मितायां भिषगिंद्र इचीप्रभायामष्टांगसंग्रहटीकायां द्वितीयः समुल्लासः।

अपूर्णम्

———

# ७

# मानसायुर्वेदः

## श्रीज्ञानेश्वरमाऊली समर्थ

### अथ श्रीमानसायुर्वेदः प्रारभ्यते

श्रीमज्ज्ञानेश्वरं वंदे गुरुमाळंदिवल्लभम्
वक्ष्ये जगद्धितार्थाय ह्यायुर्वेदं तु मानसम् ॥१॥
अस्य प्रणेता वै साक्षाद्भगवान् परमेश्वरः
सर्वभूतात्मसाक्षित्वादंतर्यमयाति श्रुतेः ॥२॥
भोगो जडत्वान्नो देहे शुचित्वान्नापि चात्मनि
तस्मादसौ मनोमात्रस्तस्य चोभयभागतः ॥३॥
आत्मनो ज्ञानरूपस्य विक्षेपः प्रथमं मनः
साऽस्य कारणं तद्धि तीव्रत्वाद्देहतामियात् ॥४॥
देहसंगात्सुखं दुःखं मनोमात्रं हि किं तु तत्
इत्युक्तं सांख्यभाष्ये तु वासिष्ठेऽपि निरूपितम् ॥५॥
सुखं दुःखं च भोगः स्यात् भोक्ताऽत्मप्रतिबिंबभाक्
सुखं तु द्विविधं प्रोक्तं भ्रमजं ज्ञानजं पुनः ॥६॥
यत्सुखं देहसंगेन तस्माद्रागः प्रजायते
रजोगुणः स विज्ञेयो लोभादीनां विवर्धकः ॥७॥
आत्मज्ञानसमाधानात्सौख्यं यदभिजायते
रागद्वेषविनिर्मुक्तं तद्वै सत्त्वमुदीरितम् ॥८॥
भावनाऽभावनाभ्यां वै भेदः स्यात्सत्वतूर्ययोः
तूर्यस्य साधनार्थे हि सत्वं स्यान्मूलकारणम् ॥९॥
तदारोग्यं परं शुद्धं कारणं धर्ममोक्षयोः

यद्दुःखं विषयेभ्यः स्यात्तस्माद्द्वेषः प्रजायते ॥१०॥
यो मोहो द्वेषरागाभ्यामुच्यतेऽसौ तमोगुणः
अत्रारोग्यं भवेत्सत्वं तदन्ये दोषसंज्ञिते ॥११॥
ताभ्यामेव तु तीव्राभ्यां दैहिको दोषसंचयः
रागादिरोगानित्याह वैद्येशो वाग्भटो यतः ॥१२॥
मनस्तापादेहतापस्तट्टीकायामुदाहृतः
कुतो वातः कुतः पित्तं कुतः श्लेष्मा भ्रमो ह्ययम् ॥१३॥
रागादिदूषितं चित्तं गदजालं तनोति हि
स्वप्नेऽपि वनिताभोगाज्जाग्रतो शुक्रदर्शनम् ॥१४॥
कटकेऽप्युरगाध्यासभयान्मृत्युर्भवेद्यतः
तस्मात्सर्वं मनोमात्रं श्रुतियुक्त्यनुभूतिभिः ॥१५॥
मन एव मनुष्याणां कारणं बंधमोक्षयोः।
बंधनं विषयासक्तं मुक्तं निर्विषयं स्मृतम् ॥१६॥
सर्वेषामेव रोगाणामधर्मः कारणं महत्
आरोग्यकारको धर्मो वैद्यशास्त्रेऽपि बोधितः ॥१७॥
धर्माधर्मौ मनोमात्रावष्टब्धत्वान्महामते
तस्माच्चित्तमशुद्धं हि तीव्रं चेद्दोषतामियात् ॥१८॥
तीव्राद्रागाद्भवेद्वातो द्वेषात्पित्तं प्रजायते
कफः संजायते मोहात्तमसोऽतिजडः स्मृतः ॥१९॥
सर्वेषामेव रोगाणां सत्संगतिरसायनम्
अष्टांगहृदये प्रोक्तं ततोऽप्यस्मन्मतं हितम् ॥२०॥
राजसास्तामसाश्चैव विकारा बहवः स्मृताः
तेषां संमिश्रणं तीव्रं रोगबाहुल्यतामियात् ॥२१॥
कामशोकभयाद्वायुः क्रोधात्पित्तमिति स्मृतिः
कामो रागः प्रसिद्धः स्याच्छोको भवति रागतः ॥२२॥

भयं तु रागहेतुत्वात् तस्माद्वातस्तु रागजः
क्रोधो द्वेषः प्रसिद्धो हि तस्मात्पित्तं भवेद्यदि ॥२३॥
सुसिद्धौ रागद्वेषाभ्यां दोषौ पवनपित्तकौ
दोषः कार्यं तु रागस्य द्वेषस्यापि भवेद्यदि ॥२४॥
मोहस्यापि कफः कार्यं तस्मादस्मन्मतं वरम्
आहारादिजयाच्चैव हींद्रियाणां जयः क्रमात् ॥२५॥
इंद्रियाणां जयाच्चैव क्रमाद्वै चेतसो जयः
रागद्वेषपरित्यागात् योगात्सत्वं प्रजायते ॥२६॥
आयुर्वेदो मानसोऽयं मुक्तये न तु भुक्तये
श्रीमज्ज्ञानेश्वरः साक्षात्सद्गुरुः करुणार्णवः
तत्प्रसादात्प्रवक्ष्येऽग्रे शास्त्रस्यास्य प्रविस्तरः ॥२७॥

हरि ॐ तत्सत् श्रीमत्सद्गुरुज्ञानेश्वरकृपाप्रसादे मानसायुर्वेदसंहितायां सूत्रस्थाने उपपत्तिनिरूपणं नाम प्रथमोऽध्यायः।

---

श्रीज्ञानेश्वरमाऊली समर्थ

द्वितीयोऽध्यायः

अथ सच्चिद्घनब्रह्मप्रतिबिंबसमान्विता
विक्षेपावृतिभेदेन प्रकृतिर्द्विविधा च सा ॥१॥
न जानामि परब्रह्मैतदावरणमुच्यते
तद्गुंठितं हि चैतन्यं जीव इत्यभिधीयते ॥२॥
सर्वसंसारबीजाख्याऽन्यथाभावप्रसारिणी
विक्षेपशक्तिश्चित्तं स्यात् जीवाभासस्तदाश्रितः ॥३॥

गुणत्रयात्मकं चित्तं वृत्तिभेदात्पुनर्द्विधा
मनः संकल्परूपं स्यात् बुद्धिः स्यान्निश्चयात्मिका ॥४॥

बुद्धिः सत्वप्रधानादालयप्रवृत्तिभेदेन द्विधा। आलयं चिच्छायोपेतमहंताध्यासभूतं तदेवात्मेति बौद्धाभास्कराश्च वदंति। तत्र बौद्धा क्षणिकमाहुः। तदसत्। तरुणेऽपि बालाहंतास्मृत्युपलंभादहं कदाचिदपि नासमिति स्मृत्यनुपलंभात्। स्थिरमेव तदिति भास्कराः। प्रवृत्तिमहंतागोचरामिदंतारूपां सर्वसंस्कारमंजुषां ममताध्यासरूपिणीं विद्यात्।

गृण्हात्ययुगपज्ज्ञानं तस्मादव्यापकं मनः
संस्कारसंग्रहत्वाद्धीर्व्यापिका मंजुषेव तु ॥५॥

सत्वमुख्यादालयात् बुद्धींद्रियाणि। रजःप्रधानात् कर्मेंद्रियाणि। तमःप्रधानात् भूतानि प्रसिद्धानि। तेषां भूतानां शब्दादयो गुणाः प्रवृत्तौ तिष्ठंति। ततो प्रवृत्तिरेव द्रव्यम्। भूतादीनि गुणमात्राणि। ते गुणा एव मनोऽवच्छिन्नाः प्रवृत्तौ संस्कारा भवंति। परमाणुसंज्ञे चैकस्मिन् प्रवृत्तिदेशे बहवः संघटिताः संस्कारास्तीव्रत्वात् द्रव्यरूपेण भान्ति। तत्र मनः शरीरांतर्वर्ति। बुद्धेस्तु व्यापकत्वात् बहिरपि स्थितिः। अत्रेयमुपपत्तिः। यद्यदिंद्रियैर्गृह्यते तत्तद्गुणरूपमेव दृश्यते। यथेदं रूपमयं स्पर्शोऽयं गंधोऽयं रसः। एतचतुष्टयमिलितमाम्रफलं गुणव्यतिरेकेण न पृथक् भाति। तदपि गुणसंस्कारानंतर्बुद्धिर्धारयतीति प्रत्यक्षमेतत्। संस्कारसजातीयतीव्रान् गुणान् बहिर्बुद्धिरेवैकत्र संगृण्हाति सजातीयत्वादित्यनुमंतव्यम्। मन इंद्रियोपचयात् बुद्धिरंतर्विज्ञेया। सा वृत्तिशब्देनाभिधीयते। शब्दादिगुणसंग्रहमंजुषा नित्यानुमेया बुद्धिर्बहिर्द्रव्यशब्देनाभिधीयते अत्राध्यासाचेतनं चालकम्। तस्यांतश्चालनमिच्छारूपम्। बहिश्चालनं क्रियारूपम्। चालनं तु प्रोक्तपदार्थयोगावियोगादिसंभावनम्। एतेषां जीवादिपदार्थानामाधारभूतमधिष्ठानभूतं वा चैतन्यमीश्वर इत्युच्यते। तस्मिन् सर्वशक्तित्वादिगुणा जीवकल्पिता यावदविद्या ते तिष्ठंति। जीवेच्छा-

वशेनानुमंतृत्वात् । स एव भगवान् अनुमंता जीववासनाक्रियाभ्यामुपचयरूपां शरीराद्याकृतिमनुमोदते । इच्छा हि रागद्वेषरूपा । तदनुसारिणी क्रिया चानुकूला प्रतिकूला । सुखं दुःखं च तत्फलम् । भगवतोऽनुमोदनमेव फलदातृत्वम् । तथापि भगवतोऽधिष्ठानत्वात् प्रकाशानभिभवोऽतस्तस्मिन्-अधिष्ठाने जीवारोपितधर्माः सात्विका एव भवितुमर्हंति । न तेषां परमेश्वर उपयोगः । तस्य शुद्धत्वान्नित्यतृप्तत्वात् । अतो जीवमेव ते भगवदाश्रयादनुगृण्हंतीति दयालुत्वं सिद्धमीश्वरस्य । तेन दयालुना सृष्टो बहुविधः कल्याणमार्गो वेदशब्देनाभिधीयते । सर्वांतर्यामित्वात्तेनैव सृष्टोऽयं मानसायुर्वेदोऽपि तद्गुणाननुद्योतयतु ।

हरिः ॐ तत्सत् श्रीमत्सद्गुरुकृपाप्रसादे मानसायुर्वेदसंहितायां सर्वचिंतानिरूपणं नाम द्वितीयोऽध्यायः ।

———

**श्रीज्ञानेश्वरमाऊली समर्थ**

**तृतीयोऽध्यायः**

**अथ कालश्च देशश्च द्रव्यं गुणस्तथा क्रिया ।**
**सर्वमेतन्मनोमात्रं तच्छृणुष्व महामते ॥१॥**

**नित्यानुमेयं यत् वस्तु तन्मनोमात्रमेव हि**
**भविष्यत्दर्शनं नास्ति यस्मादन्यानुमेयवत् ॥२॥**

**नित्यानित्यविभेदेन ह्यनुमानं खलु द्विधा ।**
**कदा यद्दर्शनं न स्यात् तद्धि नित्यमुदीरितम् ॥३॥**

यद्दर्शनमग्रे भविष्यतीति प्रत्ययावच्छिन्नमनुमानमनित्यं बोध्यम् । यथा पर्वते वह्निरस्ति धूमात् तत्र गत्वा च तत्प्रत्यक्षं भविष्यति । परमाण्वादीनां प्रत्यक्षं कदाचिदपि न भवतीति नित्यानित्यविवेकः ।

नित्यानुमेयः कालोऽयं मनसैवोपगम्यते
तथा ब्रह्मापि चेन्नैव मनःसाक्षित्वहेतुतः ॥४॥
देशोऽप्येवं मनोरूपः प्रत्यक्षं मानसं हि तत् ।
द्रव्यमेवं मनोमात्रं गुणनित्यानुमानतः ॥५॥

आदावंते चाप्रतीतेः कल्पिताः स्युर्गुणा अपि अत्यंतो मधुरो रसः कटुतामेति यथा शर्करा । प्रश्नोऽयमत्र किमिंद्रियज्ञानेन रसत्वमाहोस्वित् वस्तुतंत्रम् । आद्य इंद्रियमनोमात्रत्वान्मनोमात्रत्वं सिद्ध्यति ।अंत्ये कथं व्यभिचारः ।

स्पर्शो मनोऽनवस्थानाद्योगेऽपि ज्ञायते न चेत्
मनोमात्रं भवेत्सोऽपि श्वासः स्पर्शोऽधरे यथा ॥६॥
अत्यंतशीतलस्पर्शो बाधिर्यान्नोपगम्यते
तद्वदत्यंतमुष्णोपि मनो दुःखान्न गम्यते ॥७॥
सूक्ष्मः शब्दो श्रूयते नो श्रूयते नो महानपि
एवमेवात्र गंधोऽपि तस्मात्सर्वं मनोमयम् ॥८॥

मध्ये वस्तुनः सत्वाभ्युपगमेऽप्यादावंतेऽभावकाले मनोऽवशेषान्मध्येऽपि मानसं विना स्वातंत्र्येणानुपलंभात् सर्वे विषया मनोमात्राः । एवमिंद्रियाण्यपि तदवस्थानात् तन्मात्राण्येव । क्रिया तु सामग्र्याश्रयादिच्छया एव परिणाम इति स्पष्टम् । कारणमपि मनोमात्रम् । नित्यानुमेयत्वान्मानसप्रत्यक्षत्वाद्वा । कार्यस्य मनः कल्पितत्वात् कृते घटेऽस्य कुलालबुद्धिचातुर्यवत् सर्वथाबुद्धिचातुर्यान्मनोमात्रत्वमिति किमु वक्तव्यम् । कथं तर्हि सामग्रीजन्यत्वं

कार्यस्येति चेच्छृणु। मनः परमेश्वरमिच्छारूपेण प्रार्थयति। तदनुमोदनेन लब्धसामर्थ्यात् स्वावच्छिन्नप्रकृत्याकुञ्चनेन तीव्रचालनया शरीरादिरूपं तनोति। आत्मसुखस्पर्शोऽपि ब्रह्मज्ञानाभावात् स्वसृष्टावेव रागं करोति। तस्यामेव कोशकीटकन्यायेन निरुद्धं तिष्ठति। प्रथमं सत्वसामीप्यादिच्छारूपम्। रजःसामीप्यात् क्रियारूपम्। तमोविच्छेदाद्द्रव्यरूपमित्यवगंतव्यम्। अनेनैव क्रमेणादौ समष्टिमनसो ब्रह्मणः मानसा पुत्रा जाताः। तेषामिच्छातंत्रत्वात् ज्ञानित्वाच्च रागद्वेषजयात् प्रातिकूल्यानुकूल्याभावे रोगाभावः। पश्चाद्वासनावृद्धौ दक्षप्रजापतेर्मैथुनसृष्टिप्रचारः। इच्छामात्रेणेंद्रियस्थाननियमाभावात्। तदेव मानसरोगाविर्भावः। अस्यैव प्रजापतेस्त्रयोदशकन्यास्विच्छामात्रेण बहुरूपं कृत्वा मैथुनेन देवमनुष्यादि विविधाः प्रजाः सृष्टाः। तास्विंद्रियस्थाननियमः। तथापि केषांचिदक्षपादादीनां तपसा व्यभिचारः। तेनाऽधुनाऽपि मनोजयात् प्रबलप्रयत्नात् भौतिकसृष्टिव्यभिचारः शक्य इति सूचितम्। दृष्टेर्जीवसंकल्पमात्रत्वात् परमेश्वरे तदाग्रहाभावाच्च। तत्र सत्वगुणविशिष्टा देवाः। रजोगुणविशिष्टा मनुष्याः। तमोगुणविशिष्टाश्चेतरे। तदेव तासु प्रजासु धर्माधर्मौ निवेशितौ। सत्ववर्द्धको धर्मः। रजस्तमोवर्द्धकोऽधर्मः। सत्ववृद्धौ स्वातंत्र्यम्। तद्विपरीते पारतंत्र्यम्। तदा धर्मप्राधान्यान्न शरीररोगाणां कृतयुगे विशेषेण प्रचार आसीत्। पश्चाद्वासनावृद्धाविंद्रियलौल्येन धर्मस्यैकैकपादन्यूनत्यात् त्रेतादौ प्रजानां स्वातंत्र्यन्ह्रासः। बहुविधो रोगोद्भवश्च। सत्वप्रधानानामपि मनुष्याणां तमः प्रधानाः स्थावरा अप्यौषधिरूपेणार्तदशायामनुगृह्णंति। यतो मनुष्यैरेव मनोमात्रमिदं शरीरमन्नमात्रमेव कृतम्। ततोऽन्नकारणभूते भेषजगणे स्थावरेऽपि नरशरीरापेक्षया सत्वाधिक्यादोषधिरूपेणानुग्राहकत्वम्। वस्तुतस्तु धर्मेण यस्य मनःस्वातंत्र्यं योगबलाद्भवति तस्यैव सर्वौषधिरूपत्वात्द्रसायनरूपत्वाद्रोगरहितत्वं स्यात् देवादिवत्। एवं भौतिकायुर्वेदेऽष्टांगहृदयेऽप्युक्तम्।

सत्यवादिनमक्रोधमध्यात्मप्रवणेंद्रियम्
शान्तं सद्वृत्तिनिरतं विद्यान्नित्यं रसायनम् ॥१८०॥
शास्त्रानुसारिणी चर्या चित्तज्ञाः पार्श्ववर्तिनः
बुद्धिरस्खलितार्थेषु परिपूर्णं रसायनम् ॥१८२॥

वाग्भट रसायनाध्यायः

प्रथमश्लोके सद्गुणविशिष्टस्य पुरुषस्य रसायनत्वम् । द्वितीयश्लोके सत्वगुणविशिष्टस्य मनसो रसायनमिति बोध्यम् । तत्रैव सत्वगुणविशिष्टस्य भौतिकायुर्वेदेऽपि रसायनं फलति नान्यस्येत्युक्तेरन्वयव्यतिरेकाभ्या सिद्धमस्म-दीयमानसायुर्वेदवारिष्ठयम् । महांश्चायं श्रीज्ञानेश्वरमहाराजानां प्रसादः ।

हरि ॐ तत्सत् श्रीमत्सद्गुरुज्ञानेश्वरकृपाप्रसादे मानसायुर्वेदसंहितायां कालादिकार्यचिंतोत्पत्तिर्नाम तृतीयोऽध्यायः

श्रीज्ञानेश्वरमाऊली समर्थ

चतुर्थोऽध्यायः

नित्यानंदेंदिराकान्तं कल्याणामृतसागरम्
सद्गुरुं करुणामूर्तिं श्रीमज्ज्ञानेश्वरं नुमः ॥१॥
भगवंतं समाश्रित्य यतेत कुकृतेर्जये ।
औषधं सर्वरोगाणां श्रद्धया हरिसेवनम् ॥२॥
शरीरे जर्जरीभूते व्याधिग्रस्ते कलेवरे ।
औषधं जान्हवीतोयं वैद्यो नारायणो हरिः ॥३॥
सूर्यमंडलमध्यस्थमीशं कृष्णशिवात्मकम्
चिंतयेद्भक्तियोगेन सर्वव्याधिजिगीषया ॥४॥
आहारं च विहारं च राजसं तामसं त्यजेत्
सात्विकं सुखदं शुद्धं सेवेत प्रियभाषितम् ॥५॥

आयुः सत्वबलारोग्यसुखप्रीतिविवर्धनाः
रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्विकप्रियाः ॥६॥
राजसास्तामसाश्चैव त्यागार्थे हरिणोदिताः
कट्वम्ललवणात्युष्णतीक्ष्णरुक्षविदाहिनः ॥७॥
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः
यातयामं गतरसं पूतिपर्युषितं च यत् ॥८॥
उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम्
श्रद्धादानानि कर्माणि श्रीकृष्णेनोदितानि वै ॥९॥
सात्विकानि प्रकुर्वीत तदन्यानि त्यजेत् बुधः
दिवा रात्रौ प्रकुर्वीत भजनं शिवकृष्णयोः ॥१०॥
प्रसन्नचेतसः सौख्यमारोग्यं च भवेत्सदा
अप्रसन्नस्य चित्तस्य रोगाः सर्वे भवंति हि ॥११॥
रागद्वेषवियुक्तैस्तु विषयानिंद्रियैश्चरन्
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥१२॥
प्रसादे सर्वदुःखानां हानिरस्योपजायते
इत्याद्याः श्रुतयः स्पष्टास्तस्मात् सत्वं प्रसादयेत् ॥१३॥
विष्णोर्मायोद्भवं सर्वं पश्येच्चित्रमयं जगत्
वसंतादिषु जायंते यादृक् भूतानि वै तथा ॥१४॥
तथा चित्राणि लेख्यानि द्रष्टव्यानि मुहुर्मुहुः
तेभ्यो हृदि सुखं भाव्यं ऋतुव्याधिविनाशकम् ॥१५॥
अथवा या वसंतादौ कृता लीला व्रजप्रियैः
चेतसा ताश्चिंतनीया ऋतुव्याधिविनाशिकाः ॥१६॥
भविष्यंति च मे रोगा इति यत् गुप्तचिंतनम्
निदानं सर्वरोगाणामतस्तत् संत्यजेद्बुधः ॥१७॥

अप्रसन्नाः सदा केचित् केचिदर्धप्रसन्नकाः
सुप्रसन्नाः सदा केचित् लोके संति त्रिधा जनाः ॥१८॥
अप्रसन्नाः सदा ते तु कुरोगनिचयाश्रयाः
कदा त्वर्धप्रसन्नाश्च दामव्यालकटादिवत् ॥१९॥
सुप्रसन्नाः न रोगेणाभिभूयंते कथंचन
रागद्वेषविनिर्मुक्ता भीमभास दृढा यथा ॥२०॥
यन्नाम भवरोगस्य भेषजं परमं महत्
का कथा क्षुद्ररोगाणां तस्मात् ज्ञानेश्वरं भजेत् ॥२१॥
श्रीमज्ज्ञानेश्वरं देवं सद्गुरुं करुणार्णवम्
शिवकृष्णात्मकं वंदे भक्तवत्सलमीश्वरम् ॥२२॥

हरिः ॐ तत्सत् श्रीमन्मानसायुर्वेदसंहितायां सूत्रस्थाने दिनचर्यारात्रिचर्यार्तुचर्याभिः रोगानुत्पादनीयचिकित्सोपपत्तिर्नाम चतुर्थोऽध्यायः ।

---

षोडष यष्टिः संस्कृतरचना/प्रथम भाग मूल्य 20रु

---

।। सूत्रगंथाः ।।

---

1. अन्तर्विज्ञानसंहिता 233 सूत्राणि
2. ईश्वरदर्शनम् 301 सूत्राणि
3. समसूत्री 15 सूत्राणि
4. दुर्गातत्त्वम् 73 सूत्राणि
5. काव्यसूत्रसंहिता 89 सूत्राणि
6. शिशुबोधव्याकरणम् 80 सूत्राणि
7. न्यायसूत्राणि 37 सूत्राणि
8. न्यायसूत्र विवरणम्
9. एकादशीनिर्णयः 34 सूत्राणि
10. पुराणमीमांसा 438 सूत्राणि

---

।। भाष्यग्रंथाः ।।

---

11. आगमदीपिका
12. शास्त्रसमन्वयः 100 श्लोकाः
13. युक्तितत्त्वानुशासनम्
14. षड्दर्शनलेशसंग्रहः
15. तत्त्वबोधः

---

।। संस्कृत पत्राणि ।।

---

- सप्तमयष्टिः/नवपत्राणि/पृष्ठसंख्या 82/मूल्य 5 रु.
- द्वादशयष्टिः/अष्टपत्राणि/पृष्ठसंख्या 26/मूल्य 5 रु.

---

श्री ज्ञानेश्वर मंदिर, दहिसाथ, अमरावती, विदर्भ.

# ८

# भक्तितत्वविवेक

## श्रीज्ञानेश्वर माऊली समर्थ

### अथ भक्तितत्वविवेक आरभ्यते

नमामि परमात्मानं परमानंदविग्रहम् ।
आलंदिवल्लभं देवं श्रीमज्ज्ञानेश्वरं गुरुम् ॥१॥
श्रीमान् ज्ञानेश्वराचार्य उमा माता शिवः पिता ।
पतिः कृष्णो राधिकाद्या भगिन्यो गोपिका मम ॥२॥
पंचायतनमित्येतत् हृद्यास्थाप्य प्रपूज्य च ।
प्रणम्य बालबोधाय भक्तितत्वं विविच्यते ॥३॥
क्वाहं मंदमतिः क्वायं भगवद्भक्तिवारिधिः ।
तथापि सारमादाय किंचिदस्मिन्निधीयते ॥४॥
धर्मार्थकामकैवल्यभक्त्याख्येषु च पंचसु ।
पुमर्थेषु पुमर्थो हि मुख्यो भक्तिर्मतं मम ॥५॥
पंचमः पुरुषार्थो हि मुख्यो भक्तिरिति श्रुतिः ॥
चहुं पुरुषार्थां शिरीं । भक्ति जैसी (ज्ञाने. अ. ओ.)
धर्मार्थौ साधनेनैव पुरुषार्थाविति स्थितिः ॥६॥
कामः पुमर्थाभासश्चापवर्गो भक्तिसेवकः ।
तथा च शास्त्रम् । "वासुदेवे भगवति भक्तियोगः प्रयोजितः
जनयत्याशु वैराग्यं ज्ञानं यत्तदहैतुकम्" ॥ (भाग.)
सर्वेषामप्युपायानां भक्तिरेवाद्यकारणम् ॥७॥
भक्तिरेव फलं चांत्यं भक्तिर्मध्येऽप्यनुस्युता ।
ततोऽन्ये भक्तिसापेक्षा ह्युपायाः सर्व एव हि ॥८॥

अनपेक्षा हरेर्भक्तिः परमानंदरूपिणी ।
यावन्नानुग्रहः साक्षात् जायते परमेश्वरात् ॥९॥
तावन्न सद्गुरुः कश्चित् सच्छास्त्रं वापि नो लभेत् (योगवासिष्ठ)
पृच्छामि त्वां धर्मसंमूढचेत इति पार्थवाक् ॥१०॥
पार्थः कृष्णसखस्तस्माद्भक्तिर्धर्मस्य कारणम्
स वै पुंसां परो धर्मो यतो भक्तिरधोक्षजे
इत्यादिशास्त्रवाक्यैः स्यात् भक्तिर्धर्मफलं पुनः ॥११॥
ईश्वरप्रणिधानाद्वेत्येवं पातंजलोक्तितः
योगस्य कारणं भक्तिश्चार्यपुत्रोक्तितः फलम् ॥१२॥
"योगिनामपि सर्वेषां मद्गतेनांतरात्मना
श्रद्धावान् भजते यो मां स मे युक्ततमो मतः" (गीता)
भक्तिर्जनित्री ज्ञानस्येति वाक्याज्ज्ञानकारणम्
भक्तिर्ज्ञानफलं च स्यादार्यपुत्रोक्तिमानतः ॥१३॥
"ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्" (गीता)
"यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु
न्यूनं संपूर्णतां याति सद्यो वंदे तमच्युतम्"
इति वाक्यात् हरेर्भक्तिसाद्गुण्ये सफलाः क्रियाः
नियमेषु क्रियायोगे चेश्वरप्रणिधानकम्
प्रोक्तं पातंजले तस्माद्योगे भक्तिः समन्विता ॥१४॥
"ज्ञानयज्ञेन चाप्यन्ये यजंतो मामुपासते
एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम्"
इति कान्तोक्तितो भक्तिर्ब्रह्मज्ञाने समन्विता
एवमन्वयतः प्रोक्ता सर्वेषां भक्त्यधीनता ॥१५॥

व्यतिरेकेण वक्ष्यामि भक्तिश्रैष्ठ्यमनुत्तमम्
सापेक्षता ह्युपायानां भक्तेरप्यनपेक्षता ॥१६॥

"धर्मः स्वनुष्ठितः पुंसां विष्वक्सेनकथासु यः
नोत्पादयेद्यदि रतिं श्रम एव हि केवलम्" (भागवत)
एवं भक्तिं विना ख्यातं वृथात्वं सर्वकर्मणाम्
वैयर्थ्यमपि योगस्य प्राह भक्तिं विना प्रियः ॥१७॥

"युंजानानामभक्तानां प्राणायामादिभिर्मनः
अक्षीणवासनं राजन् दृश्यते पुनरुत्थितम्" (श्रीभागवतम्)
विज्ञानस्यापि वैयर्थ्यमुद्धवायाह केशवः
देवा अपि स्वयं प्राहुर्दशमे गर्भसंस्तुतौ ॥१८॥

"येऽन्येऽरविंदाक्ष विमुक्तमानिनस्त्वय्यस्तभावादविशुद्धबुद्धयः
आरुह्य कृच्छ्रेण परं पदं ततः पतंत्यधो नादृतयुष्मदंघ्रयः"
"तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः
न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह"
अन्वयव्यतिरेकाभ्यां भक्तिश्रैष्ठ्यं मयेरितम्
सर्वधर्मानतस्त्यक्त्वा श्रीहरिं शरणं व्रजेत् ॥१९॥

भक्तद्रोहे भक्त्यभावे भक्तेश्चातिक्रमे कृते
अशक्ये वा सुशक्ये वा सर्वथा शरणं हरिः"

"पै रंक एक आडलेपणें । काकुळती धांव गा धांव म्हणे
तरी तयाचिये ग्लानीं धावणे । काय न घडे मज"
आणि भक्ताहि तेचि दशा । तरी भक्तीचा सोस कायसा
म्हणवुनी हा ध्वनी ऐसा । न वाखाणावा
माझिया भक्ता । आणि संसाराची चिंता
काय समर्थाची कान्ता । कोरान्न मागे

तैसे ते माझे। कलत्र हे जाणिजे
कायसेनिही न लाजे। तयाचेनि मी ”
“ यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ
तस्यैते कथिता ह्यर्थाः प्रकाशंते महात्मनः (श्वेताश्वतर)
“ यं सर्वे देवा नमंति मुमुक्षवो ब्रह्मवादिनश्च ”
इत्यादि श्रुतिभिर्भगवद्भक्तेर्मुख्यपुमर्थता
सलक्षणां च तां वच्मि ज्ञानेश्वरकृपालवात् ॥२०॥

हरिः ॐ तत्सत् श्रीमत्सद्गुरुज्ञानेश्वरकृपाप्रसादे गद्यपद्यप्रबंधे भक्तितत्वविवेके भक्तिमहात्म्यानिरूपणं नाम प्रथमः परिच्छेदः

—*—

## अथ द्वितीयः परिच्छेदः

उमार्धविग्रहं वंदे सर्गस्थित्यंतकारणम्
ज्ञानराजस्वरूपेण यो मे हृदि विराजते ॥१॥
कोऽधिकारी भवेद्भक्तेः किं स्वरूपं क आश्रयः
किं तत्प्रयोजनं चेति द्वितीये प्रोच्यते मया ॥२॥
ईश्वरास्तित्वधीर्यस्य तस्य भक्त्य् धिकारिता
स ब्राह्मणो नृपो वैश्यः शूद्रो वाऽप्यंत्यजोऽस्तु वा ॥३॥
“ किरातहूणांध्रपुलिंदपुल्कसा आभीरकंका यवनाः खशादयः
येऽन्ये च पापा यदुपाश्रयाश्रयाच्छुद्ध्यंति तस्मै प्रभविष्णवे नमः ”
अन्वयं भगवानाह सर्वेषां भक्त्यधिकृतेः
व्यतिरेकं च प्रल्हादः प्रोक्तवान् नृहरिस्तुतौ ॥४॥

"भक्तिः पुनाति मन्निष्ठात् श्वपाकानपि संभवात्"

"विप्राद्द्विषड्गुणयुतादरविंदनाभपादारविंदाविमुखात् श्वपचं वरिष्ठम्"

ननु चोपासना भक्तिः श्रौतकर्मसमुच्चिता

निरपेक्षा कथं कस्मात्सर्वेषां तदधिक्रिया ॥५॥

उपासना हि सा न स्याद्भक्तिः पापवतामपि

पुनाति न तथा धर्मस्तस्माद्भक्त्यसमुच्चयः ॥६॥

उपासनाभक्तिभेदं लघुभागवतामृते

संप्राह जीवकाचार्यः स सम्यक्गवलोक्यताम् ॥७॥

ईशावास्ये तु या विद्या प्रोक्ता कर्मसमुच्चिता

साऽऽचार्यैश्चान्यदेवानां नेशभक्तिरुदाहृता ॥८॥

तस्मान्नानोपासनाभ्यो हरिभक्तिर्विभिद्यते

यः सर्वधर्मान् संत्यज्य तां भजेत्साऽपि पाति तम् ॥९॥

सर्वेषामपि वर्णानां परमात्मैकसंश्रयात्

स्वभक्तेरधिकारं च स्वयं प्राह प्रियो मम ॥१०॥

"मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः

स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यांति परां गतिम्" ॥११॥

एवं साधनभक्तौ चेद्वर्णभेदो निराकृतः

आर्यपुत्रपदैस्तस्मात् फलभक्तौ कुतो भिदा ॥१२॥

किं प्रमाणं भवेद्भक्तौ शाब्दं मानमिति श्रुणु

ध्यानं चैव रसानंदो मानं ज्ञानं च साक्षिकम् ॥१३॥

शब्दोत्था चेतसो वृत्तिः साक्ष्युन्मुखतया स्थिता

गृण्हाति परमानंदं तद्भक्तौ मानमुच्यते ॥१४॥

तल्लक्षणानि वाच्यंते ह्याचार्यैर्मतभेदतः ।

निष्कर्षः किंतु सर्वेषां प्रेम भक्तिरिति स्थितिः ॥१५॥

नानामतभेदादेकमताचेति नारदीयाभ्याम्
सूत्रपदाभ्यां स्पष्टं सर्वत्र प्रेम भक्तिलक्ष्मेति ॥१६॥

वेदान्तिनः परानंदं रसं काव्यविदो जगुः
सांख्याः सत्वमिति प्राह रागं नैय्यायिकास्तथा ॥१७॥

वेदान्तसंमतत्वादाग्नेये तन्निरूपितम्
एकोनचत्वारिंशदधिकत्रिशतके स्फुटम् ॥१८॥

"अक्षरं परमं ब्रह्म सनातनमजं विभुम्
वेदान्तेषु वदंत्येकं चैतन्यं ज्योतिरीश्वरम्" ॥१९॥

"आनंदः सहजस्तस्य व्यज्यते स कदाचन
व्यक्तिः सा तस्य चैतन्यचमत्काररसाव्हया"
(अग्निपुराण अ. ३३९ श्लो १।२)

काव्यज्ञानां प्रेमलक्ष्म प्रोक्तं प्रेमरसायने
श्लोकश्चतुर्थस्तत्रस्थः प्रमाणं त्वत्र लिख्यते ॥२०॥

रसो ब्रह्मेति सिद्धान्तः स्थाय्युपाधिवशादयम्
नदीतडागप्रमुखैर्नास्वानिव विभिद्यते (प्रेमरसायन श्लो. ३।४)

सत्वं प्रीत्यात्मकं सांख्ये संप्रोक्तं कारिकागणे
स्पष्टीकृतं पुनस्तच्च सम्यक् प्रेमरसायने ॥२१॥

चित्तांभोधेः समुत्पन्नाः सत्ववारिविलासिनः
दृष्टिः परिचयो हार्दं प्रेमेत्यूर्मिपरंपराः

मनोऽणुरूपमनवयवमतो न विषयाकृतिर्भवेदिच्छा
ऽत्मगुणस्तस्माद्रागाख्यं प्रेमाऽप्यात्मनोऽक्षपादमते

आत्माभिन्नफले रागः प्रेम मीमांसका जगुः
तद्धर्मैकावसायित्वाद्द्विधावेव प्रतिष्ठति ॥२२॥

वेदान्तसांख्यसाहित्यमतेषु प्रेमकारणम्

उपादानं भवेच्चित्तमात्मा न्यायमते तथा ॥२३॥
उद्‌धृताग्नेयवाक्यस्य भावोऽयं वृत्त्युपाधितः
व्यज्यते परमानंदः सा व्यक्तिर्नृत्यनावृता ॥२४॥
प्रेमरसाव्हया भक्तहृदि नंदसुताव्हया
अनध्यस्तविवर्तोऽतो भक्तिर्नित्येति गीयते ॥२५॥
विदेहमुक्तौ सहजा जीवन्मुक्तौ स्फुटा भवेत्
पदमेतदतः श्लोके व्यज्यते स कदाचन ॥२६॥
आत्मसाक्षात्कृतेः प्रेम्णो लयः क्वापि न संभवेत्
इदमेव परं प्रेम मुख्या भक्तिरिति स्मृता ॥२७॥
भवेदात्मगुणोऽप्येतदनध्यस्ताविवर्ततः
वृत्तिकार्ये वोपचारादनध्यस्ताविवर्ततः ॥२८॥
यदुक्तं परमं प्रेम व्यक्तं साहित्यसांख्ययोः
अनित्योपहितं तद्वा सत्वोपाधिस्वरूपकम् ॥२९॥
सम्यगुक्तमिदं द्वेधा प्रेम प्रेमरसायने
विश्वेश्वरेण मुनिनास्मदनुग्रहहेतवे ॥३०॥
"उच्छ्वलद्‌भावकल्लोलः शृंगारादिरसाकरः
जयत्यपारो गंभीरश्चिरं प्रेममहार्णवः" (प्रेमरसायन श्लो. )
संचारिणोऽनुभावाश्च विभावा ये रसेष्वपि
यत्तेषामाकरीभूतं सौख्यं प्रेम तदुच्यते ॥३१॥
प्रेमशून्ये नो रसानामाविर्भावो यतः क्वचित्
कालरागादिनाश्यत्वं न हि प्रेम्ण्युपलभ्यते ॥३२॥
आत्माभिन्नपदार्थेषु द्वेषादिवृत्तिसंभवः
आत्मन्येव भवेत्प्रेम तस्मात्तन्नित्यमुच्यते ॥३३॥
प्रेम्णि सत्वे नोद्‌भवेच्च यतो वृत्तिर्विरोधिना
अथवोद्‌भूतया वृत्या न प्रेम्णोऽभिभवो यतः ॥३४॥

ततोऽपारश्च गंभीरः सदा प्रेममहार्णवः
अनित्यरसभिन्नोऽसौ सद्रसोभक्तिलक्षणः ॥३५॥
द्रुते चेतसि यो बाह्यसंस्कारः स्थायिलक्षणः
उद्भूतः स रसो ज्ञेय इत्याहुः काव्यवेदिनः ॥३६॥
अहंभिन्नात्मसंस्कारो द्रुते चेतसि यो भवेत्
फलभिन्नतयोद्भूतः स रसो भक्तिलक्षणः ॥३७॥
भक्तिः सद्भिर्द्विधा प्रोक्ता परा गौणीति भेदतः
परा भक्तिरियं शुद्धा प्रेमसागरलक्षणा ॥३८॥
उपाधिरूपं यत्प्रेम रसज्ञा रसकारणम्
प्राहुः प्रेमव्यंजकं तत् गौणमित्युच्यते मया ॥३९॥
तदप्युक्तं विश्वनाथैः सम्यक् प्रेमरसायने
यमुपाधिं समाश्रित्य रस आद्यो निगद्यते ॥४०॥
तमुपाधिं बुधोत्तंसः प्रेमेति परिचक्षते
स उपाधिः सत्वरूपः सांख्योक्तप्रीतिलक्षणात् ॥४१॥
बहिरंतः स्वरूपेण पुनर्द्वेधा विभिद्यते
बाह्योऽपि द्विविधः प्रोक्तः श्रौताश्रौतविभेदतः ॥४२॥
अश्रौतस्त्विह कान्तादिश्चित्तसंस्कारकारणम्
श्रौतोऽर्चालिंगनोऽगादिः गौणीभक्तेस्तु कारणम् ॥४३॥
द्वेधैवं भक्तिरुद्दिष्टा प्रोच्यतेऽत्राश्रयक्रमात्
विनाश्रयं प्रेमवृत्तिर्महोन्मादस्य कारणम् ॥४४॥
उच्छलंतो यतो भावास्तरगाः प्रेमसागरात्
[१]भावेष्वेव विभावः सोद्दीपाश्रयाभिदा द्विधा ॥४५॥
आश्रयोऽपि द्विधा प्रोक्तः सोपाधिर्निरूपाधिकः
सोपाधिको द्विधा प्रोक्तो बहिरंतर्विभेदतः ॥४६॥

१ भावेष्वेव विभावोसावाश्रयोद्दीपतो द्विधा—पाठभेदः

बाह्यः श्रौतस्तु कान्तादिस्तत्संस्कारो द्रुते हृदि
स्थायिभावसंज्ञो ह्याश्रयोऽन्तस्तु मनोमयः ॥४७॥

न हि बाह्यप्रपंचोऽयं कदापि रसदो भवेत्
ईशकल्पितहेतुत्वात्सर्वसाधारणत्वतः ॥४८॥

विनाऽसाधारणं वस्तु जीवे न रसदं भवेत्
भोगहेतुस्ततो जीवप्रपंचः कल्पनामयः ॥४९॥

राजसोऽप्यात्मसान्निध्यादीप्तसत्वस्थकारणम्
विद्यारण्यादयः प्राहुः सुखदा स्त्री मनोमयी ॥५०॥

" चित्तद्रव्यं हि जतुवत् स्वभावात् कठिनात्मकम्
तापकैर्विषयैर्योगे द्रवत्वं प्रतिपद्यते ॥४॥

कामक्रोधभयस्नेहहर्षशोकदयादयः
तापकाश्चित्तजतुनस्तच्छान्तौ कठिनं तु तत् ॥५॥

मूषासिक्तं यथा ताम्रं तन्निभं जायते तथा
घटादि व्याप्नुवच्चित्तं तन्निभं जायते ध्रुवम् ॥२१॥

व्यंजको वा यथा लोके व्यंग्यस्याकारतामियात्
सर्वार्थव्यंजकत्वाद्धीरर्थाकारा प्रदृश्यते ॥२२॥

द्रुते चित्ते विनिक्षिप्तः स्वाकारो यस्तु वस्तुना
संस्कारवासनाभावभावनाशब्दभागसौ " ॥६॥ " ( भक्तिरसायन )

मायावृत्त्यंतर्गतो यः क्षोभयित्वा तु मानसम्
स्वमालंबते पश्चात्स चोद्दीपनलक्षणः ॥५१॥

स्मृतावाविर्भवेच्चित्ते यः पूर्वसदृशः पुनः
दृश्याकारस्वरूपस्तं विदुरालंबनं बुधाः ॥५२॥

१ रत्यादिस्थायिनि व्यक्ते भवेत्सह्यंतराश्रयः—पाठभेदः

"द्रवतायां प्रविष्टं सत् यत् काठिन्यदशां गतम्
चेतः पुनर्द्रुतौ सत्यामपि तन्नैव मुंचति" ॥७॥ (भक्तिरसायन)

कुंभगे सलिले वस्तु नभोभासांकितं यथा
द्रुतचित्तगतं वस्तु ब्रह्माभासांकितं तथा ॥५३॥

रत्यादिभिर्युतः स्यायीभूस्तुसंस्कार उच्यते
आनंदाभासांकितत्वात् व्यक्तश्च रसतामियात् ॥५४॥

चिदाभासांकितं ज्ञानमिति दृश्यरसस्थितिः
सर्वदैवात्मसान्निध्याद्द्रुते हृदयेऽपि तत् ॥५५॥

बाह्योपाधिगुणीभूतं मानसोद्दीपकं यदा
क्षणमुत्थापयेत्सत्वं रसोद्भूतिर्भवेत्तदा ॥५६॥

बाह्यकान्तादावपि स्यात्सामान्यं सुखचिद्घनम्
कार्याकार्यतया भेदेऽप्यस्त्यविद्यावृतं स्वतः ॥५७॥

मेयं ताच्चित्तसंस्कारिभूतकान्तादिमानतः
गुणद्वयतिरोधाने वृत्त्या सत्वस्थया क्षणम् ॥५८॥

अज्ञातज्ञापकत्वाद्धि प्रमाणस्य प्रमाणता
मानस्य स्मृतिभिन्नत्वात्तत्वातत्वं तु नो जडे ॥५९॥

ततोऽस्ति परमं ब्रह्माल्पसत्वोद्भवहेतुतः
सुखरूपमिति ज्ञानमनुमानं परोक्षतः ॥६०॥

एवं देहमनः प्राणादिभ्य आत्मविवेचनात्
ब्रह्मज्ञानं भवेद्यत्तत्परोक्षं चानुमानिकम् ॥६१॥

अद्रुते काचपात्रेऽपि भास्वानाभासते यथा
स्वच्छत्वादद्रुते चित्ते भासको भासते तथा ॥६२॥

अद्रुते चेतसि ज्ञानं ततस्तद्गर्वहारकम्
न भवेत्तु,द्रुते प्रेम ततस्तद्गर्वहारकम् ॥६३॥

हर्षादिषु हृदो यैः स्याद्विकारैः सात्विकैर्द्रवः
स एव गौणं प्रेम स्यात् सत्वकल्लोळलक्षणम् ॥६४॥
श्रौतबाध्यगुणीभूतसंस्कारोद्दीपकोत्थया
सत्वद्रुत्या तु यत्सौख्यमाश्रयस्तदधिक्रियाः ॥६५॥
तद्ध्यानेनाप्यवाभ्यासवन्हिना सत्वसंहृतिः
तदा संजायते विद्यावच्छिन्नाविष्कृतिर्हरेः ॥६६॥
तदेवालंबनं मुख्यं प्रेमभक्तिमताम्हि
लावण्यपुण्यकारुण्यप्रभृत्युद्दीपनं वरम् ॥६७॥
येऽन्ये नाना विकाराः स्युः सात्विका व्यभिचारिणः
व्याकुळत्वाद्यानुभावास्तुष्टस्तैः पोषितः प्रियः ॥६८॥
स हि भक्तिरसौ देवो स ह्यहंकारसंहृतौ
स्वस्य भक्तोऽप्यनन्यः स्यादद्वैतं मधुरं त्विदम् ॥६९॥
विदेहकैवल्यवतामपीश्वरे लयो महद्भिः मुनिवेदितो यतः
न शुद्धचैतन्यमये ततः सदा हरौ रतिर्मेऽस्त्वथ जीविते मृतौ ॥७०॥
अद्रुते चेतसि ज्ञानं जातं भक्तिं विना नहि
स्वानंददां ततो भक्तिं जीवन्मुक्तियुतां श्रय ॥७१॥
श्रौतोपाधिस्थायिभावे प्रिये गौणी रतिर्भवेत्
आत्मप्रेमविवर्ताख्ये तरंगेऽजे रतिः परा ॥७२॥
अश्रौतोपाधिसंस्कारजन्यादपि रसात्स्मृतिः
चितेः किंत्वनुमेयत्वात् सहजा रसहा च सा ॥७३॥
स्वल्परसाश्रयं चित्तं श्रयेदनुमितिं यदा
तदोदासीनतामेति विचाराहंकृतेर्वशात् ॥७४॥
वाक्याद्यदपि विज्ञानं जायतेऽज्ञाननाशकम्
तथापि सुखदं तत्स्याद्भक्तितो नानुमानतः ॥७५॥

वाक्यसंस्कारविज्ञानात्संसारासक्तिमुत्सृजेत्
भावयेद्भगवद्भक्तिं मुदा भागवतैः सह ॥७६॥

इदं कान्तादितो जातं सुखमस्ति ममात्मनः
इति तर्कवशात्तत्र तुच्छदृष्टिः प्रजायते ॥७७॥

तथापि सुखलाभोऽपि न भवेत्सुरतं विना
अतः कृष्णपदप्रेम्णा मनो हि द्रवतां नयेत् ॥७८॥

इदं गर्भस्तुतौ स्पष्टमुक्तं वृंदारकैरपि
संश्रुण्वंतु महान्तस्तत्रत्यैषा सात्वती श्रुतिः ॥७९॥

"सत्वं न चेद्धातरिदं निजं भवेद्विज्ञानमज्ञानभिदापमार्जनम्
गुणप्रकाशैरनुमीयते भवान् प्रकाशते यस्य च येन वा गुणः ॥

(भागवत स्कं १० अ. २ श्लो ३५)

अत्र श्रीधरस्वामिचरणाः—

त्वय्यंबुजाक्षेत्यादिना श्लोकत्रयेण भगवद्भक्तानामेव मोक्षो नान्येषामित्युक्तम्। तत्र कर्मफलं भक्तिं विना माभूत् मोक्षस्य तु ज्ञानैकसाध्यत्वात् किं भक्त्येति सानुशयान्प्रत्याहुः। सत्वं न चेदिति। हे धातः इदं सत्वं निजं तव वपुर्न भवेच्चेत्तर्हि विज्ञानं विशिष्टमपरोक्षं ज्ञानं न भवेदित्यनुषंगः। कथंभूतम् अज्ञानभिदापमार्जनम् अज्ञानं च तत्कृता भिदा च तयोरपमार्जनम् निवर्तकम्। यद्वा अज्ञानं भिनत्तीत्यज्ञानभित् विज्ञानं मार्जनम् नाशमाप प्राप्तमेवेति। ननु जडानां बुद्ध्यादीनां यतः प्रकाशस्तत् ब्रह्मेति विज्ञानं भवेदिति चेन्न। गुणप्रकाशैः गुणावच्छिन्नैः प्रकाशैर्भवान् सर्वसाक्षी पूर्णः केवलमनुमीयते कल्प्यते न तु साक्षात्क्रियते इत्यर्थः। अनुमानप्रकारमाहुः। प्रकाशते यस्य च येन वा गुणः साक्षीत्येवम्। येन वा बुद्ध्यारूढेन प्रमात्रा बाह्यो गुणः प्रकाशते इत्यनुमीयते इत्यर्थः। शुद्धसत्ववपुषि त्वयि सेव्यमाने तु तदाऽन्तःकरणे स्वत्प्रसादेन साक्षात्कारो भवेदिति भावः।

कथमीशवपुर्भाति सत्वेन स्वेच्छयाऽथवा
भूतकार्यं तु तन्न स्यात् रज्जुबंधनशून्यतः ॥८०॥
यो रज्जुबंधनाभावः श्रीकृष्णेऽसौ न योगजः
नः कया योगसिद्धयाऽपि संकोचोऽण्वंत एव हि ॥८१॥
कार्यं भूतैः समारब्धं न त्रिभागं विना तु तत्
अण्वंतमेति संकोच इति नैय्यायिका जगुः ॥८२॥
विकारात् भूततन्मात्राहंकारादि क्रमं विना
प्रकृतौ नैव संकोचः सांख्यशंका ततो नहि ॥८३॥
न दृष्टा महिमासिद्धिर्मात्रा नाप्यणिमा पुनः
बालमेव हरिं मत्वा बंधयत्नवती स्म सा ॥८४॥
नासीदसौ दृष्टिबंधो दामसंख्याविजानताम्
यदीयं स्याद्धरेर्माया तदा नो भूतकार्यता ॥८५॥
महतोऽप्यस्ति संकोचोऽण्वंतश्चेत्त्वंमभत्रः
मानं नो मानतामेति ततस्ते वचनं वृथा ॥८६॥
देवदेहो भवेत्तस्मात्सत्वेन स्वेच्छयाऽथवा
आद्ये सुखमयं तत्स्यात् द्वितीयेऽपि तथैव हि ॥८७॥
सर्वेष्वपि पुराणेषु श्यामसुंदररूपिणी
प्रोक्ता कृष्णतनुर्दीव्या शैवी वा शुक्लरूपिणी ॥८८॥
अतः कृष्णपदस्नेहद्रवीभूतमनोवशात्
गोविंदं परमानंदं साक्षात्कुर्वंतु साधवः ॥८९॥
ननु प्रियोत्तमश्चात्मा देवाद्वित्तात्सुतादपि
श्रोतव्योऽभ्यासितव्यश्च स एवेति श्रुतेर्वचः ॥९०॥

१ दुसरा पाठ—सा बंधयत्नमकरोत् विशयेशं शिशुं मत्

सत्यं तथापि कः सोऽत्मा[2] ह्यहंकारोऽन्य एव वा
तच्चप्रत्ययवैयर्थ्यादाद्यो नैव तु संभवेत् ॥९१॥
अहंकारः सदास्माकं गोचरः सुप्तिगो न चेत्
माभूत्तत्राप्यसौ न स्यात्सामान्याद्विधिगोचरः ॥९२॥
अज्ञातं सद्विशेषं यत्तच्चेद्विधिगोचरम्
यदा प्रेयानहंकारः श्रोतव्यादिविधिर्वृथा ॥९३॥
देहादिभ्यो विविक्तोऽहं मन्यसे विधिगोचरः
लिंगदेहं विना तस्मिन् विधिगोचरता कुतः ॥९४॥
सत्वेऽपि लिंगदेहस्य जल्पस्येवं तदा शिशो
संभवेत्कर्तृकर्मत्वं यत्सूत्रेण निराकृतम् ॥९५॥
कर्मकर्तृव्यपदेशात् ज्ञेयो देवो न जीवकः
यदप्यात्माध्यासभाष्ये ह्यस्मत्प्रत्ययगोचरः ॥९६॥
वाक्यवृत्तौ तदर्थोऽपि भाष्यकृद्भिर्हि वर्णितः
अस्मत्प्रत्ययसिद्धोऽपि तदालंबनमेव सः ॥९७॥
आलंबनतया भाति योऽस्मत्प्रत्ययशब्दयोः
अंतःकरणसंभिन्नबोधः स त्वंपदाभिधः ॥९८॥
अतश्चालंबनाभासोऽहं चिदाभास एव हि
फलवर्जितसद्वृत्तावात्मानंदस्तु गोचरः ॥९९॥
अहंताविलयाद्भातीदंतेव परमेश्वरः
सर्वं निवेदयेत्तस्मिन् स हि जीवस्य जीवनम् ॥१००॥
जीवे प्रियत्वहेतुत्वात् श्रुत्या स ह्यनुमापितः
उपदिष्टः पुनश्चैव विधिवाक्यैर्यथाक्रमम् ॥१०१॥

---

२ अकारात्परस्य विसर्जनीयस्य ऊः क्वचिद्भवति गूढः आत्मा गूढोत्मा इत्यादि पृषोदरत्वादित्यपि साधु (सारस्वते)

ननूपदेशसाहस्त्र्यामीशः स्वत्वेन वर्णितः
स्वभिन्नत्वे वेदवाक्ये विरोधोऽपि प्रदर्शितः ॥१०३॥

सत्यं तथापि तत्सर्वं चिदानंदात्मतापरम्
नाहंकारपरं किंचित् फलधर्मादिदोषतः ॥१०३॥

"विशेषाचेनि नांवें । आत्मत्वहि न साहवे । किंबहुना न व्हावे । कोणीच यया" (अमृतानुभव अ. २)

"मिथ्यावादाची कुटी आली । ते निवांताचि साहिली । विशेषाहि दिधली । पाठी जेणें" (१०५ अमृ. अ. ७)

"एवं विशेष सामान्य । दोहो नातळे चैतन्य । ते भोगिजे अनन्य । तेणेसी सदा" (अमृ. अ. ५ ओ. ५२)

इत्यादि वेदवाक्यानि तेषामर्थो निरूप्यते
अहंग्रहोऽपि नैवात्मा कषायाद्याश्रयत्वतः ॥१०४॥

शून्यं जानात्यहंकार आत्मा तस्यापि चाश्रयः
कुतोऽतः शून्यतावादस्तस्मिन् सर्वसुखार्णवे ॥१०५॥

स्यादेतत्किंतु सामान्यसत्तामात्रं भवेदसौ
नैवं सामान्यचैतन्यं यतोऽविद्याश्रयं च तत् ॥१०६॥

चिद्विशेषवर्जितोऽयं सत्तासामान्यवर्जितः
आनंदैकस्वरूपात्मा नान्य एवेति तातवाक् ॥१०७॥

"एवं सच्चिदानंदभेदें । चालिली तिन्ही पदें
परी तिन्ही उणी आनंदे । केली येणें" ॥ (अमृ. अ. ५)

ननु नूनं वृथा ज्ञानं नाविद्यानाशकारणम्
किंतु प्रबोधकं वाक्यं प्रबुद्धे न हि सार्थकम् ॥१०८॥

तस्माच्छ्रीसद्गुरोर्वाक्यात् जाते ज्ञानेऽज्ञता हता
तर्हि सद्गुरुगोविंदभक्तिमेव समाश्रयेत् ॥१०९॥

सा प्रेमलक्षणा भक्तिः प्रेमात्मानंदरूपकम्
अनिर्वाच्यं तत्प्रेमेति भक्तिसूत्रकृतां मतम् ॥११०॥
ईश्वरेच्छा भवेन्नित्या न्यायशास्त्रमतं स्फुटम्
निजात्मन्यपि सा विद्यात् प्रत्यभिज्ञामतं त्विदम् ॥१११॥
तस्मादिच्छाविशेषो हि प्रेम गुप्तार्यसंमतम्
किंतु क्षेत्रगुणश्चेच्छेत्येवं रमणभाषणम् ॥११२॥
अहंताविस्मारकत्वे सति यद्वागगोचरम्
चिन्मयं सत्परं सौख्यमात्मप्रेम तदुच्यते ॥११३॥
तदेवेशपराभक्तिस्तदभिव्यक्तिकारणम्
सोपाधिकं तु यत्प्रेम तद्गौणमिति कथ्यते ॥११४॥
तदेवाहुश्च गौणीति भक्तिर्भक्तिमतां वराः
द्रवताकारणं मुख्यं गौणं तु द्रवजं तथा ॥११५॥
नन्वेवं च पराभक्तेर्गौणी भक्तिश्च कारणम्
सत्यं तथापीह भक्त्या परयैव कृतार्थता ॥११६॥
वस्तुतो द्रवतायां नो परं प्रेमास्ति कारणम्
किंतु सत्वोपहितं तत् स्नेहाख्यं द्रवबीजकम् ॥११७॥
मतभेदेन भिन्नं तत् पराभिव्यक्तिकृद्भवेत्
अतः श्रौतोत्थसंस्कारभावनां प्रथमं भजेत् ॥११८॥
तामेव गौणीं विद्याद्यां वदिष्यामि तृतीयके
सद्भिः समनुसंधेयं ज्ञाननायकृपालवात् ॥११९॥

हरिः ॐ तत्सत् श्रीमत्सद्गुरुज्ञानेश्वरकृपाप्रसादे गद्यपद्यान्विते भक्तितत्वविवेके भक्त्यधिकारिभक्तिस्वरूपभक्त्याश्रयभक्तिप्रयोजननिरूपणं नाम द्वितीयः परिच्छेदः ।



## ९

श्रीज्ञानेश्वरमाऊली समर्थ

# प्रियप्रेमोन्मादः

शब्दो निरुद्धो बाष्पै र्वा निरुद्धे नयनेऽश्रुभिः
निरुद्धं कर्म मोहेनाऽलं प्रियनमस्कृतिः ॥१॥
अहो वन्हिसुता गंगा संगता मेघसागरम्
शैत्यं त्यक्त्वा दीनमीनः महातापेन जीवति ॥२॥
चित्रं बत निरीच्छस्य गृहे कल्पतरुः स्थितः
कुहकात् वंचिता येन साभिलाषजना वृथा ॥३॥
माऽऽगच्छ मधुप त्वं मे हृतः सर्वो रसस्त्वया
सुसेवायां प्रभूतायां पुनर्मां पीडयिष्यासि ॥४॥
मयैव कांचनं लब्धं विश्वं चोरविवर्जितम्
स्वेच्छया तत्संस्करोमि कटकं वाथ कुंडलम् ॥५॥
तदेव राज्यं त्यागार्हं न यस्मिन् दुःखिताः प्रजाः
यत्र नार्यो न शोचंति तदेकं शून्यमंदिरम् ॥६॥
जयोऽस्माकं यदा जातः किं तदाऽऽगमनं तव
प्रशंसार्हं भवेन्नाथ दयालोर्दीनवंचनम् ॥७॥
किं तेऽथ दर्शनानंदो दृष्टिरेव हृता त्वया
किं पीयूषप्रसादेन मृतिकैवल्यमानिनः ॥८॥
अहो मूकः श्रुतिं ब्रूते पंडितो मौनमास्थितः
यः पश्यति स एवांधो योन पश्येत्स पश्यति ॥९॥
नैव जानामि संस्थाप्यः क्वायमद्य स्यमंतकः
अस्यैव चिंतया भग्नं हृदयं मे सहस्रधा ॥१०॥

अन्यां याहि शिवं तेऽस्तु हा हा चंचल मुंच माम्
सुखेन वस भो स्वामिन् यत्र ते रमते मनः ॥११॥
पितृघातकरी नाहं न चाहं व्यभिचारिणी
कथं साधनहीनायां नाथ मय्यनुकंपसे ॥१२॥
हृद्गदस्यातुरः प्राह रसचूर्णं महौषधम्
आरोग्यं विरहाल्हादः पुष्टिस्ते त्वय्यपस्मृतिः ॥१३॥
सर्वत्र विरहस्ते त्वं मूर्तिं दर्शय ते मम
व्यष्टिमूर्त्यालिंगने मे नाथ वांच्छा न विद्यते ॥१४॥
तवैक्यं त्वद्वियोगं वा हृदयं नैव मुंचति
भिन्नयोरुभयोर्योगो यत्नं तस्मात्परित्यज ॥१५॥
न चिंताराहुणा यावत् ग्रस्तो वदनचंद्रमाः
तावन्न विद्यते पर्वं प्रियायासुसमर्पणे ॥१६॥
हा नाथ रमण प्रेष्ठ कासि दीनदयानिधे
दास्यास्ते कृपणाया मे पादयुग्मं प्रदर्शय ॥१७॥

॥ समाप्तोऽयं ग्रंथः ॥

—*—

# गोविंदानंदसुधा

मंगलाचरण

जयति जयति विष्णोर्वाक्यभावार्थकारी ।
ऋतचितिसुखमूर्तिः स्वीयकाम्यानुकारी ।
शिवपुरमिव भातीन्द्राणितीरं यदीय– ।
द्वयचरणनखभा ध्वस्तमायांधकारम् ।।१।।

भक्तिलक्षण

अनध्यस्तविवर्तेऽस्मिन् गुरौ वा शिवकृष्णयोः ।।
तैलधारेव या प्रीतिर्भक्तिः श्रुत्यनुशासनम् ।।२।।
ज्ञाते तत्त्वेऽप्यगर्वाय सद्‌गुरोर्भक्तिरिष्यते ।
सच्छिष्याणां साहजिकी तद्भिदुच्छेदने परा ।।३।।
शिवभक्तिः सदा ग्राह्या विश्वरागनिवृत्तये ।
कृष्णभक्तिः सदा ग्राह्या रसास्वादापनोदिनी ।।४।।

---

**श्री बाबाजी महाराज पंडितांनी केलेला अनुवाद :–**

श्रीविष्णूच्या वाक्यांचा भावार्थ प्रगट करणारे म्हणजे भगवान श्रीकृष्णांनी सांगितलेल्या गीतेवर भावार्थदीपिका नांवाची टीका लिहिणारे, आपल्या भक्तांच्या इच्छेनुरूप साकार होणारे, आपल्या दोन्ही चरणनखांच्या तेजानें मायारूप अंधःकाराचा नाश करणारे व श्री कैलास किंवा काशी यासारखें प्रकाशरूप जें इंद्रायणी तीरावरील आळंदीक्षेत्र येथे वास्तव्य करणारे जे सच्चित् सुखरूप श्रीज्ञानेश्वर महाराज यांचा अनेकवार जयजयकार असो ।।१।।

अनध्यस्तविवर्त श्रीगुरूचे ठिकाणीं किंवा शिवकृष्ण यांचे ठिकाणीं तैलधारावत् अखंड वाहणारी जी प्रीति ती भक्ति होय अशी श्रुतीची शिकवण आहे ।।२।।

आत्मतत्व जाणल्यानंतरहि ज्ञानाचा अहंकार नाहींसा करण्याकरिता श्रीसद्‌गुरूची भक्ति करणें इष्ट आहे. कारण द्वैतभासाची निवृत्ति करणारी ही भक्ती सत्‌शिष्याचे ठिकाणीं स्वाभाविक असते ।।३।।

दृश्य पदार्थाचे ठिकाणीं आसक्ति नसावी म्हणजे वैराग्य प्राप्त व्हावे म्हणून शिवभक्ति सदा करावी व त्याचबरोबर मी सुखभोक्ता आहे, हा अहंकार नाहीसा व्हावा म्हणून श्रीकृष्णभक्ति नेहमीं करावी ।।४।।

श्रीगुरूचे ठिकाणीं हरिहरात्मक भावना

शिष्यप्रेम्णा जगद्बाधाद्गुरुर्हरिहरात्मक : ।
तद्भक्तिर्व्यापिनी ग्राह्या देवभावसमन्वयात् ॥५॥

वेदान्तयोगशास्त्रानें श्रीगुरूचे ठिकाणी भक्तिस्थापन प्रक्रिया

देवत्वगुणरूपस्याऽऽश्रयो द्रव्यं भवेद्गुरुः ।
इति न्यायेन संचिन्त्य नात्मभिन्नं पुनश्च तत् ॥६॥

इति वेदान्ततो ज्ञात्वा स्थापयेद्योगशास्त्रतः ।
सद्गुरावात्मानुरागं भक्तिशास्त्रेण केवलम् ॥७॥

गुरुपादस्थायिभावमखंडरसतां नयेत् ।
काठिण्यं विषये कुर्याद् द्रवत्वं सद्गुरोः पदे ॥८॥

उपायैः शास्त्रसंदिष्टैरनुक्षणमतो बुधः ।
एवमेव प्रक्रिया वाप्यस्तु शास्त्रानुसारिणी ॥९॥

---

श्रीगुरु शिष्यावर प्रम करतात म्हणून ते हरिरूप आहेत व जगताचा बाध म्हणजे जगन्मिथ्यात्व पटवून देतात म्हणून ते शंकररूप आहेत. अशा त्या सद्गुरुमूर्तीत हरिहरांचा समन्वय होत असल्यामुळे त्यांच्या (श्रीगुरूच्या) ठिकाणीं होत असलेली भक्ति व्यापकच समजली पाहिजे ॥५॥

देवरूपगुणांचा आश्रय गुरुरूप द्रव्य आहे, या न्यायानें श्रीगुरूचें चिंतन करावें. पुनः गुरु आपल्या आत्म्याहून भिन्न नाहींत हें वेदान्तशास्त्रांतून जाणून योगशास्त्रानें म्हणजे ध्यानयोगानें तें श्रीगुरुरूप चित्तांत दृढ करावें व श्रीसद्गुरुचे ठिकाणी आत्मप्रेम केवळ भक्तिशास्त्रानेंच स्थापन करावें ॥६-७॥

गुरुचरणरूपी स्थायीभावाला म्हणजे प्रेमभावाला अखंड रसत्वाला आणावें म्हणजे तें प्रेम उत्कट करावें (असा प्रेम उत्पन्न होण्याचा उपाय म्हणजे) विषयांचे ठिकाणीं काठिण्य म्हणजे अनासक्ति धारण करावी व श्रीगुरुचरणाचे ठिकाणीं चित्त आसक्त होईल असा प्रयत्न करावा. ॥८॥

हाच उपाय शास्त्रांनी सांगितला आहे. म्हणून शहाण्यांनी नेंहमी याच उपायाचा अवलंब करावा. किंवा शास्त्राला अनुसरून हीच एक प्रक्रिया आहे ॥९॥

भक्तिशास्त्राचे स्वातंत्र्य

तल्लाभाय साधनानि कथितानि महात्मभिः ।
सर्व मार्गः स्वतंत्रोऽयं भक्तिमार्गोऽथ शब्दतः ॥१०॥
सूत्रादिभिः समारब्धो ब्रह्मपुत्रमुखैर्यतः[१] ।
समाधिर्भक्तियोगेन घेरंडमुनिभाषितम्[२] ॥११॥

भक्तीचे तीन प्रकार

गौणीमध्यापराभेदाद्भक्तिः प्रोक्ता त्रिधा बुधैः ।
गौण्यष्टधा द्विधामध्या परैकैव निबोधत ॥१२॥
श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ।
अर्चनं वंदनं दास्यं सख्यं गौणीयमष्टधा ॥१३॥

---

तो गुरुप्रेम प्राप्त व्हावा म्हणून माहात्म्यांनी साधनें सांगितली आहेत. 'अथ' या शद्बानें भक्तिशास्त्राचा आरंभ केला असल्यामुळे हा भक्तिमार्ग सर्व मार्गांहून स्वतंत्र आहे.* ॥१०॥

कारण हा भक्तिमार्ग श्री नारदादिकांनी सूत्रादिद्वारा प्रतिपादिला आहे. समाधि भक्तियोगाने साधला जातो असे घेरंडाचार्यांचेहि* म्हणणे आहे.॥११॥

ज्ञात्यांनी गौणी, मध्या व परा असे भक्तीचे तीन प्रकार सांगितले आहेत. गौणी भक्ति आठ प्रकारची आहे, मध्या दोन प्रकारची व परा एक प्रकारची आहे. ॥१२॥

श्री विष्णूच्या लीलांचे श्रवण, कीर्तन, स्मरण, त्याची चरणसेवा, त्याची पूजा, त्याला नमस्कार करणें त्याचे दास्य करणें व त्याच्याशीं सख्य जोडणें असे हे आठ प्रकार गौणीभक्तीचे आहेत. ॥१३॥

---

[१] शांडिल्यसूत्रे नारदीयसूत्रे चाथशद्बारंभबोधनात् स्वतंत्रत्वम् तथा च सूत्रे "अयातो भक्तिजिज्ञासा" "अथातो भक्ति व्याख्यास्यामः"

[२] तच्चोक्तं घेरण्डसंहितायाम्–

स्वकीयहृदये ध्यायेदिष्टदेवस्वरूपकम् ।
चिंतयेद्भक्तियोगेन परमाल्हादपूर्वकम् ॥१॥
आनंदाश्रुपुलकेन दशभावः प्रजायते ।
समाधिः संभवेत्तेन संभवेच्च मनोन्मनी ॥२॥

आपल्या इष्ट देवाच्या स्वरूपाचें आपल्या हृदयांत ध्यान करावें. व त्या स्वरूपाचें भक्तीनें व अत्यंत आल्हादपूर्वक चिंतन करावें. आनंदाश्रु व रोमांचित होणें यांच्या योगानें प्रेमस्थिति प्रगट होते. व त्यामुळें समाधि साधला जातो व मन उन्मन होतें. ॥१–२॥

भावयेत्संसृतौ दुःखं विषये दोषदर्शनात् ।
गृहसौख्यं परित्यज्य साधुसंगतिमाश्रयेत् ।।१४।।
निर्गुणः सगुणश्चैव भगवान् परमेश्वरः ।
ज्ञानगम्यो निर्गुणोऽसौ सगुणस्त्वनुरागतः ।।१५।।

हरिहरांचे परोक्षत्व

अनध्यस्तविवर्तोऽपि सगुणोऽयं द्विधा भवेत् ।
अपरोक्षः परोक्षश्च परोक्षः शंकरो हरिः ।।१६।।

सद्‌गुरू अपरोक्ष

अपरोक्षो गुरुर्ज्ञेयो साधुर्मूर्तिसमन्वितः ।
अपरोक्षगुरोर्योगे परोक्षविरहो भवेत् ।।१७।।
परोक्षप्रतिमादौ चापरोक्षविरहो भवेत् ।
एवमपि हृदि ध्यायेदपरोक्षं सदैव हि ।।१८।।
कुर्यात्तदर्थमेवादौ श्रवणं साधुवक्त्रतः ।
परोक्षाऽपरोक्षयोश्च सत्समन्वयहेतवे ।।१९।।

---

विषयांचे ठिकाणीं दोष पाहून संसार दुःखदायक आहे असे नेहमी चिंतन करावें. गृहसौख्य सोडून साधूंचे संगतीचा आश्रय करावा. ।।१४।।

भगवान् परमेश्वर सगुण व निर्गुण असा दोन प्रकारचा आहे. ज्ञानाने. कळतें तें निर्गुण व प्रेमानें कळतें ते सगुण होय. ।।१५।।

अनध्यस्तविवर्त असलेले सगुणस्वरूप निरुपाधिक असून ते दोन प्रकारचे आहे एक परोक्ष व दुसरें अपरोक्ष. शंकर व श्रीहरी हे परोक्ष आहेत. ।।१६।।

सर्व साधूंचा ज्याठिकाणीं समन्वय आहे असा श्रीगुरु अपरोक्ष परमात्मा जाणावा. अपरोक्ष श्रीगुरूंचा योग असतांना म्हणजे डोळ्यांसमोर असतांना परोक्ष अशा श्रीहरीच्या व श्रीशंकराच्या ठिकाणीं विरह असतो. ।।१७।।

परोक्ष अशा श्रीशंकर व श्रीहरि यांच्या मूर्ति समोर असतांना श्रीगुरुबद्दल विरह असतो. असे असले तरी अपरोक्ष अशा श्रीगुरूचे निरंतर अंतःकरणांत ध्यान ठेवावें. ।।१८।।

परोक्ष शंकर, श्रीहरि व अपरोक्ष श्रीगुरु यांचा नेहमी संयोगवियोग प्रेम असावा. व त्याकरितां ते एकरूप आहेत असा निश्चय करावा. व त्यांचे ठिकाणी प्रेम प्राप्त व्हावें ह्मणून प्रथम साधूंच्या मुखानें भगवंताच्या लीलांचें श्रवण करावें. ।।१९।।

ऐतिह्येन प्रमाणेन परोक्षाकारबोधतः ।
सद्गुरावपरोक्षेऽस्मिन्गुणभावं निवेशयेत् ॥२०॥
आदौ गुणाः परोक्षस्य मूर्तौ भाव्या स्थिरा बुधैः ।
अपरोक्षाश्रयं तेषां सद्गुरुं परिकल्पयेत् ॥२१॥
ऐतिह्यस्य परोक्षस्य मूर्तौ प्रस्थापयेत् गुणान् ॥
सद्वक्त्रश्रवणेनैतान्मानसे स्थापयेत्पुनः ॥२२॥
मानसमपि तत्तीव्रं स्थापयेत्सद्गुरौ पुनः ।
एतद्धि कीर्तनं शुद्धं श्रवणावर्तनं स्वयम् ॥२३॥
श्रुतं यत्साधुवक्त्रेण तदुल्हासेन वर्णनम् ।
कीर्तनं मुनयः प्राहुर्यस्मिन्प्रेममयो तनुः ॥२४॥
साकारं वर्णयेद्विष्णुं सन्निधौ गुरुदेवयोः ।
असन्निधौ निराकारं चित्ते साकारसंयुतम् ॥२५॥

---

ऐतिहासिक प्रमाणाने म्हणजे पुराणांतील इतिहासावरून, लीला करणाऱ्या श्रीशंकराच्या व श्रीहरीच्या मूर्ति आहेत हे जाणून अपरोक्ष अशा सद्गुरूच्या ठिकाणीं त्या सर्व लीलांचा उपसंहार करावा. ॥२०॥

प्रथम सूज्ञ पुरुषांनी पूजेकरितां घेतलेली देवाची मूर्तिच पुराणांतून ऐकलेल्या लीला करणारी आहे अशी दृढ भावना करावी व त्या लीलांचे अपरोक्ष श्रीगुरुच आश्रय आहेत अशी भावना करावी ॥२१॥

पूजे करितां घेतलेल्या मूर्तीचे ठिकाणीं, होऊन गेलेल्या भगवान शंकर व श्रीहरी यांच्या अवतारांचे, गुण स्थापावे ह्मणजे याच मूर्तीनें त्या लीला केल्या अशी दृढ भावना करावी व त्या मूर्ति अंतःकरणांत प्रगट व्हाव्या ह्मणून पुनः पुनः त्या अवतारांच्या गुणांचे साधूंच्या मुखांतून श्रवण करून त्या मूर्ती मनांत ठसवून घ्याव्या ॥२२॥

अंतकरणांत पूर्णपणे ठसविलेले ते गुण पुनः सद्गुरूचे ठिकाणीं तीव्र स्थापन करावे. असा हा स्वाभाविक होऊं लागलेला श्रवणाचा अभ्यास हेच शुद्ध कीर्तन होय ॥२३॥

साधूंच्या मुखानें ऐकलेले भगवंताचे गुण उल्हासपूर्वक वर्णन करणें याला मुनी कीर्तन म्हणतात. यामुळें शरीर प्रेममय बनून जाते ॥२४॥
श्रीगुरु किंवा देव यांचे समोर कीर्तन करीत असतांना विष्णूच्या साकार स्वरूपाचे गुणवर्णन करावे व हे समोर नसतील तर साकारयुक्त भगवंताच्या निराकार स्वरूपाचे वर्णन करावे व चित्तांत साकार सगुण असावे ॥२५॥

वाचा गोविंदर्वातन्या कीर्तनं स्मरणं भवेत् ।
कीर्तने स्याद्यथानन्दस्तथैकान्तेऽपि जायते ॥२६॥
कर्मणा मनसा वाचा सद्गुरोः पादसेवनम् ।
तनुर्वाणीमनश्चैव गुरुसेवार्थमाश्रयेत् ॥२७॥
भोग्यानामुपरत्यर्थं दृष्टं मानसमेव वा ।
पंचस्यां सद्गुरुं देवमुपचारैः समर्चयेत् ॥२८॥
पूजाहंकृतेर्नाशो वन्दनेनोपजायते ।
भगवन्तमनन्यः सन्प्रणमेद्विगतत्रपः ॥२९॥
वंदने लाघवं दैन्यं तद्दास्येन प्रवर्धयेत् ।
भूत्वा निःसाधनं तस्मात्सख्यं संसाधयेद्धरौ ॥३०॥

---

गोविंदाचें अखंड नाव घेणाऱ्या वाणीनें कीर्तन करणें याला स्मरण ह्मणतात ह्या स्मरणानें कीर्तनांत जसा आनंद होतो तसाच आनंद एकान्तांत स्मरण केल्यानें होतो ॥२६॥

श्रीगुरूचें पादसेवन काया वाचा मनानें करावें. शरीर वाणी, मन श्रीगुरूसेवेंत लावावे*१ ॥२७॥

भोग्य जे विषय आहेत त्यांचे ठिकाणीं उपरति व्हावी म्हणून-म्हणजे विषय वासना निवृत्त व्हावी म्हणून अपरोक्ष जे सद्गुरु व परोक्ष अशा देवांच्या प्रतिमा यांची नाना प्रकारच्या उपचारांनी किंवा मानसिक उपचारांनी पूजा करावी*२ ॥२८॥

'मी पूजक आहे' या अहंकाराचा नाश वंदनभक्तीनें होतो. म्हणून परमेश्वराला किंवा श्रीगुरूला अनन्य व्हावे. (त्यांचेहून दुसरें दैवत मनांत न आणणे हें अनन्य होणें होय) व सर्व लज्जा सोडून त्यांना साष्टांग नमस्कार करावा ॥२९॥

वंदन भक्तीनें प्राप्त झालेली निरंहकारता व दीनता भगवंताच्या दास्यभक्तीने वाढवावी. दास्यभक्ति* वाढली असतां निःसाधनत्व प्राप्त होते. त्या निःसाधनत्वानें हरीशीं सख्य साधावे. ॥३०॥

---

१*गुरावसन्निहितेऽस्तु परोक्षं प्रतिमापादसेवनम्, सन्नहिते किं तेन परोक्षेण ।

२*दृष्टम्—अपरोक्ष सद्गुरुम् । मानसम्—परोक्षं देवम् (प्रतिमादिकम्) । अत्र दृष्टमानसशब्दौ विभक्तिपरिणामेन उपचारैरित्यस्यापि विशेषणतयाऽन्वितौ । दृष्टैः— पाद्यार्घ्यादिभिः । मानसैः— मनसा रचितैः (उपचारैः)

*सेवकवद् बद्धपाणिर्भूत्वा काऽज्ञेति प्रतीक्ष्य कथितमकथितम् वा स्वामीकार्यं करोतीति दास्यलक्षणम् ।

स्तनपयःप्रदानेन ।। १२ ।। केनाऽपि ममावगुणः कथितश्चेद्वदसि रोषयुक्त-धिया । एवमरे किं प्रोढये कः स्याद्वाल्मे गुणी नु दर्शय माम् ।। १३ ।।

१३३१/२२१०/ तातस्तुति.

यस्य प्रसादात् परमार्थरूपात् नार्यप्यहं विष्णुरूपा बभूव ।।
यो विग्रही भक्तसंज्ञानहेतो ज्ञानेश्वरं तं शरणं प्रपद्ये ।। १ ।।

१३३२ /२२११ / उपदेशपर. प्रश्नोत्तर.

ज्ञानस्य तत्वं कथमस्ति सम्यक् भूतेषु साम्यं परमार्थरूपम् ।।
भक्तः स्वरूपं कथमस्ति तातज्ञातेपि तत्वे हरिपादसेवा ।। २ ।।

१३३३/२२१२/ उपासनापर.

पितास्तु देवो पितृपूजकानां माता गुरुश्चैव विधेयकानाम् ।।
दैवं हि देवो बहु कामिकानां ममास्तु कांतो भगनन्परेशः ।। ३ ।।

१३३४ /२२१३ / वेदान्तपर

गर्भेऽस्थ बाल्ये तरुणे जरायां मृतौ जनौ स्वर्गयमालये वा ।।
भक्ताबभक्तौ विरतावमुक्तौ नाहं स्वरूपच्युतिं संस्मरामि ।। १ ।।

१३३५ /२२१४ / देवीस्तुती.

सत्यां ज्ञानमयीमनंतवचगां शांतां सुखैकांतिकाम् । कांतां शंकरभूतपालन-विभोरेकांतवार्त्ताश्रियम् ।। भक्तानुग्रहहेतुरद्वयतनुं श्यामां जगत्सुंदराम् । अंबा मातरमंगजावनरतां स्वां देवतामाश्रये ।। १ ।।

१३३६/२२१५ / रा. रा. त्रिपुरवार यांनीं महाराजांना समस्या दिली ती महाराजांनी पूर्ण केली. संकीर्ण.

नह्यस्ति पूर्णपरमार्थसुखावबोधो । विद्यास्ति किंतु न हि कोपि ततो रसज्ञः ।। वांछा यतो महति भूपतिजादरस्य । तस्माद्भजंति कवयो धनदुर्मदांधान् ।। १ ।।

१३३७ /२२१६ / कमलारंगीवृत्त. रा.—बेहाग. ता.—तेताला. (राजविद्याधर.) उपासनापर.

गोविंदं वंदे ।। धृ० ।। या पदभजनें निर्वृतिरस्या । सौं.न चिदानंदे ।। १ ।।

करुणार्णवतनु मयि करुणांबु । मनसिज मतिमंदे ।। २ ।। श्रीज्ञानेश्वरकन्या क्रीडति । केवलचितिछंदे ।। ३ ।।

१३३८/२२१७ / कमलारंगीवृत्त. रा.–छायानट.ता.–तेताला. भगवत्स्तुति.

वंदे गोपालम् ।। धृ० ।। देवकितनुजं मायामनुजं । भुवनत्रयपालम् ।। १ ।। शशिधर प्रियकर कमलाकांत । मुखमुरलीलोल ।। २ ।। अलकावतिपति- नंदिनिरमणम् । करुणाकल्लोलम् ।। ३ ।।

१३३९/२२१८ / यत्नप्रशंसा.

यः कालं प्रहिणोति तीव्रगमनात् यश्चेश्वरोपेक्षते । दैवं येन विना न यच्छति फलं यस्मिन् स्थितं जीवितम् ।। जीवः कोऽपि यतो भवत्कमल- जोऽन्यः शंकरोऽन्यो हरिः । विश्वं यस्य बलाद्धिनस्ति दुरकं यत्नाय तस्मै नमः ।। १ ।।

१३४० /२२१९ / उपदेशपर

कोणा एका आईला सांगितले.

वेदान्तश्रवणं शुद्ध मयि पुत्रत्वभावना । सत्संगश्च स्वधर्मश्च शिवविष्णो- रुपासनम् ( भजनं शिवकृष्णयोः) ।। १ ।। एतानि साधनान्यत्र कथितान्या- त्मसिद्धये । कृत्वा प्रेमवशात्पूर्ण कृष्णत्वमनुभूयताम् ।। २ ।।

१३४१/२२२०/ श्लोक

नाहं वेदपदार्थतत्वविदुषी न्यायादिवादे रता । नाहं योगविवेकयज्ञफलभुक् नालंकृतालंकृतौ ।। नाहं मुक्तिसुखाभिलाषनिरता मुक्ता न संसारिणी । यो गोपीकुचमर्दने पटुरहं तन्मंदिरे मार्जनी ।। १ ।।

१३४२/२२२१/ सुशीलावृत्त. रा.–केदारा. ता.–तेताला.
(राजविद्याधर.) करुणापर (व्यासचतुः सूत्रीवर)

भगवन् मामवलोकय तात ।। धृ० ।। अलकावतिवल्लभ करुणार्णव । अपवर्गश्रीकान्त ।। १ ।। जनजनिमरणविलयक निगमकृत् । सत्यं ज्ञानमनंत ।। २ ।। ज्ञानेश्वर गुरुनाथ दयालो । जय निगमांतप्रांत ।। ३ ।।

१३४३ /२२२२ / श्री महाराजांनीं केलेली स्वतःच्या अलोका आईची स्तुति.

न याचे भूराज्यं रुचिरसुरसाम्राज्यमपि नो । न वा ब्राह्मन्धाम प्रवरकपुरं नो हरिपुरम् ।। न कांक्षे कल्याणं न च परपदानंदपदवीम् । परं काक्षेऽलोकाचरणकमलप्रीतिमचलाम् ।। १ ।।

१३४४ /२२२३ / रसालावृत्त. रा.–बिलावल. ता.–तेताला.

कृष्णं भज मतिमोहनकारम् ।। धृ० ।। मदनारिविनोदास्पदमीशं । विज्ञानामृतसारम् । येनापहृतोऽर्जुनस्य शोकः । दत्वागीतासारम् ।।२।। मद्भगिनीभिः सेव्यमानकं । वेणूनादोद्धारम् ।। ३ ।। ज्ञानेश्वरकरुणाधनकृपया । स्मर मधुमुरहंतारम् ।। ४ ।।

१३४५/२२२४/ श्लोक शिवस्तुति.

यद्राजसं रूपमुत्पत्तिहेतौ सत्वं स्थितौ तामसमंतनिष्ठम् ।
यत्कारणं वेदमयं तुरीयम् उमासहायं पितरं श्रयेऽहम् ।।

१३४६/२२२५/ रमावृत्त. रा.–भूप. ता.–तेताला.

मंगलाचरणपर पद.

वंदे सुगजाननजरणम् ।। धृ० ।। विघ्नैरभिभूतेर्ऽस्मिल्लोके । त्वदन्यो न शरणम् ।। १ ।। धृत्वाऽलंदीवरूपं विभो । वारय जनिमरणम् ।। २ ।।

१३४७/२२२६ / संकीर्णश्लोक.

ज्ञानेश्वरकृपालेशात् श्रीकृष्णस्य प्रसादतः ।
योषित्सुमातृबुद्धित्वात् वयं वै निर्भयास्सदा ।।

१३४८ /२२२७ / श्लोक–शिवस्तुति.

शिवाय शूलिने नमः शशांकशालिने नमः । पिनाकधारिणे नमोंऽधकांतकारिणे नमः ।। उमाविहारिणे नमोऽखिलाघहारिणे नमः ।। कपालिने नमोनमः कपर्दिने नमोनमः ।।

१३४९/२२२८/ वीरजननीवृत्त. रा-भूप. ता.—मुक्तदेशी. झंपा.
देवीस्तुति. मंगलाचरणपर.

जय जगज्जननी जय दनुजदलिनी ।। धृ० ।। अंब जगदंब करुणाकिरण-कीरिणी । तुहिनतनुनंदिनी प्रवररमणी ।। १ ।। त्रिपुरसुंदरी शिवे अशिव-संहारिणी । मदनदतितीर्षुणां पुर्णतरणी ।। २ ।। ज्ञानदेवात्मजा याचते मेऽय्युमे । नंदनंदनकरे देहि जननि ।। ३ ।। जय जगज्जननि जय दनुज-दलिनी ।। ४ ।।

१३५० /२२२९/ तातस्तुति श्लोक.

सूर्यो भासयते न यश्चितिपदं नानंददश्चंद्रमाः । विद्युद्वाप्यलोऽथवा न पुनरित्येवं किमाभाष्यते ।। तन्मायारहितं तथापि तनयोद्धाराय दृग्गोचरम् । श्रींद्राणीपुलिनेषु खेलनिलयं वंदे महीयो महः ।।

१३५१ /२२३० / तातस्तुति श्लोक

अम्बारूपेण यो मे सुखमनुतनुते पाययंस्तन्यमीशः । यस्तातः पाति कृष्णः पतिरतिरमपि मे केलिकीर्तिर्बिभर्ति ।। योऽनध्यस्तो' विवर्तः सकरूणहृदयोऽलंदिपीठाधिवासः । सोऽयं श्रीसद्गुरुमे प्रभवतु भवतां भूतये ज्ञाननाथः ।।

---

१ आचार्यो यः स्ववाचा प्रहरति कुभिदामात्मनोर्मंदवेद्याम् । सोऽलंदींद्र कृपालु : प्रभवतु भवतां भूतये ज्ञानदेवः ।। पाठांतरम्.

# नारदीयभक्तिसूत्रभाष्यम्

यत्सत्तया जगत्सत्यं यत्प्रतीतेः प्रतीयते
यदानंदेन सानंदं तं श्रीज्ञानेश्वरं नुमः ॥

भक्त्यावश्यकत्वाधिकरणम्

अथातो भक्तिं व्याख्यास्यामः ॥१॥

अ. भा. भक्तिर्ग्राह्या न चात्र प्रवदति न हि सज्ज्ञानकर्मादिसिद्धेः ।
ग्राह्या यस्मात्प्रसादः शिवपदरजसां तां विना जायते नो ।
सौकर्याद्विघ्नहंत्री प्रपतति न यतः कोऽपि वर्णो महात्मा ।
ब्रह्मज्ञानोपलब्धावपि हरिपरमानंदतायै श्रयेत ॥१॥

इह खलु "यं सर्वे देवा नमान्ति मुमुक्षवो ब्रह्मवादिनश्च । ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति । समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् । आत्मारामाश्च मुनयो निर्ग्रंथा अप्युरुक्रमे । कुर्वंत्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः । मुक्ता अपि लीलया विग्रहं कृत्वा भजन्ते । सत्यपि भेदापगमे नाथ तवाहं न मामकीनस्त्वम् । सामुद्रो हि तरंगः क्वचन समुद्रो न तारंगः" इति श्रुतिस्मृतिभाष्यादिवचनशतेभ्योऽस्ति मुक्तानामपि पंचमपुरुषार्थापन्नाया भगवच्चरणरत्नाकरं संततधारारूपेण समालिंगन्त्या भक्तेरपेक्षा । तयैवैक्रया निवृत्तेऽपि निखिलाविद्योपाधौ रसास्वादरूपेण ज्ञानाभिमानरूपेण त्वावशिष्टं बागुणं निवर्तत इति संप्रदायचूडामाणिभिः श्रीमत्सद्गुरुज्ञानेश्वराचार्यपूज्यचरणैरुपपादितम् । अतस्तस्याः सलक्षणस्वरूपं भगवद्भिर्लोकानुग्रहोपहितचेतनचरणैः श्रीमन्नारदाचार्यैः सूत्रितं तत्प्रज्ञानुसारेण बालः पितरं रंजयन्निवाव्याकृतशब्दैर्विवृणोमि । तत्रेदमादिमं सूत्रमथातो भक्तिं व्याख्यास्याम इति ।

अथेति । "ॐ कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कंठं भित्वा विनिर्यातौ तस्मान्मांगलिकावुभाविति" स्मृत्योच्चारणमात्रेणाथशब्दो मंगलरूपः ।

तस्यार्थाश्चारंभाधिकारानंतर्याणि। तस्मादर्थत्वेनारंभाधिकारानंतर्येषु योजनीयः। अधिकारोऽस्या भक्तेः स्वातंत्र्यादन्यसाधननिरपेक्षरूप इति बोध्यः। अत्र हि जाग्रच्छ्रुतिश्च भवति "सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज। अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः"। 'जीर्णभावं गता पुनः संस्थापिता भक्तिर्नारदेनेति पाद्मेतिहासादारंभोऽपि घटते। आनंतर्यं तु पराभक्तिविषयकं "ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति। समः सर्वेषु भूतेषु मद्भक्तिं लभते परामि"ति ज्ञानानंतरमेव पराभक्तिप्राप्तिप्रतिपादनात्। ननु ज्ञानिन उपासनायां न प्रवर्तन्ते कृतकृत्यत्वात्। तथाचोपासना कर्तृबुद्धित्वाज्ज्ञानविरोधिनी भवति। यदपि सूर्यस्य मृगजलमिव मिथ्यात्वादुपासनापि दृढबोधस्य न विरोधिनी तदपि मंदबोधस्य तु भवत्येव विरोधिनी भेदबुद्धिसंभवात्। उपास्यमन्यदहमन्य इति भेदधियैवोपासना भवति। ततः सा सर्वं खल्विदं ब्रह्मेत्यादिज्ञानप्रतिपादिकाभिः श्रुतिभिर्विरुध्यते। अतो मंदज्ञानिभिः सा त्याज्यैव। अथ मन्यसे विक्षेपनिवृत्त्यर्थं मंदज्ञानिभिरपि सा ग्राह्येति चेन्न "आवृत्तिरसकृदुपदेशादि"ति न्यायात्तेषां विक्षेपशांतिर्वेदान्तश्रवणावृत्त्यैव भवति। यस्य तु दृढबोधस्तस्यापेक्षैव नास्तीति प्रतिपादितमाचार्यैरनपेक्षाधिकरणे। अथ लोकसंग्रहार्थं सा ग्राह्येति चेन्न, सा तास्मिन्विधिबोधनेऽसमर्था उच्यते। सत्यमुपासनायां न संभवति ज्ञानिनां प्रवृत्तिस्तस्याः सर्वब्रह्मधीविरोधित्वाद्भक्तिस्तु सर्वब्रह्मबुद्ध्या न विरुध्यते; यतो त्वंपदलक्ष्यात्मप्रेमैव ज्ञानाभिमानपरित्यागेन सर्वभूताधिष्ठाने तत्पदार्थे भगवति समापन्नं सद्भक्तिसंज्ञामाप्नोति। व्युत्थाने ज्ञानिन आत्मप्रेमाभियुक्तो देहाहंकारो भवति। स मा भवत्वित्यपेक्षयैव तस्य सर्वव्यापकस्य भगवतोऽन्वयेन सर्वभूताधिष्ठाने प्रेमविषयिणी मूर्तिर्ज्ञानानंतरमपि न विरुध्यते। अत एव "मुक्ता अपि लीलया विग्रहं कृत्वा भजन्ते" इत्युक्तमाचार्यैः। एवं मंदबोधस्यापि विरोधिनी न भवति भक्तिः सर्वकर्मार्पणरूपत्वात्। प्रारब्धपूर्वको व्यवहारो बहुविधः। तदनुरोधेन सर्वकार्यकरणवेलायां वेदान्तश्रवणं न

संभवति। अस्थिरत्वात्। भगवति कर्मार्पणं तु संभवत्येव "यत्करोषि यदश्नासि यज्जुहोसि ददासि यत्। यत्तपस्यसि कौंतेय तत्कुरुष्व मदर्पणम्"। इति जाग्रच्छ्रुतेः। "यद्यत्कर्म करोमि तत्तदखिलं शंभो तवाराधनम्" "शय्यासनस्थोऽथपथिव्रजन् वा स्वस्थः परिक्षीणवितर्कजालः। संसारबीजक्षयमीक्षमाणः स्यान्नित्यमुक्तोऽमृतभोगभागी" इत्यादिस्मृतिभ्यश्च। योगवासिष्ठाद्याकरेषु जीवन्मुक्तिविवेकादिप्रकरणेषु च व्यवहारसंपादका ज्ञानिनः समाधिनिष्ठाः ब्रह्मविद्वरिष्ठा इत्युपपादितम्। स समाधिरपि भगवत्प्रणिधानेनैव भवतीति शांडिल्यभक्तिशास्त्रपातंजलयोगशास्त्रयोरभिप्रायः। यदपि प्रारब्धानुसारेणैव ज्ञानिनो वर्तंते। येषामधिकभोगदायकं प्रारब्धं तेषामधिकभोगप्रवृत्तिर्भवति। ज्ञानं तु समानमेव। ततो मुक्तिरपि समा। ईश्वरोऽपि न प्रारब्धं हंतुं शक्नोति तेनैव न्यायकृता संकल्पितत्वात्तथापि भक्तिरहितानामेवैष नियमः। अन्यथाऽनीश्वरत्वप्रसंगात्। ज्ञानानंतरं परमेश्वरस्य यथा न्यायकर्तृत्वं स्वीकृतं त्वया तथा दयालुत्वं किं नांगीकुरुषे। तस्माद्भक्तिमतां प्रारब्धाभिभवं कर्तुं शक्नोति परमेश्वरः। नाशस्तु भोगेनैव भवतीति तत्वम्। यदपि "ज्ञानादेव तु कैवल्य"मिति श्रुत्याऽन्यानपेक्षत्वं कृतकृत्यत्वं ज्ञानिनामस्तीति प्रतिपाद्यते तथापि तद्विदेहमुक्तिविषयकम् जीवन्मुक्तिसुखार्थं ज्ञानिनामपि भगवदाराधनयोगापेक्षा त्वस्त्येवेत्याह भगवती श्रुतिः, "आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठः"। वक्ष्यंति चाचार्याः "सा तु कर्मज्ञानयोगेभ्योऽप्याधिकतरेति"। अतः शब्दो हेत्वर्थः। व्याख्यास्यामः प्रतिबंधान्दूरीकृत्य प्रकटीकरिष्यामः। तत्र च ज्ञानिनां सा ग्राह्या न वेति संशये कर्मयोगज्ञानैश्चित्तशुद्ध्यैकाग्र्यावरणभंगादिलाभान्नैव ग्राह्येति प्राप्ते ब्रूमः। ज्ञानेऽहंवृत्तिप्रधाने व्युत्थानबाहुल्यदर्शनाद्भगवद्वृत्तिप्रधान आत्मनिवेदने परमानंदानुभवाज्ज्ञानिनामपि भक्तिर्ग्राह्येवेति। यदि ज्ञानिनामपि भक्तिर्ग्राह्यां तर्हि कर्मिभियोगिभिः कर्तृतंत्रवादिभिश्च सा ग्राह्येति किमु वाच्यम्। तथाच शास्त्रम् "नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते

ज्ञानमलं निरंजनम् । कुतः पुनः शश्वदभद्रमीश्वरे न चार्पितं कर्म यदप्य-कारणम् ” । इत्येत्सर्वं बहुषु स्थलेष्वग्रे प्रदर्शयिष्यामः । नन्वनिर्वचनीयं प्रेमस्वरूपमित्यग्रिमसूत्रेण भक्तेरनिर्वाच्यत्वे प्रतिपिपादयिषिते तस्या व्याख्यान-प्रतिज्ञा विरुध्यत इति चेत्प्रष्टव्यस्त्वस्माभिः । कोऽयमनिर्वचनीयपदार्थ-स्त्वयाऽभिमतः । सर्वथा वागगोचररूपो वा सदसद्विलक्षणरूपो वा ? । पक्षद्वयेऽपि नास्मदभिमतोऽर्थः ज्ञातस्त्वयेति ब्रूमः । आद्ये यथाऽनिर्वचनीयं ब्रह्मापि श्रुत्याऽतद्व्यावृत्तिप्रकाश्यमंगीकृतं ब्रह्मविद्भिस्तथा भगवति प्रीति-धारासंतत्यस्थापनरूपः प्रतिबंधः शब्देन निवर्तत इत्यस्माभिरपि स्वीक्रियते । मायायामतिव्याप्तेर्न द्वितीयः पक्षो युक्तः । प्रकृष्टे प्रेम्णि भावोत्कर्षे वचन-विस्मृत्यप्रवृत्ती एवानिर्वचनीयपदविषयिण्यावित्यग्रे उपपादयिष्ये ॥१॥

भक्तिलक्षणाधिकरणम्

सा त्वस्मिन्परमप्रेमरूपा ॥२॥

अ. मा. सापेक्षा वानपेक्षा भवति परपदेच्छैव सापेक्षरूपा ।
मोक्षः कृष्णो निजात्माऽपि ह न विरहितः प्रीतिरूपाच्च यस्मात् ।
आत्मप्रीतेर्विगर्वा भगवति लभते पूर्णसद्भक्तिसंज्ञाम् ।
तस्मादस्मिन्परेशे द्रुतपरमतमप्रेमतः साऽनपेक्षा ॥ २ ॥

कैवं प्रतिज्ञाता भक्तिः किमधिकरणमित्यत आह । सेति । अस्मिन् अपरोक्षभूते परमेश्वरे । अस्मिन्निति पदेन नित्यपरोक्षपरमेश्वरवादो निरस्तः । स चास्तिभगवद्भक्तिविमुखानामजागलस्तनभूतवेदान्तिनाम् । ते चेत्थं जल्पंति । निखिलब्रह्मांडाधिष्ठानेन दूरत्वात्परमेश्वरो नित्यपरोक्ष एव । अपरोक्षस्तु त्वंपदविशिष्टो जीव इति । दुर्युक्तमेतच्छ्रुतियुक्तिविरोधात् । श्रुतिस्तु बृहदार-ण्यकेऽतर्यामीप्रतिपादिका “ यो विज्ञाने तिष्ठन्विज्ञानादंतरो यं विज्ञानं न वेद यस्य विज्ञानं शरीरं यो विज्ञानमंतरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ” ( बृ. ३।७।२२ ) न ह्यंतर्यामिणः परिच्छित्तिः कल्पयितुं शक्या तस्य सर्वव्यापकत्वात् । न हि परिच्छित्तिं विना दूरत्वं संभवति तथाऽदृष्टत्वात् । न हि दूरत्वं विना पारोक्ष्यं वक्तुं योग्यम् । न हि दूरत्वविशिष्टमेव पारोक्ष्यं किंत्वावृतमप्यभानादिति चेत्त्वंपदविशिष्टस्य जीवात्मनो लक्ष्यरूपावृतत्वात्तदप्य

परोक्षं न स्यात् । एवमपि चेत् तत्त्वंपदयोः परोक्षज्ञानेनैव मुक्त्यापत्तेः । न ह्यसत्वापादकमभानापादकमावरणंच जीवेऽसत्वापादकमेवेश्वरेऽतस्तन्निवृत्तय ईशपरोक्षज्ञानमेवापेक्ष्यमित्यपि वक्तुं शक्यम् । परोक्षज्ञानेनासत्वापादकावरण-निवृत्त्याऽभानापादकावरणाभावे भगवद्ध्यानभावादपरोक्षतासिद्धेः । नापि भगवत्स्वभाव एव परोक्षत्वम् । परोक्षत्वे जाते औपाधिकत्वात्स्वभावपरोक्ष्या-भ्युपगमेऽतर्यामित्वासंभवाच्छ्रुतिप्रमाणव्याकोपः । तथा हि जाग्रच्छ्रुतिरपि भवति "उपद्रष्टानुमंता च भर्त्ता भोक्ता महेश्वरः । परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः परः" "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यंत्रारूढानि मायया" "तमेव शरणं गच्छ सर्वभावेन भारत । तत्प्रसादात्परां शांतिं स्थानं प्राप्स्यसि शाश्वत"मिति भगवतैव हृद्देशोऽस्मिन्देहे इत्याद्युक्त्या परमेश्वरस्यापरोक्षत्वं वर्णितम् । तमेवापरोक्षमेव शरणं व्रजेत्य-प्याज्ञप्तं च । भगवत्पादा अपि "अनुपपत्तेस्तु न शारीरः" इतिसूत्रभाष्ये एवमेवाहुः । तथाहि भाष्यम् "ब्रह्मैवोक्तेन न्यायेन मनोमयत्वादिगुणं न तु शारीरो जीवो मनोमयत्वादिगुणः । यत्कारणं सत्यसंकल्प आकाशात्मा अवाकी अनादरः ज्यायान् पृथिव्या इति चैवंजातीयका गुणा न शारीर आञ्जस्येनोपपद्यंते । शारीर इति शरीरे भव इत्यर्थः । नन्वीश्वरोऽपि शरीरे भवति । सत्यं शरीरे भवति न तु शरीर एव भवति । ज्यायान्पृथिव्या ज्यायानंतरिक्षात् आकाशवत्स-र्वगतश्च नित्यः इति च व्यापित्वश्रवणात् । जीवस्तु शरीर एव भवति तस्य भोगाधिष्ठानाच्छरीरादन्यत्र वृत्त्यभावात्" । जीववत् सुखदुःखप्राप्तिस्तु 'न तु शरीर एव भवति'इत्यादि भाष्येण परिहृता । अतः परमेश्वरापरोक्षत्वे न काचिदनुपपत्तिः । नाप्यंतर्यामिणि मंजुषादिवदावरणं संभवति । मंजुषादेरि-वावरणस्य देशकृतत्वाद्देशकालयोश्चकल्पितत्वात्पृथिव्याकाशाद्यंतर्यामित्वश्रु-तेश्च । श्रुत्या तत्कृतदेशादिकस्य च कार्यत्वान्नहि कार्यं कारणमावृणोति । दृष्टविरोधात् । नापि जलकार्यरूपो फेनो जलमावृणोतीतिवदीश्वरकार्यमपीश्वर-

मावृणोतीति वक्तुं योग्यम्। परदृष्ट्यैव जगावरणवज्जीवदृष्ट्यैव परेशावृतत्वात्। तथापि गले पतितं ते भगवत्पारोक्ष्यमिति चेन्न। ज्ञानेनावरणविनाशे हृदये भगवदपरोक्षत्वोपलंभात्। तदा जीव एव परेशो भवति किं तत्रेश्वरापरोक्षत्वेनेति चेन्न। ज्ञानिनां व्युत्थाने प्रारब्धभोगादौ प्राप्तवैकल्ये दुःखित्वादीव दर्शनात्। तर्ह्यपरोक्षभगवद्भक्त्या किं नैतत्प्रतीयत इति चेच्छृणु। ज्ञानिन्याविद्यालेशः सर्वैर्वेदान्तिभिः स्वीकृतः। स विक्षेपरूप एव नावरणरूपस्तथापि जीवस्य तद्वशवर्तित्वमेव। "मायाबिंबो वशीकृत्य तां स्यात्सर्वज्ञ ईश्वरः" इति स्मृतेः। परमेश्वरस्तु विक्षेपशक्तिमपि वशीकरोति अतस्तद्भक्त्या प्रारब्धाभिभवो वावरणनिवृत्तिश्चोपपद्येते। कोऽयमीश्वरो भवन्मते। द्वैतवादिकल्पितो नित्यज्ञानादियुक्तो वा सत्तात्रयवादिकल्पितो मायाप्रतिबिंबो वा सत्ताद्वयवाद्यभिमतो बिंबभूतः शुद्धो वा?। नाद्यस्त्वयाद्वैतसंप्रदायाभ्युपगमात्। न द्वितीयः। ज्ञानेनोपाधिनिवृत्तावाभासनिवृत्तेः। नापि तृतीयः। "जीवेशावाभासेन करोतीति" नृसिंहतापनीयश्रुतिविरोधादिति चेदुच्यते। न ह्यस्मन्मते द्वैतवादिस्वीकृत ईश्वरोऽस्ति। केवलनिमित्तकारणमसावंतवत्त्वमसर्वज्ञता वेत्यादिसूत्रैर्निराकृतः। नापि सत्तात्रयवाद्यभिमतमीश्वरं ब्रूमहे। सिद्धान्तहानेः। परिशेषात्तृतीय एवेश्वरोऽस्माकमस्ति। स च दृष्टिसृष्टिवादिभिर्विवरणानुसारिसत्तात्रयवादिभिश्चांगीकृतः बिंबभूतः शुद्धो वेति निर्धारितः। जीवस्तु तस्याध्यासिक आभासः 'आभास एव चेत्यादि सूत्रात्। "नहि तस्य यो विज्ञाने तिष्ठन् विज्ञानमंतर्यमयतीत्यादिश्रुतिप्रतिपादितं, यत्समाश्रित्य त्वया परमेश्वरापरोक्षत्वं स्थापितं च, तदंतर्यामित्वमेव न संभवति बिंबस्योपाधिबहिर्भूतत्वादुपाधेर्ब्रह्मांडावर्तिव्यापकत्वादित्यपि शंकनीयम्। अस्माभिरवच्छेदवादानंगीकारात्। यद्यप्युपाधिः प्रतिबिंबं पृथगिव करोति तथापि न बिंबप्रतिबिंबयोर्मध्ये तात्विकीं परिच्छित्तिमुत्पादयति। अतः प्रतिबिंबाभासस्य स्वप्रकाशरूपाश्रयभूतत्वे सत्युपाधिबहिःस्पष्टत्वे सत्यपि गमरूपेण साभासोपाधिभासकत्वात्स्वाभासयोः संध्यभावादाभाससन्निहितत्वमनु-

पाधिपक्षपातित्वं च बिंबलक्षणम्। तदंतर्यामित्वेन न विरुध्यते। साभासोपाधिं शुद्धमेव भासयत्यतस्तदेवांतर्यामीतिचेदस्तु। दृष्टिसृष्टिवादे शुद्धस्यानीश्वरत्वस्वीकारात्। बिंबभूतस्य शुद्धस्य च सर्वथा भेदाभावात्। कथं तर्हि बिंबभूतत्वं प्रथमं निर्दिष्टम्। उच्यते। प्रतिबिंबापेक्षिकबिंबत्वारोपावच्छिन्नस्य शुद्धत्वावधारणार्थम्। यद्यपि जीवशुद्धयोर्भेदो वाचारंभणमात्र एव तथापि जीवस्तूपाधिसंश्लेषविशिष्ट ईश्वरस्तु तदसंश्लेषविशिष्ट इति बोध्यम्। अतो नोपाधिनिवृत्तावीश्वरस्यापि निवृत्तिः। विवरणकारैर्मुक्तौ तदभेदस्वीकाराच्च। येषां मते मायाप्रतिबिंब ईश्वरस्तेषांमते मायाविद्याभेदांगीकारेऽविद्याया एव ज्ञानविरोधित्वादीश्वरोपाधिनिवृत्त्यभावः। तदभेदांगीकारे त्वीश्वरेऽप्यावरणसंभवात्सर्वज्ञत्वहानिः। अथ विक्षेपशक्तिप्रधानायामेवाविद्यायां प्रतिबिंबस्य परमेश्वरस्य स्वीकारान्नैतद्युक्तमिति चेन्न। विक्षेपांशस्य ज्ञानाविरोधित्वेऽन्यथा तन्निवृत्त्यसंभवात्। प्रारब्धनिवृत्त्यैव तन्निवृत्तिरस्तीतिचेत्प्रारब्धमेव विक्षेपोत्पादकमिति गले पतितम्। तदा विक्षेपशक्तेः सादित्वात्तदुपहितस्येश्वरस्यापि सादित्वं स्यादनिष्टमेतद्वैदिकानाम्। अतोऽस्मदुक्त एव समीचीनः पक्षः। न हि सावरणं प्रारब्धं विक्षेपोत्पादकमित्यपि वक्तुं शक्यम्। प्रारब्धस्यांतःकरणाद्याश्रयत्वेन विक्षेपस्वरूपत्वात्। न च "तस्य तावदेव चिर" मित्यादिश्रुत्युपपत्त्यर्थमेवाविद्यालेशांगीकरणं योग्यम्। "यं सर्वे देवा नमंति मुमुक्षवो ब्रह्मवादिनश्चेति" श्रुत्यैव ब्रह्मज्ञानानंतरं भगवद्भक्त्या विक्षेपनिवृत्तिप्रतिपादनादस्मन्मत एव समन्वयः। न च "जीवेशावाभासेन करोती" त्यादिश्रुतिविरोधः। आभासशब्देनाजहल्लक्षणया प्रतिबिंबापेक्षिकबिंबत्वारोपावच्छिन्नस्य बिंबस्यापि ग्रहणात्। नन्वीश्वरस्य नित्यत्वाभ्युपगमे दृष्टिसृष्टिवादहानिरिति चेन्न। अनाद्यतिरिक्तविषय एव दृष्टिसृष्टिस्वीकारात्। नात्र सत्तात्रयवादापत्तिः "यद्यत्प्रातिभासिकं तत्तदेव भ्रांतिवेलायां व्यावहारिकमिति सर्वत्र योज्यमिति" निरंजनभाष्यात्। नहि वासिष्ठपूर्वापरलोचनेनाप्यनादौ दृष्टिसृष्टिः स्वीकर्तुं शक्या। कारणात्मना स्थायित्वस्वीकारात्।

एवमपि जीवस्य सृष्टिकर्तृत्वाभावे दृष्टिसृष्टिवादहानिरितिचेन्न सम्प्रदायस्थापयितृभिः श्रीमच्छंकराचार्यैः सामान्यत्वेन प्राज्ञव्यवहारस्वीकारवदस्माभिर्जीवकर्तृत्वाभ्युपगमेऽपि भगवतोऽनुमंतृत्वाभ्युपगमात् । तदनुमंतृत्वं द्विविधम् । जीवयाचनावच्छिन्नं संध्यभावात्स्वाभासकल्याणानुकूल्यावच्छिन्नं च । कल्याणमिष्टमिति सुखेच्छया प्रतीयते जीवे । तत्र च प्रथममनुमंतृत्वं सर्वकर्तृत्वसर्वशक्तिमत्वसर्वज्ञत्वादिशब्दैरुदाह्रियते । द्वितीयमनुमंतृत्वमनुग्रहरूपं वदंति । तत्र प्रथमं जीवकर्मनियामकम् । द्वितीयं तु कल्याणोपायसूचकम् । अनुमंतृत्वद्वयमपि भगवल्लीलैव । न प्रयोजनवती प्रवृत्तिः । "लोकवत्तु लीलाकैवल्य"मिति बादरायणीयन्यायात् । न चात्र सूत्रस्य भाष्ये लीलासंकोचः कुत्रापि प्रतिपादितो भगवत्पूज्यपादैः । प्रत्युत "आप्तकामस्य का स्पृहेत्यादि" श्रुतिभिर्युक्तिभिश्च लीलैव समर्थिता । तर्हि कथं जीवस्य कर्मफलभुक्त्यादि प्रयोजनं सिध्यतीति चेदुच्यते । यथा नृपतिना लीलयोत्सृष्टेन द्रव्येण प्रयोजनवंतो बहवो रंका जीवंति तद्वद्ब्रह्मवल्लीलयापि जीवः कर्मफलभुक्त्यादि प्रयोजनं साधयति । नहि मिथ्याभासानुमोदनेनैव लीलामिथ्यात्वं शंकनीयम् । बालसमाधानार्थं निर्मितायाः मृत्कन्यकाया मिथ्यात्वेऽपि मातुर्लीलासत्यत्वदर्शनात् । नन्वेवं भगवत उन्मत्तवच्चेष्टा स्यादिति चेन्न । नोन्मत्तचेष्टया कस्यापि प्रयोजनं सिध्यति । भगवल्लीलया तु सिध्यत्येव जीवप्रयोजनम् । उन्मत्तचेष्टा पुनर्दुर्गुणान्विता निंदावहा च न तथा हरेर्लीला दोषान्विता । न च लीलयैव जीवसुखदुःखदातरि नैर्घृण्यवैषम्ये स्याताम् । प्रथमाया लीलाया जीवयाचनावच्छिन्नत्वात् । नापि वेदशब्दैर्जीवे भगवतैव प्रेरिता याचनेति वक्तव्यम् । सर्वथा नानुश्रविकाणां पश्वादीनामपि सुखकामनादर्शनात् । याचनाश्रुतयस्त्वनुवादपराः । अथवा कथमाह्वयामि पितरमिति पृष्टवति नंदने तातेत्याह्वयेति मातुरुत्तरवत्ताः वेदितव्याः इष्टसाधनं याचितुमजानंतं जीवं "दुरितानि परासुव" इत्यादिवचनानि भगवतैव कृपयोपदिष्टानि । अस्त्वेवम् । द्वितीयानुग्रहाख्या लीला तु भवत्येवोन्मत्त-

वादिति चेन्न जीवदृष्टमात्रपरत्वात् । तत्र प्रथमानुमोदनेन सृष्ट्यादीशनशीलत्वं द्वितीयानुमोदनेन तु स्वभक्तिवर्धकत्वमित्युपपन्नम् । स्वभक्तिवर्धनायैव द्वितीयया लीलया भगवच्छरीरोपलब्धिस्तच्च भगवच्छरीरमनघ्यस्तविवर्तं न ज्ञानेन निवर्तनीयमधिष्ठानाविरोधित्वात्कनककुंडलादिवत्सूर्य-बिंबाकृतिवच्च । जाग्रच्छ्रुतिरपि भवति "अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् । प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममाययेति" । माययाा लीलयेत्यर्थः । अस्याः श्रुतेर्नीलकंठभाष्यं प्रमाणार्थं संगृह्यते । "किं तर्हि योगिनां सर्वज्ञत्वप्रसिद्धेस्त्वं जातिस्मरो जीवोऽसीत्याशंक्याह अज इति । देहान्निकृष्टस्याजत्वाव्ययत्वे "न त्वेवाहं जातु नासमित्यत्र साधिते । इह तु विशिष्टस्यैव ते उच्येते । ईश्वरोऽपीत्यनेन देहान्नि-कृष्टस्यास्मदादेरपीश्वरत्वं "तत्वमसि" "अहं ब्रह्मास्मीत्यादिश्रुतिप्रसिद्ध-मतो देहविशिष्टस्यैवाजत्वानित्यत्वे दृढीक्रियेतेऽन्यथाऽनीश्वरत्वप्रसंगात् । न ह्या-दित्यान्तर्यामिणः परमेश्वरस्य हिरण्यश्मश्रुत्वादिविशिष्टो देहो जन्मव्ययवानिति वक्तुं शक्यमकर्मजत्वात् । कर्मफलस्य हि पराकाष्ठा हैरण्यगर्भशरीरप्राप्तिः । न च "पुरुषो ह वै नारायणोऽकामयत अत्यतिष्ठेयं सर्वाणि भूतानि अहमेवेदं सर्वं स्यामिति स एतं पुरुषमेधं पंचरात्रं क्रतुमपश्यत्" इत्यादिना शतपथे नारायणाख्यस्य परमात्मनः "सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । स भूमिं विश्वतो वृत्वात्यतिष्ठद्दशांगुलम्" इति "पादोऽस्य सर्वा भूतानित्रिपादस्यामृतं दिवि" इति च पुरुषसूक्तप्रतिपाद्यस्य सर्वाणि भूतान्यतिक्रम्य स्थितस्ये-श्वरस्यापि शरीरं पंचरात्राख्यकर्मविशेषफलमिति श्रूयत इति वाच्यम् । तत्र नारायणशब्देन हिरण्यगर्भस्यैव विवक्षितत्वात् । न हि परमेश्वरस्य पूर्णकामस्य सर्वानतिक्रम्य स्थितस्य पुनरत्यतिष्ठेयं सर्वाणि भूतानीति कामना भवति । ननु परमेश्वरेऽपि कामना दृष्टा "सोऽकामयत बहुस्यां प्रजायेय" इति चेच्छ्लाघनीयप्रज्ञो देवानां प्रियः । यत आप्तकामस्य का

स्पृहेति श्रुतेः। लोकवत्तु लीलाकैवल्यमिति न्यायाच्च निस्पृहस्य लीलयैव ब्रह्मांडकोटीः सृजतो भगवतो राजगोपालस्य कर्मकिंकरेण कर्मणा सार्वात्म्यं प्रार्थयता साम्यमापादयति। तस्मान्न कर्मफलं भगवतः शरीरम्। अत एव न भौतिकम्। विराट्सूत्रात्मातिरिक्तस्य भौतिकस्याभावात् तस्माद्युक्तमजोऽपि सन्निति। ननु भगवच्छरीरस्य किमुपादानम्। अविद्येति चेन्न परमेश्वरे तदभावात्। जीवाविद्या चेन्न शुक्तिरजतादेरिव तुच्छत्वापत्तेः। चिन्मात्रं चेन्न। चितः साकारत्वायोगात्। तथात्वे वा तस्यातींद्रियत्वापत्तिः। तस्मात्किमालंबो भगवद्देहो देवकीगर्भप्रवेशजननबाल्यकौमारपौगंडयौवनादि-प्रतीतिविषय इति। चेच्छृणु। प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममाययेति। अयमर्थः- जीवात्मानो ह्यनात्मभूतां प्रकृतिं तेजोबन्नात्मिकां पंचभूतात्मिकां वाधिष्ठाय संभवंति जन्मादींल्लभंते। अहं तु स्वां प्रत्यगनन्यां प्रकृतिं प्रत्यक्चैतन्यमेवेत्यर्थः। तदेवाधिष्ठाय न तूपादानान्तरम्। आत्ममायया स्वीयमायया संभवामि। यथा कश्चिन्मायावी स्वयं स्वस्थानादप्रच्युत-स्वभावोऽप्यदृश्यो भूत्वा स्थूलसूक्ष्मभूतान्यनुपादायैव केवलया मायया द्वितीयं मायाविनं स्वसदृशमेव सूत्रमार्गेण गगनमारोहंतं सृजति, एवमहं कूटस्थ-चिन्मात्रोऽग्राह्यः स्वमायया चिन्मयमात्मनः शरीरं सृजामि तस्य बालाद्य वस्थाश्च सूत्रारोहणवद्दर्शयामि। एतावांस्तु विशेषः। लौकिकमायावी मायामुपसंहरन् द्वितीयं मायाविनमप्युपसंहरति। अहं तु तामनुपसंहरन् स्वविग्रहमपि नोपसंहरामीति। एवं हि सति हिरण्यश्मश्रुत्वादिलक्षणविग्रह योगिनश्चैतन्यस्य अंतस्तद्धर्मोपदेशादित्यादिन्यायसिद्धं वियदाद्युपादानत्वलक्षणं सर्वेश्वरत्वं युज्यते नान्यथेति। तस्मात्सिद्धं परमेश्वरस्य मायामयं शरीरं नित्यमिति। एकेनैव देहेन विवस्वंतमुपदिश्य त्वामप्युपदिशामीति। अन्यत्रापि "नित्यैव सा जगन्मूर्तिरिति सावधारणं प्रतिज्ञायते। देवानां कार्यसिद्ध्यर्थमाविर्भवति सा यदा। उत्पन्नेति तदा लोके सा नित्याऽप्यभि-धीयते" इति। नित्याया अप्याविर्भावापेक्षया सूर्यस्येव बाल्यादिक-

मुत्पत्त्याद्युपगम्यते । नैतच्छरीरं कर्मजन्यम् "त्वं जातो भवसि विश्वतो मुखः" इति श्रुतिविरोधात् । नन्वस्मदादीनामिव व्यक्तिमत्वादवयविरूपं पांचभौतिकं तच्छरीरमिति चेन्न " अवयवानामानवस्थ्यादुभयथापि दोषादिति सूत्राच्च भूतानां जडत्वे कथं शरीरारंभसामर्थ्यम् । माययैवेति चेत्तस्या अपि जडत्वमभ्युपगतमस्ति सर्वैः । ईश्वराधिष्ठिततयैवेति चेत् । किमीश्वरो जगदुपादाने स्वतंत्रोऽभ्युपगतस्त्वयाऽहोस्वित्परतंत्रः । द्वितीये जीवत्वापत्तिः । आद्ये इष्टापत्तिः । स वशी लीलया कथं साकारो भवितुं नार्हति । कर्मजन्य-शरीरे कर्मार्पणेन कर्मनिर्हाराऽसंभवात् श्रुतौ स्मृतौ च शरीरवति भगवति कर्मार्पणाविधिबोधनात् न ह्येतद् कर्मवच्छरीरं कर्मजन्यम् । तर्हस्तु त्रिगुणा-त्मकमायाजन्यं भाष्योक्तेरिति चेन्न । त्रिगुणात्मकमायाजन्यत्वे भगवत्यावरण-संभवात् । भाष्य हि तुष्यतु दुर्जन इति न्यायेन परदृष्टिविषयम् । तर्हि भवतु शुद्धसात्विकमायाजन्यमिति चेत् किं भगवता शुद्धसात्विकमाया पारतंत्र्येण तच्छरीरं गृहीतमाहोस्वित्स्वातंत्र्येण । नाद्यः; उपर्युक्तदोषप्रसंगात् द्वितीये लीलैव ते गले पतिता । लीलयैवास्तु शरीरं किं मध्ये शुद्धसत्वग्रहणेन । अथ न हि भगवतच्छा दृश्यते मनसोऽभावादिच्छां विना शरीरग्रहणं चाशक्यमिति चेत्कथं तव मतेऽपीच्छां विना भगवान् सृष्टिमुत्पादयति । ईक्षणादिति चेदस्मन्मतेऽपि प्रथमया लीलया सृष्टेरीक्षणं द्वितीयया लीलया च शरीरग्रहणमिति वक्तुं शक्यते । तथा चोक्तं ब्रह्मणा भागवते गर्भस्तुतौ "अस्यापि देव वपुषो मदनुग्रहस्य स्वेच्छामयस्य न तु भूतमयस्य कोऽपि । नेशे महित्ववसितुं मनसांतरेण साक्षात्तवैव किमुतात्म सुखानुभूतेः ( भाग. स्कं १० अ-श्लो-) अत्र मदनुग्रहस्येत्येकवचनं मुख्यजीवानुग्रहाभिप्रायम् । अनुग्रह एव शरीरं सैव स्वेच्छा । "न तु भूतमयस्येति" कार्यत्वेन कर्मजन्यत्वं भूतकार्यत्वेन मायाजन्यत्वमित्यपास्तम् । अतिरोहितार्थमन्यत् । किमेवं तव भगवदाकारस्वीकार आग्रहः । तवापि किं

तस्य निराकारस्वीकार आग्रहः । तस्य सर्वव्यापकत्वाच्छरीरस्य चैकदेशित्वादिति चेदेकदेशित्वदूषणे किं दूषितं त्वया । एकदेशोपाधिरुतैकदेशोपहितचैतन्यम् । आद्ये सर्वव्यापकस्यापि सर्वदेशावच्छिन्नत्वादेकदेशदूषकस्त्वं सर्वदेशोपाधिं किमर्थमंगीकुरुषे । एकदेशोपहितचैतन्यमेव दूषयसि चेत् सर्वदेशोपहितचैतन्यमपि दूषय । देशस्य मायामात्रत्वात्तद्बाधे एकदेशित्वं व्याहृतं चेत्तद्बाधे सर्वदेशित्वमपि कुतो न व्याहृतम् । निराकारोपलब्धिर्ज्ञानेनेति चेत्साकारस्याप्युपलब्धिर्ज्ञानेनैवास्ति । नापि भगवच्छरीरबाधः शंक्यः । तस्यानध्यस्ताविवर्तत्वात् । ननु का तच्छरीरसत्ता । पारमार्थिकी प्रातिभासिकी वा । आद्ये द्वैतापत्तिर्द्वितीये बाधापत्तिः । उभयमप्यानिष्टमेवेति चेदुच्यते । प्रतिभासानुमोदनावच्छिन्ना पारमार्थिकी सत्ता । किं तव चित्रं भासते । जीवस्याप्येवं पारमार्थिकी सत्ता प्रतिपादिता विवरणकारैः प्रतिबिंबदृष्टान्तेन । प्रतिबिंबं न हि छाया भवितुमर्हति । तल्लक्षणाभावात् । यस्यां दिशि पुरुषमुखादिकं तस्यां दिश्येव छायामुखादिकमनुभूतं लोके । प्रतिबिंबस्य मुखादिकं तु तद्विपरीतमिति । नाप्यनिर्वचनीयमुखान्तरोत्पत्तिः । सजातीयत्वदर्शनात् । नाप्यालोकावर्तनमालोकस्य मुखदर्पणप्रतिबिंबेषु सामान्यत्वात् । नेत्रांतरवर्तित्वेऽपि बाह्यमुखमिति व्यवहारासंभवेन प्रतिबिंबाप्रतीत्यापातात् । किं तर्हि प्रतिबिंबं नाम । शृणु । चक्षुर्द्वारा निर्गतांतःकरणवृत्तिश्चक्षुषोरधिदैवतालोकसहकारेण दर्पणं विषयीकृत्य दर्पणाभिहता दर्पणपराङ्मुखीभूय शीघ्रमेव ग्रीवास्थं मुखं विषयीकरोति । तदेव प्रतिबिंबम् । तन्मुखाभिन्नत्वात्सत्यमेव । मदीयमिदंमुखमितिप्रत्यभिज्ञादर्शनात् । प्रतिबिंबत्वस्य न्यूनसत्ताकत्वमुपाधेस्तत्पक्षपातित्वाद्बोध्यम् । प्रतिबिंबत्वधर्म एवोपाधिकाल्पितः । बिंबत्वधर्मारोपस्तु प्रतिबिंबापेक्षिकः । न प्रतिबिंबं बिंबं वा कल्पितमेवं दार्ष्टान्तेऽपि मायोपाधौ न चेतनस्य छाया भवितुमर्हति । न वानिर्वचनीयाऽऽभासोत्पत्तिश्चेतनस्योत्पत्तेरसंभवात् । उत्पत्त्यसंभवादित्यधि-

करणे भाष्यकृद्भिर्जीवोत्पत्तेरपि निराकरणात्पूर्वोक्तन्यायेन मायावशात् ब्रह्मप्रतिबिंब एव जीवः। तस्यापि पारमार्थिक्येव सत्ता। कुतस्तर्हि बिंबभूतस्य परमेश्वरस्य लीलासाकारस्यापि सा न भवेत्। ननु नोपाधिसत्यता विना प्रतिबिंबस्थितिरिति चेन्न स्वाप्निकमुखस्य स्वाप्निकदर्पणेऽपि प्रतिबिंबसंभवात्। न तत्राप्युपाधिसमसत्ताकत्वं शंकनीयम्। ऐंद्रजालिके दर्पणेऽपि स्वमुखप्रतिबिंबसंभवात्। कुतस्तर्हि भक्तिपदतीर्थामृते प्रतिबिंबवादं प्रतिक्षिप्याभासवाद एव क्रोडीकृतः। शृणु। आभासवादेनापि भक्तिर्वक्तुं शक्यत इति प्रौढिद्योतनायैव। किंतु प्रतिबिंबवादेनैव जीवपारमार्थिकसत्तावत्समीचीनतया भगवच्छरीरस्य पारमार्थिकी सत्ता निर्धारयितुं शक्यते। नापि द्वैतापत्तिः लक्षणे विवर्तपदनिवेशनात्। नापि प्रतिभासापत्तिरनध्यस्तपदनिवेशनात्। अनध्यस्तविवर्तपदलक्षणं तु बहुषु ग्रंथेषु निष्पादितमस्माभिः। नापि जीवाविद्यानिवृत्तौ भगवच्छरीरनिवृत्तिः। ज्ञानस्यावरणनिवर्तकत्वाद्भगवच्छरीर आवरणाभावात्। न तच्छरीरं कर्मजन्यमिति भाष्यकारादिभिरप्युपपादितम्। भगवच्छरीरं मायाजन्यं स्याच्चेदवश्यं ज्ञाननिवर्त्यं भवेत्। परं चार्जुनस्य ज्ञाने जातेऽपि श्रीकृष्णशरीरसत्त्वदर्शनात्सिद्धमेव तच्छरीरमनध्यस्तविवर्तम्। कनककुंडलादिवत्। ननु तर्हि घटादीनामप्यनध्यस्तविवर्तत्वं स्यात्सत्यम्। मृत्तिकादृष्ट्या घटादीनामप्यनध्यस्तविवर्तत्वम्। ब्रह्मदृष्ट्या तु तेषामविद्यावत्त्वाद्युगपदुत्पत्तेश्चाध्यस्तविवर्तत्वमेव। तथादर्शनात् "ज्ञानज्ञेयप्रभेदेन यथा स्वप्नं प्रतीयते" इति वाक्याच्च। श्रीकृष्णशरीरं तु ब्रह्मदृष्ट्याप्यनध्यस्तविवर्तमेव। न मायाकार्यम्। शुद्धसत्त्वमायाया रजोगुणं विना कार्यप्रवृत्त्यसंभवात्। तमोगुणं विना नियमनाभावाच्च। तथाभ्युपगमे मलिनसत्त्वाभ्युपगमेन भूतकार्यत्वापत्तिः। नापि विक्षेपशक्त्याख्यमायाकार्यं भगवच्छरीरं, तस्य प्रारब्धावष्टंभं विना स्थातुमशक्यत्वात्। नन्वस्तु तर्हि प्रारब्धावष्टब्धविक्षेपकार्यं भगवच्छरीरं मायाकार्यमिति चेन्न। भगवतः स्वप्रारब्धांगीकारे जीवत्वापत्तेः। सर्वथा परप्रारब्धजन्यत्वांगीकारे घटादिभोग्यवज्जडत्वापत्तेश्च।

नापि स्त्र्यादिसचेतनभोग्यवत्परप्रारब्धजन्यमिति वाच्यम्। स्त्र्यादीनामपि स्वप्रारब्धेन पत्युर्भोग्यत्वदर्शनात्। यथा स्त्रीप्रारब्धेन पतिर्भोग्यस्तथा पत्युः प्रारब्धेन स्त्र्यपि भोग्या। भोगस्तु भोक्तृचेतनस्यैवोभयशरीरास्थितस्य। न तद्वत्परमेश्वरो भोक्ता कर्मलेपाभावात्। अन्यथा सुखिदुःखित्वादिप्रसक्त्या जीवत्वापत्तेश्च। तस्मान्न परप्रारब्धजन्यं भगवच्छरीरम्। नापि केवलजीव-भावनाजन्यं स्वप्नवत्तुच्छत्वापत्तेर्जागरेऽप्रतीत्यापत्तेश्च। तस्माज्ज्ञाते तत्वेऽ-प्यर्जुनाय यच्छरीरस्य प्रतीतिस्तद्भगवच्छरीरमनध्यस्ताविवर्तमेव परिशेषाद-वगंतव्यम्। न तत्र दृष्टिसृष्टिस्वीकारः। प्रमाणेन तन्नित्यत्वावगमात्। प्रमाणं तु श्रुतिरेव त्रिपाद्महानारायणोपनिषदि पूर्वकांडे द्वितीयाध्याये। "साकारो द्विविधः सोपाधिको निरुपाधिकश्च। समस्ताविद्योपाधिसाकारः सावयवः। सावयवत्वादवश्यमानित्यं भवत्येव" एवं ब्रह्मदृष्ट्याऽध्यस्तावि-वर्तस्य साकारस्यानित्यत्वं प्रतिपाद्य विद्यावृत्त्या निरुपाधिकसाकारमाह। "निरुपाधिकसाकारस्त्रिविधः। ब्रह्मविद्यासाकार आनंदसाकार उभयात्मकसा-कारश्चेति"। अयमाशयः — निरुपाधिब्रह्मज्ञानेऽप्रतिबंधकत्वात्सहायकत्वाच्चा-युर्घृतमित्यादिवत् विद्योपहितसाकारोऽपि निरुपाधिक एव। अनध्यस्ताविवर्त इत्यर्थः। ज्ञाते तत्वेऽपि ज्ञानानंतरं विद्वदंतःकरणे यो ध्यानरूपो भगवदाकारः स ब्रह्मविद्यासाकारः। ब्रह्मविद्वृत्तेर्विद्यारूपत्वाद्यद्यपि तस्य विषयपरा वृत्तिरविद्याकार्यं तदपि भगवत्परा वृत्तिर्विद्याकार्यमेव। विद्याफलजीवन्मुक्त्य-विरोधात्। यस्तु नित्योऽप्यनध्यस्तविवर्तो भक्त्या यावदाविर्भावं तिरोहितो लीलाविग्रहः स आनंदसाकारः। प्रबलतरप्रेम्णा स एव ध्यानेन सदनीकृतः हृदयावच्छिन्नो यदाविर्भवति तदा ह्युभयात्मकसाकारो ज्ञेयः यथाहुस्तात-चरणाः "ऐसे जे मत्पर। उपासिती निरंतर। ध्यानमिषें घर। माझें झाले" (ज्ञा. अ. १२ ओ. ८०) अयं भावः — ज्ञाते तत्वे ब्रह्मविद्यासाकारो भक्तौ प्रवेशयति आनंदसाकारस्तु परप्रेमदानार्थं विरहं वर्धयति। उभया-त्मकसाकारस्त्वत्युत्कटप्रेम्णाविर्भूय योगेऽपि वियोगोपलालनं परिचाययति।

यथोक्तं राधासुधानिधौ "अंकस्थितेऽपि दयिते कमपि प्रलापं हा मोहनेति वचसा विदधत्यकस्मात्। श्यामानुरागमदविह्वलमोहनांगी श्यामामणिर्जयति कापि निकुंजसीम्नि"। अथवा "आनंदो विषयानुभवो नित्यत्वं चेति संति धर्मा ब्रह्मणो ह्यपृथक्त्वे पृथगिवावभासंते" इति पंचपादिकाकृदुक्तेर्विद्यावृत्त्या सच्चिदंशयोः पृथगिव भाने ब्रह्मविद्यासाकारः। आनंदांशस्य पृथगिव भाने आनंदसाकारः। उभयस्याप्येकभिवनादनध्यस्ताविवर्तः श्रीकृष्णो ह्युभयात्मकसाकारः। अत्रायमाशयः—विद्वान् व्युत्थाने विशेषेण सच्चिद्रूपं ब्रह्मानुसंधत्ते। तस्मिन् सत्ताज्ञानयोरेव विशेषाभिव्यक्तिदर्शनात् तदैवायं विश्वस्य सच्चिद्रूपेण ब्रह्मविद्यासाकारत्वमनुभवति। समाधौ सर्ववृत्तिनिरोधादानंदस्य प्राधान्येन पृथगिव भाने आनंदसाकारत्वमनुभवति। भक्तौ तु क्रीडालिंगनादिरूपेण व्युत्थाने प्रेमैकतानवृत्तिरूपेण समाधिस्तत्र श्रीकृष्णसाक्षात्काराटुभयात्मकसाकारत्वमनुभवति। एवमपि दर्शयति श्रुतिस्तत्रैव। "विद्याप्राधान्येन विद्यासाकारः। आनंदप्राधान्येनानंदसाकारः। उभयप्राधान्येनोभयात्मकसाकारश्चेति। अस्य त्रिविधस्यापि साकारस्य पुनर्द्विविधत्वमाह श्रुतिः। "त्रिविधसाकारोऽपि पुनर्द्विविधो भवति। नित्यसाकारो मुक्तसाकारश्चेति"। मुक्तसाकारोपपत्तिमग्रे वक्ष्यामः। नित्यसाकारश्रुतिरुदाह्रियते। "नित्य साकारस्त्वाद्यंतशून्यः शाश्वतः"। नायमारभ्यः भूतकार्यत्वाभावात् नापि परिणामः प्रकृतिकार्यत्वाभावात्। नाप्यध्यस्तविवर्तः मायाकार्यत्वानभ्युपगमात्। तस्मादवयवेभ्योऽनारम्भमाणत्वात् ब्रह्मण एव करचरणादिरूपत्वान्निरवयव एव। तदेवाह श्रुतिः "तस्मादेव निरुपाधिकसाकारस्य निरवयवत्वात् स्वाधिकमपि दूरतो निरस्तमेव"। अपरा श्रुतिरपि "विश्वतश्चक्षुरुत विश्वतो मुख" इति। जाग्रच्छ्रुतिरपि "सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखं। सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठतीति। अत एव पादचुंबनेन मुखचुंबनानंदमनुभवंति भागवताः। अत्रेदं चोद्यम्। "परब्रह्मणः परमार्थतः साकारनिराकारौ स्वभावसिद्धौ"। का वाभ्युपगतस्य नित्यसाकारस्य सत्ता?।

पारमार्थिकी व्यावहारिकी प्रातिभासिकी वा। आद्ये सव ब्रह्म साकारं किंचिद्वा। नाद्यः साकारोपाधौ परित्यक्ते जीवेन तदैक्यमनुभवितुमशक्यत्वात्। तत्प्रतिपादकश्रुतीनां च निराकारश्रुतीनांच व्याकोपात्। नापि द्वितीयः व्यापकस्योपाधिं विना किंचित्वं कल्पयितुमशक्यत्वात्। उपाध्यंगीकारेऽत्रैवोद्धृतनिरुपाधिकसाकारश्रुतेर्व्याकोपः। एवं द्वितीयोऽपि पक्षो न घटते। त्वया सत्ताद्वयवादांगीकारात् भगवच्छरीरस्य प्रारब्धकार्यत्वानंगीकाराच्च। नापि तृतीयः। अनंतरोक्तदोषापातात् स्वाप्नवत्तुच्छत्वापत्तेश्च। हंत तर्हि श्रुतिरेव मिथ्या वक्तीति कल्पय। नैवं कल्पयामोऽस्माभिः श्रुतेः स्वतः प्रामाण्याभ्युपगमात्। किंतूक्तार्थानां गतिमेवैवं चिंतयामः। यथाहि प्रकाशात्मयत्युक्ते बिंबप्रातिबिंबवादे बिंबत्वप्रतिबिंबत्वधर्मयोर्मिथ्यात्वाभ्युपगमेऽपि बिंबप्रतिबिंबयोः स्वरूपं सत्यमित्युपगच्छंति तद्विदस्तद्वद्वयमपि उपाधिमिथ्यात्वाभ्युपगमेन तदुपहितस्य विद्यावच्छिन्नस्य वा साकारस्य सत्यत्वमभ्युपगच्छामः। तस्मात्प्रतिभासावच्छिन्नपारमार्थिक्यस्य सत्ता। न तु सर्वथा प्रातिभासिकी अनध्यस्तत्वात्। नापि सर्वथा पारमार्थिकी विवर्तत्वात्। नाप्यनित्यतापत्तिः। संसारस्यानाद्यनंतत्वात्तत्र प्रतिबिंबापेक्षया बिंबभूतस्यापि यावत्संसारस्तावत्स्वीकारात्। अत एव परमार्थशब्दो गौण उक्तः। न श्रुत्यर्थ उपबृंहणं विना स्वतश्चिंतनीयः। "इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्। बिभेत्यल्पश्रुताद्वेदो मामयंप्रहरिष्यतीति स्मृतौ" तत्प्रतिषेधात्। तस्माच्छ्रुत्युपबृंहणमप्युदाहर्तव्यमिति चेच्छृणु। "घृतकाठिण्यवद्विप्राः केवलं कृपयैव तु। आविर्भूतं महानंदं तांडवं करुणात्मम् (स्कंद पुराण) अन्यत्रापि "न कार्यत्वादनित्योऽयं नंदनंदनविग्रहः। उपचाराद्धि कार्यत्वं तत्र पौराणिका जगुरिति। अत्रोपपत्तिं वदति दैवज्ञपंडितसूर्यः परमार्थप्रपायाम् "चिदानंदमात्ररूपस्य ब्रह्मणोऽहं प्रतिष्ठा प्रतिमा घनीभावः। यथा घनीभूतं तेज एव सूर्याकारं भवति यथा च घनीभूतः परिमल एव कर्पूराकारो भवति

तद्वादित्यर्थः ” तस्मात्प्रतिभासावच्छिन्ना परमार्थसत्तैवास्यांगीकर्तव्या । नाप्यवच्छेदकमिथ्यात्वेनावच्छिन्नामिथ्यात्वमितिवाच्यम् । मृगांबववच्छिन्नभूसत्तासत्यत्वदृष्टान्तोपपत्तेः । नाप्यवच्छेदकप्रतिभासनिवृत्त्या तदवच्छिन्नस्यापि निवृत्तिः । यावदनंतवद्धजीवाभासप्रतिभासानंत्येन तदवच्छिन्नस्य परमार्थसत्ताकानध्यस्तविवर्तस्य नित्यत्वमभ्युपगंतुं सुशक्यत्वात् । एवं प्रतिबिंबपक्षपात्यविद्योपाध्यापादितस्य विद्यारूपबिंबत्वावच्छिन्नबिंबभूतस्य परमेश्वरसंज्ञस्य शुद्धचैतन्यस्यैव पंचपादिकोक्तन्यायेन सज्ञानप्रेमवृत्त्या यत्पृथगिवावभासनं तदेवानध्यस्तविवर्तं भगवच्छरीररूपं सत् क्रीडायां शरीररूपत्वेनानुभूयते जीवन्मुक्तौ । परमार्थतस्तु सर्वं ब्रह्मैवेत्यपि दर्शयति श्रुतिः । “प्राधान्येन भेद एव वस्तुतस्त्वभेद एव ” इति । अतोऽनध्यस्तविवर्तः परमेश्वरविग्रहः सेव्यः । अथ जीवो नावच्छेदः । उपाधिगमनागमनेन शुद्धस्यापि बंधनसंभवात् । नाप्याभासः । उत्पत्त्यसंभवादित्यधिकरणविरोधात् । नापि प्रतिबिंबमुपाधेर्विषमसत्ताकत्वात्किंतु ब्रह्मैवाविद्यया संसरतीति वाक्यादाध्यासिक एव जीवः । तस्य गमनागमनादिकमप्येकास्मिन्नेव स्थाने न लोकांतरे इति सत्ताद्वयसिद्धान्तः । तत्र नेश्वरलाभ इति चेन्न । संक्षेपशारीरकसिद्धान्ताभ्युपगमात्सिद्धान्तबिंदूक्तमुख्यासिद्धान्ताभ्युपगमाद्वा सत्ताद्वयेऽपीश्वर उपलभ्यते । जीवाधिष्ठानमीश्वरो विशेषचेतनत्वात् । शुद्धं वेश्वरस्तस्यैव वक्ष्यमाणपरमप्रेमास्पदत्वात् तच्छरीरमपि न्यायमकरंदोक्तपंचमप्रकारकमुक्तिवत्पंचमप्रकारकमभ्युपगंतव्यम् । न तदप्रसिद्धं भक्तानुभवात् । नापि तन्मायाकार्यं कार्यत्वे हि भौतिकत्वसंभवात् । नापि कारणमायारूपं सर्वथाऽगोचरत्वापत्तेः । अगोचरत्वे भक्तानुभवापलापदोषसंभवाच्च बहुश उपपादितमस्माभिः प्रेमनिकुंजे । तच्छरीरमादौ भक्तहृदय एवाविर्भवति । “भगवानपि विश्वात्मा भक्तानामभयंकरः । आविवेशांशभागेन मन आनकदुंदुभेः” “जीवानामिव न धातुसंबंध इत्यर्थः” इति श्रीमद्भागवततट्टीकाभ्यामवगम्यते भक्तिरसायनेऽपि “भगवान् परमानंदस्वरूपः स्वयमेव हि । मनोगतस्तदाकारः किमन्यदवशिष्यते” इति श्रीमन्मधु-

सूदनाचार्यैः "मुक्ता अपि लीलया विग्रहं कृत्वा भजंते" इत्याचार्यैरप्यभिप्रायो दर्शितः। न तच्छरीरं वैकुंठादिलोकस्थं परोक्षमिति मंतव्यम्। वैकुंठादिलोकेऽपि भक्तार्थमेवैतत् प्रकटनमैतिह्यप्रामाण्यात्। अतोऽतर्यामितया तत्पदार्थपरमेश्वरस्यापरोक्षत्वेन तच्छरीरमनव्यस्तविवर्तं भक्तानुभवगम्यमपरोक्षमेवेतीदंपदस्य विषयः। अतः सुष्ठूक्तं सूत्रकारैर्भक्त्याधिकरणाविवक्षयाऽस्मिन्निति। का सा भक्तिः किं तल्लक्षणं तत्राह। परमप्रेमरूपेति। ननु परमप्रेमास्पद आत्मैव तदपेक्षया परमेश्वरप्रीतिरपि गौणी "न वा अरे देवानां कामाय देवाः प्रिया भवंति आत्मनस्तु कामाय देवाः प्रिया भवंतीति श्रुतेः। आत्मा तु ज्ञानेनाधिगम्यस्तस्माज्ज्ञानमात्रमेव भक्तिरितीमं पूर्वपक्षं व्यावर्तयति तु शब्दः। श्रुतौ देवा इति बहुवचनप्रयोगात् परमेश्वरभिन्नदेवतांतरप्रीतिरेव गौणी बोध्या। यत्तुश्रुत्याऽऽत्मनः परमप्रेमास्पदत्वं दर्शितं तदपि न जीवरूपेण। जीवस्याध्यासिकत्वात्। किंतु पारमेश्वररूपमेव जीवस्य स्वाभाविकं रूपम्। तदेव परमप्रेमास्पदम्। तदैक्येन हि निर्मलपरमानंदप्राप्तिरिति विवरणकृदुक्त्यभिप्रायात् ज्ञानेनाविद्याकार्याभिमानं परित्यज्य जीवाभिमानं ज्ञानाभिमानं च भगवत्प्रेम्णा परित्यज्यैक्येनान्वयेन साकारपरमेश्वरस्य परमप्रेमरूपां "शिवो भूत्वा शिवं यजेदिति" श्रुतिसिद्धां भक्तिमेव जीवन्मुक्तौ समाश्रयेदिति सिद्धान्तः।

## अमृतस्वरूपा च ॥ ३ ॥

तन्नित्यत्वं साधयति। अमृतस्वरूपा चेति। किं मुक्तिर्भक्तेः फलं स्वरूपं वा। फलमेव मुक्तिर्भक्तेर्भवितुमर्हति "भक्तिर्मोक्षप्रदायिनी" गतिवचनात्। मैवं मंस्थाः। परमानंदप्राप्तिरेव मुक्तिः। परमानंदभेदस्तु वस्तुतो नैव कलयितुं शक्यः। मत्सहजास्थितिरेव भक्तिरिति तातोक्तेः। भक्तिर्मोक्षप्रदायिनीति वचनं तु गौणीभक्तिप्रतिपादकम्। गौण्या समाधिसिद्धिरिति शांडिल्यसूत्रात्। एवमीश्वरोपासनाफलं योगमिति प्रतिपादकमीश्वरप्रणिधानाद्वेति पातंजलसूत्रमपि गौणीभक्तिपरमेव।

नन्वीश्वरप्रणिधानं तस्मिन्परमगुरौ सर्वकर्मार्पणमित्युक्तं भाष्यकृता साधनपादे। तथैवेश्वरप्रणिधानेन समाधिर्भवतीति "समाधिसिद्धिरीश्वरप्रणिधानादि"ति तत्रैवोक्तं सूत्रकारैः। त्वमपि "तदर्पिताखिलाचारे"त्यादिं सूत्रपदैर्भगवति कर्मार्पणरूपां पराभक्तिं प्रतिपादयिष्यसि। तर्हि परयैव भक्त्या समाधिसिद्धिरिति किमर्थं न ब्रूषे। सत्यम्। यथा सर्वाचारार्पणं भक्तिलक्षणं प्रतिपादयिष्यामस्तथा तद्विस्मरणे परमव्याकुलत्वमपि भक्तिलक्षणं प्रतिपादयिष्यामो वयम्। गौण्यां परायां तु यद्यप्यस्ति समानं सर्वकर्मार्पणं तदपि गौण्यां पूर्णत्वावाप्तिफलार्थतयाऽव्याकुलीभूतत्वम्। परायां तु भगवदर्थव्याकुलीभूतत्वमिति विशेषः। तस्माद्गौण्येव भवति समाधिसिद्धिरिति युक्तमुत्पश्यामः। नापि भगवदेकतानतावृत्तौ सत्यां योगफलमवशिष्यते। नापि "यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशंते महात्मन" इति श्रुत्या पराभक्तिफलमेव ज्ञानमिति वक्तुं शक्यं। ज्ञानिनामपि भगवद्भजनविधानश्रुतेः। श्रुतिस्तु "यं सर्वे देवा नमंति मुमुक्षवो ब्रह्मवादिनश्चे"ति। जाग्रच्छ्रुतिरप्येतदेवार्थं द्योतयति "ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति। समः सर्वेषु भूतेषु मद्भक्तिं लभते परामि"ति। न ह्यस्या भक्तेरनित्यत्वं मनसाऽप्याक्षेप्तुं शक्यम्। तस्या असाध्यत्वात्। अनित्यत्वं च कालापेक्षया ज्ञायते। कालस्त्वविद्याकार्यमतोऽविद्यानिवृत्तौ तन्निवृत्तिः। अविद्यानिवृत्तौ यदवशिष्यते तन्नित्यमेव कालासंश्लेषात्। भक्तिस्त्वविद्यानिवृत्तावप्यवशिष्यत इत्यसकृच्चोपपादितमुपपादयिष्ये। किं तर्हि विदेहमुक्तावपि भक्तिरस्त्येव। शृणु। एतद्वाक्यपाटवं तावत्प्रश्नकोटिमेव प्रवेष्टुं नेष्टे। अद्यावधि त्वयि विदेहमुक्तेरज्ञानात्। का वा विदेहमुक्तिस्तवाऽभिमता। जीवन्मुक्तिरेव प्रारब्धनिवृत्तौ विदेहसंज्ञामापद्यत इति चेज्जीवन्मुक्तौ स्थिताभक्तिरपि विदेहमुक्तौ स्थियत इति किन्न वक्तुं शक्यते। नापि विदेहमुक्तिस्त्वयाऽद्यापि दृष्टा। त्वयि प्रश्नप्रवृत्तिदर्शनात् विदेहमुक्तौ प्रश्नोत्तरादीनामभावाच्च। विदेहमुक्तौ किं ब्रह्मबाधो भवति। न तस्य चेतनत्वादिति ब्रवीपि चेत्तर्ह्यानंदस्वरूपाया

भक्तेरपि तत्र बाधो न भवतीति किमर्थं न ब्रवीषि । अतो यस्मादानंद एव मुख्यप्रयोजनम् । स च प्रेमस्वरूपस्तस्मान्मुक्तिस्वरूपैव भक्तिरिति सिद्धम् ।

भक्तिवस्तुतंत्रत्वाधिकरणम् ।

यल्लब्ध्वा पुमान् सिद्धो भवत्यमृतो भवति तृप्तो भवति ॥ ४ ॥

अ. मा. स्वतो वा परतः शक्ता भक्तिः परत एव च ।
जन्मांतरीयसंस्कारवैराग्यादेरपेक्षणात् ॥
ज्ञानवैराग्यनामानौ भगवद्भक्तिनंदनौ ।
प्रेम्णश्च वस्तुतंत्रत्वात्समर्था स्वत एव सा ॥

अस्त्वियं फलरूपा भक्तिः । किंतु स्वत एवाविर्भवितुं समर्थाऽहोस्वित्परतः । तत्र तावत्प्राप्तमन्यसामर्थ्यसहकारेणैव साऽविर्भवितुमर्हति । अपेक्षाश्रवणात् । वदंति च बहवो बहुजन्मपुण्यनिचयेन भगवति रतिरुत्पद्यत इति । "बहूनां जन्मनामंते ज्ञानवान् मां प्रपद्यते" । इदं भगवद्वचनमपि भक्त्याविर्भावे ज्ञानापेक्षां बोधयति । अत्रोच्यते । वस्तुन आविर्भावे प्रतिबंधापहननं विनाऽन्यापेक्षा न दृश्यते । तत्प्रतिबंधापहननं तु भवतु ज्ञानेन परं च यथा जडपदार्थः प्रभाप्रकाश्यस्तथा भक्तिरपि ज्ञानप्रकाश्येति वक्तुं न शक्यते । चिदानंदयोरेकरूपत्वात् । आनंदप्राप्तौ ज्ञानाभिमानक्षयदर्शनाच्च । तथा च शांडिल्यसूत्रम् "तयोपक्षयाच्च" गति । ज्ञानेनाविद्यारूपप्रतिबंधविनाशे भक्तिः स्वयमेवाविर्भवितुं शक्ता । यदपि विषयानंदस्य ब्रह्मानंदरूपत्वात्प्रतिबंध एव नास्ति भक्तौ तथापि विषयाणामनित्यत्वमेव प्रेमधाराप्रतिबंधः । सोऽविद्यामाहिम्ना प्रतीयते । तस्य नाशस्तु विज्ञानेन यदा भवति तदैव नित्यपरमानंदेऽनध्यस्तविवर्तेऽचला प्रीतिर्वहति । यथोक्तं प्रल्हादेन विष्णुपुराणे " या प्रीतिरविवेकानां विषयेष्वनपायिनी । त्वामनुस्मरतः सा मे हृदयान्मापसर्पतु " इति । वैराग्यं तु क्रियासाध्यं न वस्तुतंत्रम् । केवलं विषयानित्यत्वदर्शनायैव तस्योपयोगः । बुद्धेर्दौर्बल्यात् । एते ज्ञानवैराग्ये गौणीकार्यत्वेनोपदिष्टे । तथा च शास्त्रम् " वासुदेवे भगवति

ये वै निःसाधना दीनास्तेषां नारायणः सखा ।
क्रीडते तैः सहैवाशु भगवान्भूतभावनः ।।३१।।

भेदाश्रितोऽस्ति संबंधस्तस्मिन्भेदनिवृत्तये ।
सकर्तृसख्यभक्त्यन्तं कृतं नारायणेऽर्पयेत् ।।३२।।

इयं गौण्यष्टधाभक्तिर्मध्यमात्वमुपागता ।
मध्यमाऽऽत्मार्पणप्रेमलक्षणा भेदतो द्विधा ।।३३।।

ममताहंतास्पदत्वादात्मार्पणमपि द्विधा ।
इदंप्रत्ययनिर्दिष्टं निविष्टं ममतास्पदे ।।३४।।

मित्रगोत्रपुत्रगेहवित्तदारादिकं हरौ ।
शब्दादिभोग्यजातं च निवेद्य ममतां त्यजेत् ।।३५।।

अन्नवैकारिकं देहं श्रोत्रादीनीन्द्रियाण्यपि ।
प्राणान्मनोबुद्धिमहंकारं चापि समर्पयेत् ।।३६।।

---

जे भक्त निःसाधन होतात (म्हणजे भगवत्प्राप्ति कर्मजन्य नाहीं म्हणून सर्व साधनें सोडून केवळ भगवंताच्या दयेवरच अवलंबून राहतात) त्यांचा सखा नारायणच होतो व सर्व प्राणिमात्रांना उत्पन्न करून त्यांचे रक्षण करणारा नारायण मग निःसाधन झालेल्या भक्ताबरोबर क्रीडा करू लागतो ।।३१।। हा स्वामीसेवकसंबंध भेदाला धरून असतो व भेद राहिला तर प्रेम कमी होतो; म्हणून त्या संबंधातील भेद नाहीसा करण्याकरतां कर्तृत्व धारण करण्यापासून तो सख्यभक्तीपर्यंत केलेल्या सर्व क्रिया नारायणाला अर्पण कराव्या ।।३२।।

ही आठ प्रकारची भक्ति स्वाभाविक झाली म्हणजे तिला मध्यमा म्हणतात. ही मध्यमाभक्ति आत्मार्पण व प्रेमलक्षणा अशी दोन प्रकारचीआहे ।।३३।। ममता व अहंता याला धरून असल्यामुळे आत्मर्पण दोन प्रकारचे आहे. 'इदं' म्हणजे 'हे' या शब्दाने दाखविले जाणारे सर्व विषय ममतास्पद होत ।।३४।।

मित्र, कुळ गोत्र, पुत्र, घर, धन, दारा वगैरे व शब्दादि सर्व भोग्य विषय भगवंताला अर्पण करून ममतेचा त्याग करावा ।।३५।।

अन्नविकार असा देह, श्रोत्रादि इंद्रियें, पंचप्राण, मन, बुद्धि, अहंकार हे सर्व श्रीहरीला अर्पण करावे म्हणजे त्याच्या सेवेंत लावावे ।।३६।।

वल्लभमताचा निर्देश

एतदात्मार्पणं शुद्धं गृहीतं वाल्लभे मते ।
तत्राप्युक्तं पुनः प्रेमवर्द्धनं मम संमतम् ।।३७।।
आत्मार्पणादचिन्त्यश्चेद्रसास्वादस्य संभवः ।
ताटस्थ्यं[२] वा भवेत्तेनाद्वैतहानिर्भवेत्पुनः ।।३८।।
आत्मरत्यविरोधेनैवार्पकत्वनिवृत्तये ।
योगे प्रेम्णा विरहोपलालनानुभवस्थितिः ।।३९।।
यद्यन्निवेदितं तत्तद्विस्मृतं सर्वमेव हि ।
तथापि स्मरति प्रेमचिन्हितं पुलकाश्रुभिः ।।४०।।
लोकहानौ न चिंता स्याद्वेदानपि च संन्यसेत् ।
वेदसारं परं ज्ञात्वा निर्गुणं परमेश्वरम् ।।४१।।
तमेव सगुणं शुद्धं गुरुदेवसमन्वितं ।
अनध्यस्तविवर्तं हि सत्संगेनानुभावयेत् ।।४२।।

---

हे शुद्ध आत्मर्पण वल्लभमतांत* मानलेले आहे परंतु तेथेच न थांबता पुन प्रेमवर्धन करणेंच योग्य आहे, असे माझें मत आहे ।।३७।।
आत्मार्पणानंतर भगवच्चिंतन केले नाहीं तर रसास्वाद म्हणजे भक्त्यहंकार विघ्न उत्पन्न होण्याचा संभव आहे किंवा ताटस्थ्य म्हणजे उदासीनता येईल व त्यामुळे पुनः अद्वैत हानी होईल म्हणजे अद्वैत स्थिति नाहीशी होईल ।।३८।।
आत्मप्रेमाशीं विरोध न येतां अर्पकभाव म्हणजे सोऽहंभाव निवृत्त व्हावा म्हणून संयोग असतांहि प्रेमाने विरह वागविण्याची अनुभवस्थिति बाणली पाहिजे।।३९

जे जे भगवंताला अर्पण केले त्याची आठवण येऊ नये तथापि रोमांच व आनंदाश्रु ह्या चिन्हांनी प्रेमाचे स्मरण दिसून येते ।।४०।।

वेदाचे सार अशा निर्गुण परमेश्वरास जाणून लोकहानीची चिंता सोडून द्यावी व वेदांचाहि म्हणजे प्रवृत्ति निवृत्तिमार्गाचाहि त्याग करावा।।४१
सगुण असे श्रीगुरु व देव यांचा समन्वय त्याच शुद्ध स्वरूपांत आहे, असे जाणून त्या सगुण अनध्यस्तविवर्ताचा सत्संगाच्या योगाने अनुभव घ्यावा ।।४२।।

---

*सहस्रपरिवत्सरमितकालजातकृष्णवियोगजनिततापक्लेशानंततिरोभावोऽहं भगवते कृष्णाय देहेंद्रियप्राणान्तःकरणतद्धर्मांश्च दारागारपुत्राप्तवित्तेहपराण्यात्मनासह समर्पयामि दासोऽहं कृष्ण तवास्मि" । एतद्गद्यं वल्लभमतेऽत्यंतनिगूढम् प्रायशो श्रीभागवतानुसारी । तथाप्यात्मनिवेदनानंतरमपि दासोऽहं कृष्ण तवास्मि इति यदुक्तं कृष्णवियोगजनिततापक्लेशानंताविर्भवनेच्छा च दर्शितेत्येतत्सर्वमस्मन्मते प्रेमलक्षणापरासूचकम् । तथापि तेषां मते आत्मनिवेदनमात्र पर्यवसायित्वाद्योजनाविषये भ्रमामः ।

मृदुमध्यमतीव्रभक्तिलक्षण

तस्यैवाहमिति प्रीतिर्मृदुर्जाता निवेदनात् ।
ममैवासौ भूमिकां तां मध्यसंवेगतो नयेत् ।।४३।।
मध्यमेयं हि माधुर्यात्परात्वमनुगच्छति ।
योगे वियोगे प्रीतिः स्याद्यथा वै व्रजयोषिताम् ।।४४।।
अदृष्टे दर्शनोत्कंठा दृष्टे विश्लेषभीरुता ।
दृष्टेऽदृष्टे परं दुःखं तदप्यस्ति महत्सुखम् ।।४५।।
अद्वैते सहजप्रीतिः क्रियाभावंविना हरौ ।
परा तातपदैरुक्ता दर्शिता रमणैरपि ।।४६।।
यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ ।
जागृतसौषुप्तवेदाभ्यां सा समा गुरुदेवयोः ।।४७।।

---

ही उत्पन्न झालेली प्रीति आत्मनिवेदन करून "तस्यैवाहम्" म्हणजे 'त्याचाच मी आहे' अशी होते. ही मृदु संवेगरूप प्रीति पुढे वाढवून तीच "ममैवासौ" म्हणजे 'माझाच तो' या मध्यमसंवेगरूप भूमिकेवर आणावी ।।४३।।
ही मध्यमसंवेगरूप प्रीति माधुर्यप्रेमाने पराभक्ति होते. या परा भक्तींत व्रजगोपिकांप्रमाणे 'योगे' म्हणजे संयोगांत व वियोगांत प्रीतिच असते ।।४४।।

भगवान् अदृश्य झाले तर दर्शनाची उत्कंठा लागते व दृश्य म्हणजे प्रगट झाले तर पुनः अदृश्य होऊन वियोग तर होणार नाहीना, अशी भीति वाटू लागते. प्रगट झाले किंवा गुप्त झाले असता अत्यंत तळमळ राहते[1] व ती तळमळ अत्यंत सुखरूप असते ।।४५।।

क्रियेचा भाव म्हणजे कर्तृत्वाहंकार उत्पन्न न होता अद्वैतांत श्रीहरीचे ठिकाणी स्वाभाविक अकृत्रिम प्रेम राहणे*[2] यालाच श्रीज्ञानेश्वरमहाराजांनी पराभक्ति म्हटले व आहे श्रीकृष्णांनीहि तेच सांगितलें आहे ।।४६।।
ज्याची ईश्वराचे व गुरूचे ठिकाणीं पराभक्ति आहे त्याची गुरु व देव यांचे ठिकाणी सारखीच भक्ति असते असे श्रुतीत व गीतेंत सांगितले आहे ।।४७।।

---

१* अत्र दुःखं द्विविधम् । प्रथमं स्वभावतो द्वेष्यम् । तच्च संसाररूपं त्रिविधम् । अध्यात्मिकमधिदैवमधिभूतमिति भेदात् । द्वितीयं तु दुःखशब्दमात्रं दुःखमिव प्रत्ययाभासमिष्टानुरागेणात्यंतव्याकुलत्वमिति तत्सुखमेवानुरागत्वादेतत्सद्भिरेवानुभाव्यं न हि तकण प्रतिपत्तुं शक्यते ।

२* तैसी क्रिया कीर न साहे । परी अद्वैतीं भक्ति आहे ।
हें अनुभवाचि जोगें नोहे । बोला ऐसें ।। ज्ञानेश्वरी अ. १८

**माहात्म्यज्ञानसंयुक्ता प्रीतिर्वै व्रजयोषिताम् ।**
**यथा तथा स एवाहं भूमौ रक्तिः परा भवेत् ।।४८।।**
**विज्ञातं सच्चिदानंदं समाधौ व्यतिरेकतः ।**
**अन्वयेन पुनस्तद्धि व्युत्थाने व्यक्ततामियात् ।।४९।।**
**स्थाय्येव रसतां यातः परानंदतया हरिः ।**
**अनध्यस्तविवर्तश्चेत् किमन्यदवशिष्यते ।।५०।।**
**अभेदे सच्चिदानंदं भेदे भाति तदेव हि ।**
**अध्यस्तजातिव्यावृत्तौ व्यक्तिः कृष्णशिवात्मिका ।।५१।।**

सेव्यसेवकभावांत प्रेमैक्य

**सेव्यसेवकभावेऽपि न प्रेमैक्यं विनश्यति ।**
**“शिवो भूत्वा शिवं यजेत्” इत्याह जननीश्रुतिः ।।५२।।**

ग्रंथसमर्पण

**श्रीमज्ज्ञानेश्वराचार्यः सर्वभूतगुहाशयः ।**
**तच्चरणगांगं पीत्वा तस्मै सर्वं समर्पितम् ।।५३।।**

---

जशी परमेश्वराचे महात्म्यज्ञान कायम असून व्रजयुवतीची भगवंताचे ठिकाणी प्रीति होती तशीच ती “स एवाहम्” (तोच मी) या भूमिकेवर आली म्हणजे पराभक्ति होते. ।।४८।।

व्यतिरेकानें जें सच्चिदानंद स्वरूप समाधींत जाणले तेंच व्युत्थान-दशेंत अन्वयज्ञानानें पुनः सगुण स्वरूपाला येते. ।।४९।।

स्थायी भाव म्हणजे असलेला प्रेमभाव परमानंद स्वरूपाला आला म्हणजे अनध्यस्तविवर्त असा हरि प्रगट झाल्यावर दुसरे काय शिल्लक राहिले? ।।५०।।

अभेदस्थितींत जे सच्चिदानंदस्वरूप भासते तें सच्चिदानंदस्वरूप भेद-स्थितीतहि सगुणरूपानें भासतें. सर्व अध्यास निवृत्त झाल्यावर प्रत्येक व्यक्ति कृष्णशिवात्मक भासते. ।।५१।।

सेव्यसेवकभाव राहत असला तरी प्रेमैक्यस्थिति विघडत नाही. कारण श्रुतिमातेनें सांगितलें आहे की “शिव होऊन शिवाचें पूजन करावें. ।।५२।।

श्रीज्ञानेश्वर सद्‌गुरु सर्वान्तर्यामी आहेत. त्यांचे चरणापासून निघालेले गंगोदक पिऊन ग्रंथकर्तृत्व त्यांनाच समर्पण केले. ।।५३।।

**।। श्रीमत्सद्‌गुरुज्ञानेश्वरकृपाप्रसादरूपा गोविंदानन्दसुधा समाप्ता ।।**

**श्रीकृष्णार्पणमस्तु**



॥ श्रीज्ञानेश्वर माउली समर्थ ॥

# कान्तकान्तावाक्यपुष्पम्

मंगलाचरण

यत्कृपालेशमात्रेण महिषो वेदपारगः ।
ज्ञानेश्वरं तमाचार्यं वंदे बद्धाञ्जलिर्मुदा ॥१॥
तपोभिः क्षीणपापानामिहामुत्रविरागिणाम् ।
सत्संवादमिषेणात्र भक्तिर्ज्ञानं च कथ्यते ॥२॥

विषयनिवृत्त्यनंतरमात्मज्ञानेनैव ब्रह्मणः सच्चिदंशद्वयमविद्यानिवृत्तिपूर्वकं ज्ञातुं शक्यते । किंतु स्वानंदप्राप्तये भक्तिरेव गरीयसीति श्रुतिस्मृति पुराणेतिहासानामभिप्रायः । तत्र भूबीजांकुरतरुफलरूपा निरूपाधिमायोपाधिसूत्रविराड्विष्णवश्चैते पंचेश्वरपुरुषा नीलकंठोक्ता भवन्ति। तत्र ब्रह्मैव भगवद्भक्तानुग्रहकरणेक्षणात् विष्णुरूपेण स्वयमाविर्भवति। स आविर्भावोऽपि नित्यःसुखैकानुग्रहकरणेक्षणमात्रवात्। अयमेव भक्तिसदनम्। तद्वाररक्षकज्ञानप्राप्तये शांकरपदार्थानुदाहरति ।

ईशो माया महान् जीवः संबंधो भेद एव च ।
अत्र पंचानादि सांताश्चेशोऽनादिरनंतकः ॥३॥
ईशो हि ब्रह्मशब्देन वेदान्ते समुदाहृतः ।
मायाऽज्ञान प्रधानाद्याः पर्याया मुनिसंमताः ॥४॥
मायोपाधिर्जगद्योनिः सर्वकृच्छबलो महान् ।
हेमगर्भोऽपरेशश्च पर्यायौ शबलांशकौ ॥५॥
मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।
तस्यावयवभूतैस्तु व्याप्तं जगदिति श्रुतिः ॥६॥
मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम् ।
संभवः सर्वभूतानां तस्मादिति परा श्रुतिः ॥७॥

अस्येशादिपदार्थत्रयस्य लक्षणानि भक्तिपदतीर्थामृतात् बुधैरुपहर्तव्यानि। पदार्थषट्कलक्षणानि अपेक्षितानि चेत् शारीरकशांकरभाष्यप्रोक्तानि अत्र विस्तरभयान्नास्माभिर्लिख्यन्ते । परापरेति भेदेन द्वे विद्ये मुंडकोक्तितः । तत्रोपनिषत्पुराणेतिहासवर्जितवेदवेदांगप्रतिपाद्याऽपरा । उपनिषत्पुराणेतिहासप्रतिपाद्या परेति "वेदार्थादधिकं मन्ये पुरणानि वरानने" इति नारदोक्तितः स्पष्टमेव प्रतीयते ।

शिष्य उवाच

यदेकं निष्कलं ब्रह्म व्योमातीतं निरंतरम् ।
यस्मिन्नतद्व्यावृत्त्या चकितं वदति श्रुतिः ॥८॥
तस्मिन् शुद्धे चिदाकाशे लक्षज्ञानैकगोचरे ।
अनादि जडरूपाया मायायाः किमुत प्रभा ॥९॥
ब्रह्मरूपात् पृथक् सास्ति ह्यपृथग्वाऽथ विद्यते ।
कस्य स्याद्बंधनं तस्याः कस्य नेति वदस्व भोः ॥१०॥

श्रीगुरुरुवाच

श्रृणु वत्स गुरुशास्त्रयोः साधनदशायां सिद्धदशायां च यत्प्रयोजनम् तत्ते सादिभ्रमानादिभ्रम निवृत्तिमिषेण फलरूपतयोपदिश्यते ।

प्रकृति पुरुषं चैव विद्ध्यनादि उभावपि ।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान् ॥११॥
ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते ।
अनादिमत् परं ब्रह्म न सत्तान्नासदुच्यते ॥१२॥
ब्रह्मैवानादिरूपं हि मायाऽनादिस्वरूपिणी ।
तस्मान्माया ब्रह्मरूपात्पृथक् क्वापि न विद्यते ॥१३॥
सादिभ्रमोपदेशे तु मुक्तानां बंधसंभवः ।
तस्मादनादिरूपेण माया तिष्ठतु सर्वदा ॥१४॥
सादिभ्रमस्य निवृत्तेः साधनं नैव विद्यते ।
तस्मादेषा ह्यनादिः स्यान्मायाऽविद्या च मे मतिः ॥१५॥
ब्रह्मात्मैक्यप्रत्ययेऽपि विस्मृतेः प्रत्ययो वृथा ।
सोऽयं सादिभ्रमस्तस्य निवृत्तिश्चास्ति नास्तिवा ॥१६॥
गुरुवाक्येन निवृत्तिं यः पश्यति स पश्यति ।
न पश्यन्ति ज्ञानमूढा ब्रह्मालस्याभिमानिनः ॥१७॥
यस्य ब्रह्माभिमानोऽस्ति देहेऽपि ममता तथा ।
न स योगी न वा भोगी केवलं दुःखभागसौ ॥१८॥
अनादिभ्रमनिवृत्तिर्न शास्त्राध्ययनं विना ।
सादिभ्रमस्य निवृत्तिर्न गुरोर्वचनं विना ॥१९॥
यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥२०॥

चक्रवाकखगस्यात्र मृगतोयं करोति किम् ।
तथा माधवभक्तस्य ह्यविद्या किं करिष्यति ॥२१॥
दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥२२॥
मृगांबुजन्मनिर्वृत्तिं चक्रवाको न चेच्छति ।
तथा माधवभक्तोऽपि मायासत्वमुपेक्षते ॥२३॥
चक्रवाकैरदृष्टाऽपि मृगैर्दृष्टा मरीचिका ।
अज्ञानिभिः संप्रदृष्टा भक्तोऽविद्यां न पश्यति ॥२४॥
एतत्ते कथितं गुह्यं ज्ञानेश्वरकृपालवात् ।
यो जानाति यथा वत्स सुखमत्यंतमश्नुते ॥२५॥
कान्तकान्तावाक्यपुष्पग्रथनं गद्यपद्ययोः ।
यः सेवते प्रभातेऽस्मिन् व्रजेद्धि परमां गतिम् ॥२६॥

॥ इति कांतकातावाक्यपुष्पं समाप्तम् ॥



॥ श्री ज्ञानेश्वर माउली समर्थ ॥

# उच्छिष्टपुष्टिलेशः

श्रीमान् ज्ञानेश्वराचार्य उमा माता शिवः पिता ।
पतिः कृष्णो राधिकाद्या भगिन्यो गोपिका मम ॥१॥
पंचायतनमित्येतत् हृद्यास्थाप्य प्रपूज्य च ।
प्रवक्ष्ये श्रीधरोच्छिष्टपुष्टिं स्वज्ञानशुद्धये ॥२॥
श्रीमद्भागवतं सूत्रं भाष्यं श्रीस्वामिसत्कृतिः ।
अत्रेयं मत्कृताटीका विवृतिर्बालबोधिनी ॥३॥
बहुभिः कर्षिता गर्वादियं श्रीधरसत्कृतिः ।
द्वैतमार्गाश्रितैर्मूर्खैः शांकराद्वैतदूषकैः ॥४॥
तेषामपि मतं सम्यक् निराकृत्य स्वयुक्तितः ।
गुणानुद्धृत्य सर्वेभ्यो वक्ष्ये टीकामनुत्तमाम् ॥५॥

मूळः— नमः श्रीपरमहंसास्वादितचरणकमलचिन्मकरंदाय ।
भक्तजनमानसनिवासाय श्रीरामचंद्राय ॥१॥

पुष्टौ न जायते बुद्धिर्मर्यादाभजनं विना ।
मर्यादामार्गतो भक्तिः संभवेद्रघुनंदने ॥६॥
पुष्टिमार्गमयी भक्तिर्यशोदानंदने भवेत् ।
साऽपीह शांकरी बोध्या वाल्लभी न सुसंमता ॥७॥
श्रीरामभजनं हित्वा यः कृष्णे भक्तिमिच्छति ।
स सन्मार्गबहिर्भूतः पापात्मा विच्युतव्रतः ॥८॥
अतः कृष्णस्तुतेरादौ स्तौति रामं कृपाघनम् ।
मर्यादापुरुषः श्रेष्ठो रामो राजीवलोचनः ॥९॥
तद्भक्त्यैव भवेद्भक्तिर्यशोदानंदने हरौ ।
अथवा दंडकारण्ये रामं राजीवलोचनम् ॥१०॥

मुनयः सुंदरं दृष्ट्वा बभूवुः कामविह्वलाः ।
त ऊचुः परमानंदं पीतकौशेयवाससम् ॥११॥
भवंतं करूणामूर्ते आलिंगामो निजेच्छया ।
भगवानपि विश्वात्मा तदा तानेवमुक्तवान् ॥ १२ ॥
कृष्णावतारे यूयं मां गोप्यो भूत्वा निजेच्छया ।
आलिंगथ महाभागा इत्याह जननी श्रुतिः ॥ १३ ॥

साच श्रुतिः " यूयं कृष्णावतारे गोपिका भूत्वा मामालिंगथ " इति कृष्णोपनिषादि प्रसिद्धा । आस्वादित आ ईषदर्थे । ईषत्सेवितरामचरण-कमलाश्चैते मुनयः । कृष्णावतारं विनाऽऽतकामाभावोक्तेः । तस्मात् श्रीरामः परमहंसैरीषत्सेवितचरणकमलः । श्रीकृष्णस्तु सर्वथा सेवितचरणकमल इति भावः । मोक्षश्रियायुक्तास्ते श्रीपरमहंसाः । अत्र स्वयंधीराः पंडितंमन्यमानाः केचिदाहुर्वंशीधरशर्मा तत्कक्षीकृता विश्वनाथादयः । " हंसः परमहंसः श्रीपरमहंस इति । तत्र च हंसाः पक्षिविशेषाश्चंचुभिर्जलात् दुग्धविवेचकाः परमहंसास्तु प्रकृतिपुरुषविवेचकाः । श्रीपरमहंसाश्चैतन्यार्चिंतका भक्ता " इति । पुनश्च तैः कल्पितायां टीकायामेवमुक्तम् " भक्ताश्चैतन्यमात्रचिंतका... प्रकृतिं विचारेण परित्यजंति पुनस्तां कदापि न स्मरंति " । तस्मिन्नेव स्थाने उत्तरपंक्तौ पुनरिदमुक्तम् " प्रकृतिं भगवद्व्यतिरिक्तां न पश्यंति किंतु भगव-च्छक्तिमेव तां मन्यंते" । अत्रेदं प्रष्टव्यम् । यदि भगवदभिन्नां प्रकृतिं पश्यंति तदा कथं विचारेण तां परित्यजंति। कुत्र वा दृष्टं सूर्याभिन्नप्रकाशपरित्यागेन सूर्यग्रहणम् । परित्यक्तुं योग्या प्रकृतिरन्या भगवदभिन्ना प्रकृतिरन्येति चेत्तदा न तन्महात्मानः क्षमंते अकंठोक्तेः । न महात्मभिर्वेदविरुद्धः परमतसमन्वयः संपाद्यः । अतो बहुषु जन्मसु संपादितः श्रीमच्छंकराचार्यभगवत्पूज्यपादद्वेषो ह्यस्य महामोहस्य हेतुः । पक्षिविशेषाणां मनुष्यसमुदाये संग्रहणसारस्यं तु न ज्ञातुं शक्नुमः पक्षिजन्मग्रहणं विना । वस्तुतस्तु कुटीचको बहूदको हंसः परमहंस इति भेदाच्चतुर्विधस्तुर्याश्रमः श्रुतिस्मृतिभिरुक्तः । तत्र परमहंसो

नाम निवृत्तनिखिलप्रत्यवायः श्रीपूर्वग्रहणं बहुमानार्थं न श्रीसंप्रदायद्योतनार्थम् । यत्त्वेतेषां पंडितंमन्यानां विद्याहानोक्तिः सा वस्तुस्थितिरेव न शालीनतापरा । अलं स्वविस्मरणपटूनां वचननिरीक्षणेन ।

निवृत्तनिखिलानर्थैर्गोविंदपदलब्धये ।
ईषत्संसेवितो यस्य पादपंकजसौरभः ॥ १४ ॥
स गंधोऽपि द्विधा प्रोक्तो चिदानंदविभेदतः ।
ज्ञानसद्भक्तिपर्यायैर्दर्शितोऽयं मनीषिभिः ॥ १५ ॥
तत्र चिद्‌गंधलाभस्तु श्रीरामपदसेवनात् ।
आनंदमकरंदस्य लाभः कृष्णपदाश्रयात् ॥ १६ ॥
अयं भावो रामभक्तेर्ज्ञानमेव फलं भवेत् ।
कृष्णभक्तिस्तु बोधादप्यूर्ध्वं सम्यक् विराजते ॥ १७ ॥
रामायणे स्वयं रामः स्वभक्तिज्ञानसाधनम् ।
प्राह कृष्णस्तु गीतायां विज्ञानं भक्तिसाधनम् ॥ १८ ॥

"यावन्न पश्येदखिलं मदात्मकं तावन्मदाराधनतत्परो भवेत्

(अध्यात्मरामायण उत्तरकांड अ. ५ श्लो ५८)

ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति ।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥

(गीता अ. १८ श्लो.)

सौश्रुतश्रुतिरप्याह "यं सर्वे देवा नमंति मुमुक्षवो ब्रह्मवादिनश्च" ।

आत्मारामाश्च मुनयो निर्ग्रंथा अप्युरुक्रमे ।
कुर्वंत्यहैतुकीं भक्तिमित्याह सात्वती श्रुतिः ॥ १९ ॥
सूत्रकारश्च शांडिल्य एवमेवोक्तवान् स्वयम् ।
तत्तु तत्रैव द्रष्टव्यम् संक्षेपोऽत्र प्रदर्शितः ॥ २० ॥
भक्तोऽपि द्विविधः प्रोक्तो जनः कान्तेति भेदतः ।
मर्यादायां जनः प्रोक्तः पुष्टौ कान्तेति गीयते ॥ २१ ॥

तेषां भक्तजनानां वै मर्यादामार्गगामिनाम् ।
मानसे वसति श्रेष्ठो रामो राजीवलोचनः ॥ २२ ॥
कामिनीनां तु गोविंदो मानसे नंदनंदनः ।
रामः कृष्णस्वरूपेण स्वयमायाति चंद्रताम् ॥ २३ ॥
श्रीरामः सूर्यवंशे यश्चंद्रवंशे स चंद्रताम् ।
यदायाति तदा रामचंद्रः कृष्ण उदीर्यते ॥ २४ ॥
( चदि आल्हादे । चंदयति आनंदयति )
तस्मै श्रीरामचंद्राय कृष्णाय नम इत्यपि ।
रहस्यं परमं त्वेतत् स्फुटमुद्घाटितं मया ॥ २५ ॥
अथवा राति गृण्हाति लये विश्वं निजोदरे ।
असौ र इति संप्रोक्तो रा दीप्त्यादानयोः स्फुटः ॥ २६ ॥
तेन प्रकाशकः साक्षी अम्यते प्राप्यतेऽतिभिः ।
उपायैर्वेदसंप्रोक्तैरमगत्यादिषूच्यते ॥ २७ ॥
रश्चामश्च भवेद्रामो जगजन्मादिकारणम् ।
तटस्थलक्षणैर्ह्येतत् स्वरूपं ज्ञानमेव हि ॥२८॥
मुक्तप्राप्यं परं ब्रह्म राम इत्युचते सदा ।
भक्तप्राप्य यदा तत्स्यात्तदा कृष्ण इतीर्यते ॥२९॥
मर्यादाभजनेनातो ध्यात्वा श्रीरघुनंदनम् ।
श्रीगोविंदे नंदसूनौ समाधिफलभाङ्मुनिः ॥३०॥
नमनं कृतवानादौ भक्तिद्वयसमायुतः ।
रामान्वयेन कृष्णायेत्यर्थो भाति स्फुटो मम ॥३१॥

अत्र कश्चित् वंशीधरः श्रीमद्भगवते आदिमध्यावसानेषु श्रीकृष्णस्यैव प्रशंसनात् श्रीकृष्णमंगलमेव कार्यमित्युत्थाप्यशंकां कृत्वा समाधानमाह । यदपि सर्वेऽवताराः समर्थास्तथापि समुद्रे शिलातारणे राम एव एकस्तथाऽहमपि रामवंदनेनेमं भागवतसमुद्रं तरिष्याम्यतो राममंगलमुचितमिति ।

तदसत् । अयं वंशीधरः किं रामानुजानुयायी चैतन्यानुयायी शांकरमतानुयायी वेति न्रमामः । क्वचिदयं रामं शंसति क्वचित् कृष्णं क्वचित् गणपतिम् । कदाचिच्छंकराचार्यं निंदति क्वचिच्च भाष्यकारा इति संबोधनेन तस्मिन्नादरं च दर्शयति । अतोऽस्य चेष्टयोन्मत्त इति विज्ञायते । संस्कृतभाषाऽभिज्ञोऽप्ययं सिद्धान्ते संशयवानेव । किं रामस्मरणेनैव परंपारं गच्छंति संतः । कृष्णादिस्मरणेन किं भवति । यदि रामस्मरणेन भागवतसमुद्रतरणं स्यात् तदा गणेशस्मरणेन निर्विघ्नग्रंथसमाप्तिः किं न स्यात् । अथवा रामस्मरणेन भागवतसमुद्रे सेतुनिबंधनं कृतं चेत् हंत तर्हि संसारसमुद्रवद्भागवतं समुद्र एव । यस्मिन्नाप्ता अवश्यं दुःखमाप्नुयुः । अन्यतराऽस्य भागवतार्थस्फुटकर्त्री मतिः । अस्त्वेतत् । किमुपजीव्याना कटाक्षनिक्षेपेण । अस्माभिरुक्तमेव राममंगलस्वारस्यं भावयंति संतः ।

नमनं भजनं चैव गाढालिंगनमेव च ।
त्रयः प्रकाराः प्रेम्णः स्युर्भक्त्युत्कर्षाद्भवंति ते ॥३२॥
नमनं चातिमर्यादापालने हि प्रवर्तते ।
तेनेंद्रियाणां संरोधो विषयाणां निवर्तनम् ॥३३॥
भजनं सेवकानां तु सर्वसंकटनाशकम् ।
तादिष्टदेवतायाः स्याद्भक्तिरूपसमाधिदम् ॥३४॥
अत एवोक्तवान् पूर्वं श्रीरामं यतिसंस्तुम् ।

मूळः– वागीशा यस्य वदने लक्ष्मीर्यस्य च वक्षसि
यस्यास्ते हृदये संवित्तं नृसिंहमहं भजे ॥ २ ॥

अस्मिन् श्लोके त्विदं ब्रूते तं नृसिंहमहं भजे ॥ ३५ ॥
नमनं रघुनाथस्य सेवनं नृहरेरपि ।
कृष्णस्यालिंगनं गाढमिति प्रेम्णो व्यवस्थितिः ॥ ३६ ॥
दास्यलालनमाधुर्यभेदाद्भक्तिरुत त्रिधा ।

श्रीरामे तु भवेत् दास्यं लालनं नृहरौ तथा ॥ ३७ ॥
श्रीकृष्ण एव माधुर्यमैक्यप्रेमस्वरूपकम् ।
पक्वदास्यात् लालनं स्यात्ततश्चैकमयी रतिः ॥ ३८ ॥

अत्र प्रमाणं हनुमन्नाटकोक्तिः ।

देहबुद्ध्या तु दासोऽहं जीवबुद्ध्या त्वदंशकः ।
आत्मबुद्ध्या त्वमेवाहमिति मे निश्चला मतिः ॥
दास्ये तु गुह्यकाद्याः स्युः प्रल्हादाद्यास्तु लालने ।
माधुर्ये राधिकाद्याः स्युरित्यैतिह्यप्रमाणतः ॥ ३९ ॥
नमनं कृतवानादौ रामे दास्यं मुनीश्वरः ।
स्वेष्टस्य भजनं त्वत्र प्राह लालनसंज्ञितम् ॥ ४० ॥
माधुर्यमैक्यरूपं तु परश्लोके वदिष्यति ।
नमस्कार्योऽयमस्माभिः श्रीधरः श्रीधरो यथा ॥ ४१ ॥
नरो जीवस्तत्समूहो नारस्तास्मिन् हरिर्हरिः ।
जीवाभासेषु सिंहोऽयं मुख्यो जीवः परेश्वरः ॥ ४२ ॥
स एव नित्यमुक्तोऽस्ति सर्वज्ञः सर्वशक्तिमान् ।
एकः सर्वधियां साक्षी भगवान् नरकेसरी ॥ ४३ ॥
स्वाभासानुग्रहार्थाय लीलाधृततनुः स्वयम् ।
प्रल्हादवरदो देवस्तं नृसिंहमहं भजे ॥ ४४ ॥
नरो वा मुख्यजीवः स्यात्तदवच्छिन्नचेतनम् ।
परेशः परमानंदो गृहीतवपुरीश्वरः ॥ ४५ ॥
स एव भगवान् शुद्धस्तं नृसिंहमहं भजे ।
वंशीधरकृतार्थोऽपि ग्राह्योऽस्ति यदि रोचते ॥ ४६ ॥
विशिनष्टि पुनस्तं हि रसाकारं महेश्वरम् ।
यस्यावयवसंबोधात् सृष्टिदृष्टेस्तदंगता ॥ ४७ ॥
वर्तते वदने यस्य वाचामीशा सरस्वती ।

कर्मकांडमयी शुद्धा वेदाख्या धर्मरूपिणी ॥ ४८ ॥
प्रवर्तयति या जीवान् धर्मे लोकान् यथा प्रभुः ।
वक्षसि श्रीजगन्माता हेमलेखामयी शुभा ॥ ४९ ॥
संवित्तु हृदये शुद्धा वेदान्तोपनिषन्मयी ।
धर्मरूपेण गोविंदो जीवकर्मानुसारतः ॥ ५० ॥
सर्वकर्मा भवेदीशः सर्वकामश्रिया युतः ।
संविदा परमानंदः सर्वज्ञः सर्वशक्तिमान् ॥ ५१ ॥
भक्तानुग्रहसंपन्नं तं नृसिंहमहं भजे ।
नृसिंहोऽसौ नरश्चाहं स्याम् तद्वत्तस्य लालनात् ॥ ५२ ॥
प्रऱ्हादवत्तत्सुतोऽहमंशोऽतस्तं समाश्रये ।
अधो नरतनुस्तूर्ध्वे सिंहरूपो दयाघनः ॥ ५३ ॥
जीव एव भवेदीश इति भावप्रदर्शकः ।
प्रसन्नः करुणामूर्तिः सर्वभूतगुहाशयः ॥ ५४ ॥
मयि प्रीतः सदानंदस्तं नृसिंहमहं भजे ।
ईशबुद्धया लालने या माधुर्ये याति सैकताम् ॥ ५५ ॥
सम्यक् भक्तिश्च संबंधात् बोधदर्शितमार्गतः ।
पूर्वभूमौ कृतां भक्तिमुत्तरां भूमिमानयेत् ॥ ५६ ॥
अन्यथा विघ्नबाहुल्यमित्याह मधुसूदनः ।
अतोऽत्र मधुराभक्तिरीशैक्येन प्रदर्शिता ॥ ५७ ॥
मूळः— विश्वसर्गविसर्गादिनवलक्षणलक्षितम् ।
श्रीकृष्णाख्यं परं धाम जगद्धाम नमाम तत् ॥ ३ ॥
कृष्णं सर्वफलं प्राह विश्वसर्गादिना मुनिः ।
स्वभावस्फुरणं लीला लोकालोकभिदा द्विधा ॥ ५८ ॥
मुक्तिरूपा लोकलीलाऽलौकिकी ज्ञानरूपिणी ।
सविशेषनिर्विशेषभेदात् ज्ञानं द्विधामतम् ॥ ५९ ॥

ईशत्वबोधकं चाद्यमंत्यं ब्रह्मत्वज्ञापकम् ।
तटस्थं च स्वरूपं च ब्रह्मणो लक्षणद्वयम् ॥ ६० ॥
जगज्जन्मादिहेतुत्वं तटस्थं लक्षणं भवेत् ।
सत्यज्ञानमनंतादिरूपं तत्स्यात्स्वरूपकम् ॥ ६१ ॥
अत्र सर्गाद्यष्टकेन प्रोक्तमाद्यं तटस्थकम् ।
द्वाभ्यां प्रोक्तं स्वरूपं च तत्तु गोविंद एव हि ॥६२॥
आनंदाकृतिरध्यासवर्जितः कृष्ण आश्रयः ।
सर्गः करणसंभूतिर्विसर्गः कार्यजन्म च ॥६३॥
वैकुंठादिजयः स्थानं पोषणं तज्जने घृणा ।
कर्मणां वासनैवोतिर्मन्वंतरश्च सत्क्रिया ॥६४॥
सकृष्णांशावताराणां विश्वलालनवैभवम् ।
ईशानुकथनं प्रोक्तं निरोधः शयनं लये ॥६५॥
मुक्तिर्हित्वाऽन्यथाभावं स्वरूपेण व्यवस्थितिः ।
आभासावस्थितेर्मुक्तेः शुद्धा चितिरिहाश्रयः ॥ ६६ ॥
न सा बद्धा न सा मुक्ता सर्वदानंदरूपिणी ।
अथवा सत्यसंकल्पादिस्वरूपः परेश्वरः ॥ ६७ ॥
मुक्तैः प्राप्यो न वै शुद्ध इति भाष्यकृतां मतम् ।
अनध्यस्तविवर्तत्वात् स कृष्णोऽसाविहाश्रयः ॥ ६८ ॥
जनिः सर्गविसर्गाभ्यां जगतः परिकीर्तिता ।
अत्र सर्गविसर्गाख्यौ जगतो जन्मसंज्ञकौ ॥ ६९ ॥
स्थानं पुष्टिरूतिमन्वंतरौ विश्वस्य पालनम् ।
निरोधः संप्रतिष्ठा स्याद्विश्वजन्मादिकं त्विदम् ॥ ७० ॥
सर्वज्ञात्सर्वशक्तेः स्यात्तद्ब्रह्मेति श्रुतिर्जगौ ।
लौकिकेऽयं हरेर्लीला मायावृत्तिविजृंभिता ॥ ७१ ॥
कृष्णोऽनया जगद्धाम नमनं कृतवान्मुनिः ।

सत्यज्ञानानंतसौख्यरूपं कैवल्यमुच्यते ॥ ७२ ॥
स्वरूपलक्षणं प्रोक्तं श्रुतिभिर्ब्रह्मणो हि तत् ।
बंधनं कल्पितं तस्मात्कैवल्यमपि कल्पितम् ॥ ७३ ॥
इदं नवकमेवातो लक्षणं लक्ष्यमाश्रयः ।
आश्रयो हि परं धाम मुक्तानां चित्तकर्षकम् ॥ ७४ ॥
आत्मारामाश्च मुनयो वर्णयंति च यद्गुणान् ।
तदेवं च परं ब्रह्म परं धाम परागतिः ॥ ७५ ॥
ततः परतरं नास्ति सा काष्ठेति कठश्रुतिः ।
विदेहमुक्तौ प्राप्यं तत् जीवन्मुक्तौ तु सेव्यताम् ॥ ७६ ॥
लीलागृहीतदेहं तं श्रीकृष्णाख्यं वयन्नुमः ।

अत्र कश्चित् स्वमतीयो वोपदेवो विष्णुभक्तानां प्रपंचाभावो निरोधः। निष्प्रपंचानां स्वरूपलाभो मुक्तिः। मुक्तानां ब्रह्मस्वरूपेणावस्थानमाश्रय इति परमहंसप्रियायां वदति। हेमाद्रिस्तदनुगामी चैतत् शिरःकरोति। तत्तयोरेव शोभतेऽदृष्टभागवतयोः। "निरोधस्यानुशयनमात्मनः सह शक्तिभि"रिति द्वितीयस्कंधदशमाध्यायषष्ठश्लोके प्रलयसंज्ञकनिरोधस्योक्तत्वात्। स्वामिपादैरपि तथैवांगीकृतत्वाच्च। नागमिकमेवैतस्य व्याख्यानम्। युक्त्याऽप्यसंगतं प्रतीयते। प्रपंचाभावनिष्प्रपंचस्वरूपलाभब्रह्मस्वरूपावस्थानानां वस्तुतः स्वरूपेणैकत्वात्पर्यायतापत्तेः। यच्चात्रैव हेमाद्रिर्लीलालीलावतोऽभेदमाशंक्य रज्जुसर्पदृष्टान्तेन समाधत्ते तदप्यसत्। आश्रयादीनां रज्जुसर्पादिवत्कल्पितत्वेन ब्रह्मणोऽपि कल्पितत्वात् शून्यवादापत्तिरन्यथा दशधा हरेर्लीलेति प्रतिज्ञाहानिश्च।

अथवा द्विविधः कृष्णो यदुनाथो व्रजेश्वरः ॥७७॥
पाद्मयामलमानाभ्यां सम्यक् सिद्धिर्विलोकिता ।
तत्राद्यो जगतो धाम परं धाम व्रजेश्वरः ॥७८॥
मुखांगो मधुरः श्रमान् तस्मै सर्वे वयं नुमः ।

"लक्ष्मीः सरस्वती विष्णोस्तुलसी च तृतीयका ॥
गंगा चतुर्थी विज्ञेया भार्या वैकुंठवासिनः"
इति ब्रह्मवैवर्तोक्तेः ।
ताभिर्युक्तः श्रियायुक्तः श्रीकृष्ण इति चोच्यते ॥७९॥
श्रीः श्रीः श्रीः श्रीः पदानां तु ह्येकशेषसमासतः ।
अत्रैकवचनं बोध्यं श्रीकृष्णपदघट्टने ॥८०॥
श्रीशब्देनात्र वा राधा ग्राह्या कृष्णस्तया युतः ।
श्रीकृष्ण इति हि प्राहुर्मुनयो भक्तिवादिनः ॥८१॥

श्रीयते सेव्यते कृष्णेनापीति वा श्री राधा। "राधैवाराध्यते मयेति" भगवदुक्तेः। यद्वा श्रयत्याराध्नोति सर्वदा वृंदावननिकुंजगं श्रीनंदनंदनमिति निरुक्त्या श्री राधैव। "वृंदावननिकुंजस्थो राध्यते सर्वदा यया। नंदसूनुरतो राधा सोच्यते मुनिसत्तम" इति नारदीयात् विग्रहो द्वितीयो बोध्यः।

वंशीरवेण गोपीनां हृदयाकर्षको हरिः ।
प्रेमभक्तिमयः पूर्णः कृष्ण इत्यभिधीयते ॥८२॥
यद्वा— "कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ।
तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते ॥" इति
तापनीयश्रुतेस्त्रिपादमहानारायणोक्त आनंदसाकार एव श्रीकृष्णः ।
अथवा— "कोटिजन्मकृतं पापं कृषिरित्युच्यते बुधैः ।
तन्नाशकरो देवः कृष्ण इत्यभिधीयते ॥" इति

ब्रह्मवैवर्तोक्तेः । "अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः" इति भगवदुक्तिप्रामाण्यात् सर्वपापौघनाशश्च कृष्णपदार्थः ।

ननु भागवतं प्रोक्तं पुराणं दशलक्षणम् ।
कुतोऽत्र ब्रह्म कृष्णाख्यं लक्षितं नतवान् मुनिः ॥८२॥
"तेनेयं वाङ्मयी मूर्तिः श्रीकृष्णस्य न संशयः ।

इति पाश्चात्स्त्वयं कृष्णः श्रीमद्भागवताभिधः ॥८३॥
सदा सद्भिर्नमस्कार्यो यतस्तं नतवान्मुनिः ।

नन्वस्मिन् श्लोके यत्तदोर्नित्यसंबंध इति प्रतिज्ञां विहाय तन्मात्रस्यैवोदाहरणमनुचितमिति चेन्न । "तत्वमसीति" सौषुप्तश्रुतौ "ॐ तत्सदिति निर्देशो ब्रह्मणास्त्रिविधः स्मृत" इति जाग्रच्छ्रुतौ च तच्छब्दस्य ब्रह्मवाचकत्वात् यच्छब्दनिरपेक्षं तदुदाहरणमत्र न्याय्यम् । "प्रक्रान्तप्रसिद्धानुभूतार्थविषयस्तच्छब्दो यच्छब्दोपादानं नापेक्षत" इति काव्यप्रकाशोक्तेरप्येतदूह्यम् । कुमारसंभवेऽपि "कला च सा कान्तिमती कलावत" इति । ननु कथं दशलक्षणस्य महापुराणस्य श्रीकृष्णमूर्तेरपि नवलक्षणलक्षितोक्तिरुचिता । उच्यते । ग्रंथापेक्षया दशलक्षणोक्तावपि मुख्यमूर्तिरूपकृष्णापेक्षया दशमस्य श्रीकृष्णस्य लक्ष्यत्वमपि भागवत एवोक्तं द्वितीयस्कंधे दशमाध्याये "दशमस्य विशुद्ध्यर्थं नवानामिह लक्षणम् । वर्णयन्ति महात्मानः श्रुतेनार्थेन चांजसा" । साम्यमप्येवं वक्ष्यति । लक्षणस्य लक्ष्यतावच्छेदकसमानियतत्वरूपत्वात् नवानामेव लक्षणत्वमुपपद्यते । अतः सुष्ठूक्तं "नवलक्षणलक्षितं श्रीकृष्णाख्यं परं धाम नमाम" इति

भार्या धर्मे भवेत् दासी सखी चार्थे सुखे समा ।
माधुर्ये दास्यभावाच्च नमनं कृतवान्मुनिः ॥ ८४ ॥
मुग्धा मध्या तथा प्रौढा भेदाद्भार्या त्रिधाऽथवा ।
तत्र मुग्धा प्रणमति मध्या वै भजते प्रियम् ॥ ८५ ॥
गाढमालिंगाति प्रौढा माधुर्येऽत्र मुनिस्त्वतः
नमस्करोति गोविंदं मुग्धभावेन स्वप्रियम् ॥ ८६ ॥

मूल— माधवो माधवावीशौ सर्वसिद्धिविधायिनौ ।
वंदे परस्परात्मानौ परस्परनुतिप्रियौ ॥४॥

परंतु मधुरप्रेम्णि विलासानंदसंस्थितेः ।
वैराग्यहानिर्नो भूयादतः शंकरमाश्रयेत् ॥ ८७ ॥

वैराग्येऽपि रसास्वादसंज्ञो विघ्नः प्रजायते ।
अतः समाश्रयेत्कृष्णं गोविंदं भक्तवत्सलम् ॥८८॥
कथं नन्वेकमूर्त्यैव सर्वे कार्ये न संभवेत् ।
शृण्वंगयोर्द्वयोः कार्ये न चैकांगं करोति हि ॥८९॥
शिवस्य हृदयं विष्णुर्विष्णोश्च हृदयं शिवः ।
ईषदप्यंतरं कृत्वा रौरवं नरकं व्रजेत् ॥९०॥
इति वाक्यात्परं ब्रह्म कृष्णशंकरसंज्ञितम् ।
प्रौढप्रियात्वलाभाय स्तौति स्वामी हरिप्रियः ॥९१॥
मायेशो निर्गुणः शुद्धो साकारः स रमेश्वरः ।
मधुवंशे भवो वाथ माधवः परिकीर्तितः ॥९२॥
अथवा मां प्रकृत्याख्यां धुनोतीति धवः स्मृतः ।
माधवस्तेन संप्रोक्तो भगवान् परमेश्वरः ॥९३॥
उमा कात्यायनी गौरी तत्प्रियः स उमाधवः ।
उभावपि चितावीशौ न जीवः कोऽपि विद्यते ॥९४॥
केचित्तु वैष्णवाः प्राहुः शिवो जीवो हरिः प्रभुः ।
केचिच्छैवास्तथा प्राहुर्जीवो विष्णुः शिवः प्रभुः ॥९५॥
तदसत्यं यतो नोक्ता जीवोपास्तिः श्रुतौ स्मृतौ ।
स्कांदे तूपासना प्रोक्ता शिवविष्ण्वोः परस्परम् ॥९६॥
पुनः शैवे यथा प्रोक्तो विष्णुः शंभोरुपासकः ।
वैष्णवेऽपि तथा प्रोक्तः शंभुर्विष्णोरुपासकः ॥९७॥
एवमन्योन्यवादे तु तदैक्यनिर्णयं विना ।
सर्वेषां वै पुराणानां समुच्छेदप्रसंगता ॥९८॥
अतस्तु कौर्मवाक्यं हि निर्णयेऽत्र समाश्रयेत् ।
आगमोत्थविरोधस्य ह्यागमादेव निर्णयः ॥९९॥
सत्यसंकल्पादिधर्मान् हरौ पश्यंति वैष्णवाः ।

शिवे पश्यंति तान् धर्मान् शैवास्तस्मादुभौ प्रभू ॥१००॥
जन्मौषधीमंत्रतपःसमाधिः केवलं पदम् ।
एतासामपि सिद्धीनां निर्मातारौ महेश्वरौ ॥१०१॥
अथवोहः शब्दशास्त्रं तापत्रयनिवारणम् ।
सुहृत्प्राप्तिर्दानमेषां निर्मातारौ महेश्वरौ ॥१०२॥
जीवाज्ञाननिवृत्त्यर्थं वेदवाक्येन कल्पितम् ।
कैवल्यमपि वक्ष्यामस्ततः शिवविनिर्मितम् ॥१०३॥
यो हरिः स शिवः साक्षात् यः शिवः स हरिः स्मृतः ।
हरिवंशे त्विति प्रोक्तं तस्मान्नेशद्वयस्थितिः ॥१०४॥
रुद्रो नारायणश्चैवेत्येकं सत्वं द्विधा कृतम् ।
लोके चरति कौंतेय व्यक्तिस्थं सर्वकर्मसु ॥१०५॥
मम रुद्रस्य यः कश्चिदंतरं परिकल्पयेत् ।
तस्य पुण्यक्रियाः सर्वा निष्कलाः स्युर्न संशयः ॥१०६॥
इति पाद्मादुभावन्योन्यात्मानौ भेदवर्जितौ ।
तस्मादेकः परेशो हि विग्रहद्वयवान् स्थितः ॥१०७॥
हरहर्योः प्रकृत्यैक्यं साधनैक्यं तथापि तु ।
प्रत्यये भजतां रुच्या संप्राप्तौ भिन्नरुच्यताम् ॥१०८॥
इत्युक्तेः सर्वथा भेदो भक्तिमूर्त्योरपाकृतः ।
बिल्वोपचारादिभेदो लौकिज्ञः कृपया कृतः ॥१०९॥
अथवा स्वागमेनोक्तो विरुद्धो न फले भवेत् ।
प्रथमोपास्तिदार्ढ्याय साधने परिकल्पितः ॥११०॥
शिवस्य कृष्णपत्नीत्वं कृष्णो भार्या शिवस्य च ।
दर्शयत्यागमोऽतस्तौ परस्परनुतिप्रियौ ॥१११॥
नतिप्रियाविति पाठेऽन्यभक्तनमनादहो ।
अन्यः प्रसादं कुरुते मानमत्र भवेत्स्मृतिः ॥११२॥

शैवो भूत्वा नमेद्विष्णुं तेन शंभुः प्रसीदति ।
वैष्णवश्चेन्नमेच्छंभुं तेन विष्णुः प्रसीदति ॥११३॥

शिवविष्णवोर्भवेदैक्यं कृष्णोऽन्यस्तद्वरिष्ठकः ।
एवं वदति यो मूर्खः सोऽप्रामाण्यादुपेक्षितः ॥११४॥

पिता शंभुः पतिः कृष्णः पिता कृष्णः पतिः शिवः ।
उभयोर्न भवेद्भेद इति प्राचां मतं हितम् ॥११५॥

कृष्णभक्तौ गुरुः शंभुः शिवभक्तौ गुरुर्हरिः ।
अन्यथा न भवेत्कार्यमिति मत्तातसंमतिः ॥११६॥

श्रद्धावस्तूसी आदरु । करिता जाणिजे प्रकारू ।
जरी होय सद्गुरू । सदाशिवु ( ज्ञानेश्वरी )

अथवा श्रीगुरुः श्रीमान् श्रीकृष्णः शिष्यरक्षणे ।
जीवत्वोपसंहृतौ स्यात् स शिवः करूणार्णवः ॥११७॥

उत्पत्तिस्तु न जीवस्य ह्यनादित्वात्प्रकल्पिता ।
तस्माद्गुरुः परंब्रह्म कृष्णशंकरसंज्ञितम् ॥११८॥

ज्ञानं शांकरमद्वैतं मधुरं भक्तिसंज्ञितम् ।
भक्तिः प्रीतिराविच्छिन्ना गुरौ वा शिवकृष्णयोः ॥११९॥

सद्गुरावुत्तमा प्रीतिर्मध्यमा शिवकृष्णयोः ।
कृष्णेऽथवा शिवे वा या भक्तिः सा स्यात् कनीयसी ॥१२०॥

अतो ज्ञानेश्वरस्वामी पितृत्वाच्छंकरो मम ।
श्रीकृष्णः स हि कान्तत्वात् स्वयमात्मा गुरुत्वतः ॥१२१॥

व्याख्यातेयं चतुश्लोकी मंगला मंगलप्रदा ।
ज्ञानेश्वरकृपालेशान्मधुराद्वैतबोधिनी ॥१२२॥

हरिः ॐ तत्सच्छ्रीमत्सद्गुरुज्ञानेश्वरकृपाप्रसादे गद्यपद्यान्विते ।
श्रीधरोच्छिष्टपुष्टिलेशे चतुश्लोकीव्याख्यानं संपूर्णम् ।

मूळः— संप्रदायानुरोधेन पौर्वापर्यानुसारतः ।
श्रीभागवतभावार्थदीपिकेयं प्रतन्यते ॥ ५ ॥
नमस्तेऽलंदिनाथाय नमस्ते रसमूर्तये ।
नमस्ते गुरवे स्वामिन् ज्ञानेश्वर नमोऽस्तु ते ॥१॥
सट्टीकायाः स्वकन्याया अभिधाकृतिसंस्कृतिम् ।
संप्रदायानुरोधेन करोति कविराडिह ॥ २ ॥
मत्स्येंद्रादिस्वशिष्येभ्यो यज्ज्ञानं प्रोक्तवान् शिवः ।
चतुष्कोक्त्यादिना यत्तु प्रोक्तवान् ब्रह्मणे हरिः ॥ ३ ॥
तद्वै परंपराप्राप्तं विवृतं शंकरादिभिः ।
मधुरं भक्तिसंयुक्तं संप्रदायश्रियोर्जितम् ॥ ४ ॥
इदं भागवतं चापि संप्रदायसमाश्रयम् ।
अतस्तदनुरोधेन कुर्वे टीकामनुत्तमाम् ॥ ५ ॥
पूर्वापरविवेकेन मया यत्नोऽयमाश्रितः ।
अतो ग्रंथमनालोच्य पूर्णं दोषो न दीयताम् ॥ ६ ॥
टीकांतराणि दुराविप्रभानि बाह्यार्थरत्नानि चकासयंतु ।
गूढार्थतत्वप्रविकाशिनीयं सद्दीपिका भागवते गृहे स्यात् ॥७॥
शब्दविग्रहकारिण्योऽन्याष्टीकाः शुष्कवादिभिः ।
दर्शनीया त्वियं भक्तैर्हृदि धार्यार्थदीपिका ॥ ८ ॥

अत्र कश्चिच्छंकराचार्यविद्वेषको वंशीधर एवमाह । "संप्रदायो नाम भक्तिमार्गोपदेशकर्तृणां भागवतव्याख्यानपरंपरा । तदनुरोधेन । न भक्तिं विहाय श्रीमच्छंकराचार्यवत् ज्ञानमात्रनिरूपणेनेति भावः" । अहोऽत्यंतमनुतपामि । यथा केनचित् कविना प्रार्थितः खलु भगवान् ब्रह्मा "इतराणि हि पापफलानि वै विलिखितानि च हे चतुरानन । अरसिकेषु कवित्वनिवेदनं शिरसि मा लिख मा लिख मा लिख" तथा न स मया प्रार्थितो मूर्खमतपरीक्षणं मम शिरसि मा लिखेऽत्यतोऽस्य वंशीधरस्य मतपरीक्षणं गले पतितं

मे। अनेन देवानांप्रियेण न दृष्टं भगवत्पूज्यपादानां ज्ञानोत्तरमपि भक्तिवैभवं किं तं प्रति बोधेन। परं चान्यलोकानां दुष्परिग्रहवारणाय भगवत्पूज्यपाद-भक्तिवैभवं दर्शयिष्यामः। देव्यपराधक्षमापनस्तुतौ तावत् "न मे मोक्षाकांक्षा भवविभववांच्छापि च न मे। न विज्ञानापेक्षा शशिमुखिसुखेच्छापि न पुनः। अतस्त्वां संयाचे जननि जननं यातु मम वै। मृडानी रुद्राणी शिव शिव भवानीति जपतः।" शिवभक्तिवैभवं तु शिवभुजंगे "अयं दानकालस्त्वहं दानपात्रं भवानेव दाता त्वदन्यं न याचे। भवद्भक्तिमेव स्थिरां देहि मह्यं कृपाशीलशंभो कृताऽर्थोऽस्मि तस्मात्"। श्रीकृष्णभक्तिवैभवं षट्पदीस्तोत्रे "सत्यपि भेदापगमे नाथ तवाहं न मामकीनस्त्वम्। सामुद्रो हि तरंगः क्व चन समुद्रो न तारंगः"। नृसिंहतापनीयभाष्ये "मुक्ता अपि लीलया विग्रहं कृत्वा भजंते" इत्युक्तम्। अनेनानवधानपटुना स्वस्य वेदस्तुतिटी-कायामेतद्वाक्यं प्रमाणीकृतं तथापि भगवत्पादीयां भक्तिमत्र प्रतिषेधत्ययम्। किं हास्यास्पदं न संपादयति बत महतां द्वेषः। अथवा नमस्कार्योऽयं वंशीधरः सिद्धान्ते चतुष्कोटिकज्ञानचतुरः येन विरुद्धानां बहुटीकानां संग्रहं कृत्वाऽस्माकमायुर्व्ययकरो वाचनश्रमः परिहृतः। किमस्य मतखंडनेन। "अरिश्चापि भवेद्वादे निपुणः शास्त्रकर्मणि। पराजयो जयो वापि तदैव स्यात्सुखावहः"। अस्तु। भक्तिज्ञानयुक्तो भागवतसंप्रदाय एव संप्रदायशब्द-स्यार्थोऽत्र स्वामिचरणविवक्षितः।

मूळः— क्वाहं मंदमतिः क्वेदं मंथनं क्षीरवारिधेः।
किं तत्र परमाणुर्वै यत्र मज्जति मंदरः॥ ६॥

मूकं करोति वाचालं पंगुं लंघयते गिरिम्।
यत्कृपा तमहं वंदे परमानंदमाधवम्॥ ७॥

अहं समाधावीशत्वाच्छक्तो जगदनुग्रहे।
काव्योद्यमश्चेत् व्युत्थाने मयि कर्तृमतिर्भवेत्॥ ८॥

व्युत्थाने सुसमाध्यर्थो मया वक्तुं न शक्यते ।
इदं भागवतं साक्षात् समाध्यर्थस्वरूपकम् ॥ ९ ॥
समाध्यर्थो भवेद्वेदो व्युत्थाने तत्स्मृतिः स्मृतिः ।
श्रुतेः समन्वयः श्रुत्या न च स्मृत्या कदाचन ॥ १० ॥
समाधौ स्यादहं ब्रह्म व्युत्थाने निरहंकृतिः ।
समाध्यर्थद्योतकोऽत्र भगवान् परमेश्वरः ॥ ११ ॥
इति प्रदर्शयन् स्वामी प्राह सद्भक्तिवैभवम् ।
जीवस्तु दासो व्युत्थान इत्यभिप्राय उत्तमः ॥ १२ ॥
स्फोटात्मा वाऽक्षरात्मा वा भगवान् शब्दयोगतः ।
सञ्छिष्यं बोधयत्यर्थं जीवोपायो न तत्र हि ॥ १३ ॥
स्वभुक्तदुग्धमाधुर्यं स्वेन वक्तुं न शक्यते ।
अतः शिष्ये चार्थबोधं सम्यक् वर्धयते हरिः ॥१५॥
भूतकार्यमयी वाणी न शक्नोति समाधिजम् ।
वक्तुमर्थं परेशस्तु स्वयं वक्ति स्वशक्तितः ॥१६॥
प्राप्तोऽप्यशक्तो जीवोऽतः परमार्थप्रबोधने ।
वदाति श्रीगुरुः श्रीमान् यत्किंचिद्बोधवैभवम् ॥१७॥
काव्यदोषाः प्रमादाद्या ये ते जीवस्य नो हरेः ।
काव्ये गुणाः प्रबोधाद्या ये ते जीवस्य नो हरेः ॥१८॥
मूकं करोति वाचालमतो नारायणः प्रभुः ।
भीषास्मात्पवते वातो जडोऽतश्चेतनो हरिः ॥१९॥
चेतनत्वाद्दयालुत्वात् पंगुं लंघयते गिरिम् ।
लक्ष्मीः सरस्वती गंगा शक्तयो यस्य कीर्तिताः ॥२०॥
गंगांबुना पवित्रं मां करोतु परमेश्वरः ।
सरस्वती समाध्यर्थं संस्थापयतु वाचि मे ॥२१॥

स एव रमया शक्त्या क्षुत्तृट्चिंताविवर्जितम् ।
मां करोतु दयामूर्तिः परमानंदमाधवः ॥२२॥
एवं निरंकुशस्तृप्तो निश्चितस्तं नमाम्यहम् ।
सुशक्यं तत्कृपालेशान्मंथनं ज्ञानवारिधेः ॥२३॥
सेतुप्रबंधने शक्तो वानरो यदनुग्रहात् ।
तं सेतुं तारकं मत्वा प्रभुश्चापि परं गतः ॥२४॥
तथा मद्वाक्ययज्ञेन प्रसीदतु दयाघनः ।
वंदे वंदे पुनर्वंदे नंदनंदनमद्वयम् ॥२५॥



# १३

## श्रीधरोच्छिष्टपुष्टिः ।

(श्रीमद्भागवतांतर्गतकपिलगीतायाः श्रीधरोच्छिष्टपुष्टिनाम्नी टीका प्रारभ्यते ।)

श्रीमज्ज्ञानेश्वरं देवं कपिलं करुणार्णवम् ।
व्यासं शुकं श्रीधरं च प्रणतोऽस्मि पुनः पुनः ॥ १ ॥
उमा माता पिता शंभुर्गुरुर्ज्ञानेश्वरो महान् ।
पतिः कृष्णो राधिकाद्या भगिन्यो गोपिका मम ॥ २ ॥
पंचायतनमित्येतत् हृद्याऽस्थाप्य प्रपूज्य च ।
नत्वा किंचिदहं वक्ष्ये स्वबोधपरिशुद्धये ॥ ३ ॥
न ख्यातिलाभपूजार्थं टीकाजातमुदीर्यते ।
स्वबोधपरिशुद्ध्यर्थं ब्रह्मविन्निकषाश्मसु ॥ ४ ॥

श्रीधरकृतश्लोकः- पंचविंशे जनन्या तु पृष्टो बंधविमोचनम् ।
आदावाह परंभक्तिलक्षणं कपिलः सुतः ॥ १ ॥

श्रीधरोच्छिष्टपुष्टिः- अध्यायसंगतिमाह पंचविंशे इति । पृच्छन्त्या जनन्याः कपिलकृतसंबोधनेन यत्रकुत्रचित् पुत्रे भार्यायामन्यास्मिन् वा ज्ञानमस्ति तन्मुमुक्षुभिर्ग्राह्यमेवेत्याह जनन्येति । प्रसिद्धो हि पितापुत्रसंवादो मार्कंडेयपुराणे श्रीमन्महाभारते मोक्षपर्वणि च । स्वपतये भार्ययापि ज्ञानं दत्तमिति त्रिपुरारहस्यज्ञानखंडबृहद्वासिष्ठचुडालोपाख्यानाभ्यामवगम्यते । अजातशत्रुसंज्ञकान्नृपाद्वालाकिसंज्ञकेन ब्राह्मणेन ब्रह्मविद्या गृहीतेति कौशीतकीश्रुतिः । छांदोग्येऽपि पंचाग्निविद्या क्षत्रियादेवोद्दालकेन गृहीतेति श्रूयते । श्रीमन्महाभारते आरण्यकेऽपि कौशिकसंज्ञकेन ब्राह्मणेन धर्मव्याधादपि विद्या गृहीता । यत्तु विदुरेण धृतराष्ट्राय " शूद्रयोनावहं जातो नातोऽन्यद्वक्तुमुत्सहे " शूद्रयोनिजत्वात् ज्ञानं न कथयामीत्युक्तं तत्तु ब्रह्मनिष्ठब्राह्मणादिसत्वसंपत्कालिकमेव । अथवा मां दासीपुत्रं भ्रातरं मत्वा सम्यक् न श्रोष्यत्यतोऽस्य

सनत्सुजातपदरजोदर्शनेनास्तु चित्तशुद्धिरिति । अन्यथा तस्य स्मृत्यैव सनत्सुजातागमनाऽसंभवात् । कस्मिन्नपि वर्णे ब्रह्मज्ञानं मोक्षायैव भवतीति भाष्ये प्रतिपादितं भगवत्पूज्यपादाचार्यैः । यथा "येषां पुनः पूर्वकृतसंस्कारवशात् विदुरधर्मव्याधप्रभृतीनां ज्ञानोत्पत्तिस्तेषां न शक्यते फलप्राप्तिः प्रतिषेध्दुं ज्ञानस्यैकांतिकफलत्वात्" । "प्राप्ता ज्ञानदशामेतां पशुम्लेच्छादयोऽपि च । सदेहा वाप्यदेहा वा ते मुक्ता नात्र संशयः" इति वासिष्ठे । पशवो हनुमत्प्रभृतयः । म्लेच्छा धर्मव्याधादयः । आदिशब्दात् आसुराः प्रऱ्हादकर्कट्यादयः" इति तस्यैव टीकायाम् । तथा च स्मृतिरपि "यस्य कस्य च वर्णस्य ज्ञानं देहे प्रतिष्ठितम् । तस्य दासस्य दासोऽहं भवेयं जन्मजन्मनि" । भगवद्भिर्नारदाचार्यैरपि सूत्रेणोक्तम् "न तेषु जातिविद्यारूपकुलधनाक्रियादिभेदः" । तेषु भगवद्रूपतया सुजनत्वं गतेषु । "अंत्यादपि परं धर्ममिति मनुरप्याह । अतः सुष्ठूक्तं जनन्या पृष्ट इति । किं पृष्ट इति ।विवक्षायामाह बंधविमोचनम् । बंधः सकार्याऽविद्या । विमोचनं तस्याः निवृत्तिः । बंधश्च विमोचनं च बंधः संसाराख्या प्रकृतिः ।विमोचनं ब्रह्मभाव इति वार्थः । स पृष्टः सुतोऽपि विशंकितः सन् व्यावहारिकमातृपुत्रक्रममुल्लंध्य परमार्थसाधकं मुमुक्षुदशागतगुरुशिष्यभावमेव स्वकृत्याह "आदावाह परंभक्तिलक्षणमिति" । अत्र सुतशब्देन ज्ञानप्रवचनसमये एव गुरुशिष्यभावः न तु सुप्रसिद्धगुरुशिष्यवत् सर्वत्र व्यवहार इति सूचितम् । अग्रेऽपि स्फुटी भविष्यति । किमाह परंभक्तिलक्षणम् । परं ज्ञानं भक्तिर्भगवत्प्रीतिश्चेति । शब्दभेदेऽपि अर्थत एकमेव लक्षणं ।चिदानंदरूपमिति भावः । अस्य ज्ञानभक्तियुक्तयोगस्यैव सर्वबीजत्वादादावित्युक्तम् ।

कपिलेनार्पिता मात्रे गूढभावनियंत्रिता ।
योगमाणिक्यमंजूषा स्फुटमुद्घाट्यतेऽधुना ॥ २ ॥

श्रीधरोच्छिष्टपुष्टिः— कपिलेन आदौ शुद्धचैतन्यरूपत्वेऽपि मायाकृतशरीरेणोतिभावः । मात्रे देवहूत्यै गूढभावः परमानंदरूप आत्मा "एको

देवः सर्वभूतेषु गूढ " इति श्रुतेः। स एव मुमुक्षुकरामलकवत् यथा स्यात् तथा नियंत्रितो निवेशितो यस्याम्। अथवा तेनैव या परिपूर्णा सा गूढभावनियंत्रिता मंजूषा। एवं फलनियंत्रितत्वे साधनानामप्यत्रैवोपलब्धिरित्याह योगमाणिक्यमंजूषेति। स्फुटं सुलभप्रक्रियापूर्वकम्। उद्घाट्यते प्रतिबंधान् दूरीकृत्य प्रदर्श्यते इत्यर्थः।

मू. श्लो. शौनक उवाचः-

कपिलस्तत्वसंख्याता भगवानात्ममायया।
जातः स्वयमजः साक्षादात्मप्रज्ञप्तये नृणाम्॥ १॥

श्रीधरीः- उक्तानुवादपूर्वकं कापिलं योगं पृच्छति। कापिल इति त्रिभिः। तत्वानां संख्याता गणकः सांख्यप्रवर्तक इत्यर्थः। अत एव स्वयं जातः आत्मप्रज्ञप्तये आत्मतत्वज्ञापनाय॥ १॥

श्रीधरोच्छिष्टपुष्टिः- नैमिषेयसंगातिमाह। उक्तानुवादपूर्वकमिति। कापिलं कापिलेनैव प्राकट्यदशामानीतम्। "ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानं च पश्येदिति श्रुतेः। "सिद्धानां कपिलो मुनिरिति जाग्रच्छ्रुतेः। कपिलस्य सहोत्पन्नं ज्ञानं वैराग्यमैश्वर्यं चेति पंचशिखसूत्राच्च। योगं वेदान्तसांख्यपातंजलभाक्तिकर्मसमुच्चयरूपम्। प्रश्नमूलं दर्शयन्नाह। कपिल इति त्रिभिः। तत्वानि नानाविधानि प्रकृतिपुरुषमहदादीनि। गणक इत्यनेन कपिलस्याकर्तृत्वोक्तेर्न तेषां कोऽपि रचयिता किंतु तानि यावज्ज्ञानमनादीन्येव तत्वज्ञानं विना हानेरसंभवादित्यध्यासभाष्यटीकोक्तेः। सांख्यप्रवर्तक इत्यर्थः। सांख्यं द्विविधं संख्याविषयरूपं सम्यक्ख्यापनरूपं च। संख्या पंचविंशतितत्वानां षड्विंशतितत्वानां वा परिगणना। सम्यक् एकं ब्रह्म तस्य ख्या कथनं संख्या। तस्या भावः सांख्यम्। उपनिषदीयब्रह्मज्ञानमित्यर्थः। प्रवर्तकः द्रष्टृत्वात्संप्रदायस्थापको न तु कर्तेति भावः। ईश्वरत्वेन वेदकर्तृत्ववत् कर्ताऽपि वार्थः। जीववाक्येषु भ्रमप्रमादादिदोषदर्शिनां विश्वासाय अज इति। ननु स्वविभूतित्वेऽपि द्यूतादिषु दोषदर्शनात्

कपिलस्यापि तथेति चेन्नेत्याह । स्वयमिति । कपिलो न विभूत्यंतरं किन्त्वीश्वर एव । कथं तस्य निर्गुणब्रह्मणः शरीरादिकमित्यत्र मूले उक्तमात्ममाययेति । आत्मनो माया आत्ममाया । मुक्तौ सत्यामपि विद्यारूपिण्यानंदेदंतावृत्तिरिति भावः । सैव तस्य शरीरम् । नाविद्याजन्यम् । षड्गुणैश्वर्यहान्यदर्शनात् । ऐश्वर्यमेवाह भगवानिति । भगं च यशःश्र्यौदार्यज्ञानवैराग्यैश्वर्यरूपम् । तद्वान् । तस्य नित्याश्रय इति भावः । स्यात्तर्हि किमाविर्भावे प्रयोजनमित्यत्राह । आत्मतत्वज्ञापनाय । यद्यपि प्रकृतिमहदादीनां बहूनां तत्वानां गणकोऽप्यात्मतत्वं ब्रह्मैव सारं प्रकृतिमहदादीनि त्याज्यान्येवेति मुमुक्षुकृपानिष्ठः सन् ज्ञानप्रदानायेति भावः । अनेन श्रुतिविरुद्धं सांख्यमिति निश्चयवतां मूढानां मतं निरस्तम् । सांख्यस्यापि ब्रह्मज्ञाने तात्पर्यात् । अन्यथा सृष्टिविचिकित्सायां तात्पर्ये सति श्रुतीनामपि विरोध एव संभाव्यते । भाष्ये सृष्टिश्रुतिविरोधपरिहारस्तु मंदाधिकारिणामुक्तः । सृष्टिप्रतिपादिका अपि श्रुतयः ब्रह्मज्ञानतात्पर्यनिष्ठा एव न तासां सृष्टिपरत्वं योजनीयमिति भाष्यकृद्भिरेवोपपादितं मांडूक्यकारिकाभाष्ये । अथवा श्रुतिविरोधे सति सांख्यांशस्य प्रामाण्यमुपेक्षितम् । ननु श्रुतौ सर्वसत्वे किमस्य प्रयोजनम् । तन्मननमयविशेषश्रुतिस्फुटीकरणार्थं कल्पस्मृतिभाष्यादिवदित्यस्मिन्पक्षे समाधानम् ।

**न ह्यस्य वर्ष्मणः पुंसां वरिम्णः सर्वयोगिनाम् ।**
**विश्रुतौ श्रुतदेवस्य भूरि तृप्यंति मेऽसवः ॥ २ ॥**

श्रीधरीः— पुंसां मध्ये वर्ष्मणो वृद्धस्योत्तमस्येत्यर्थः । सर्वयोगिनां मध्ये वरिम्णः वरस्य भावो वरिमा भवितृप्रधानोऽयं निर्देशः । वरिष्ठस्येत्यर्थः । यद्वा वरीयस्त्वादित्यर्थः । विश्रुतौ कीर्तौ असव इंद्रियाणि भूर्यलं न तृप्यंति । श्रुतदेवस्य श्रुतेन श्रवणेन दीव्यति द्योतते इति तथा तस्य । यद्वा भूरि बहुशः श्रुतो देवो येन तस्यापि मेऽसवः इति संबंधः ।

श्रीधरोच्छिष्टपुष्टिः— पुरुषेषु वारिष्ठ्यमीश्वरत्वं क्लेशकर्मविपाकाशयैरपरामृष्टत्वम् । योगिनां मध्ये वारिष्ठ्यं च गुरुत्वं "स एव पूर्वेषामपि गुरुः

कालेनानवच्छेदादिति" योगसूत्रात् । अस्य कपिलस्येति संबंधः । श्रुतदेवस्योत्तमाधिकारिणां मनननिदिध्यासनं विना श्रवणेनैव प्राप्तस्य । भूरि अलं न तृप्यंतीति ।

**अयमर्थः**– भगवद्भक्तावतृप्तिरेवानंदकरी । तत्स्थवासनावृद्धिदर्शनमपि वासनाक्षयसमयचिन्हं दीपतिरोधानकालीनदीपवृद्धिदर्शनवत् । "न मय्यावेशिताधियां कामः कामाय कल्पते" इति प्रियोक्तेः । अर्थांतरमाह यद्वेति स्पष्टमन्यत् ।

**यद्यद्विधत्ते भगवान् स्वच्छंदात्माऽत्ममायया ।**
**तानि मे श्रद्दधानस्य कीर्तनान्यनुकीर्तय ॥ ३ ॥**

**श्रीधरीः**– स्वानां पुंसां छंदेनेच्छया आत्मा देहो यस्य सः ।
यद्यत्कर्म विधत्ते तानि कर्माणि कीर्तनार्हाण्यनुकीर्तय ।

**श्रीधरोच्छिष्टपुष्टिः**– भगवतो देहस्य भगवत्संकल्प एवोपादानं स्वभक्तेच्छानिमित्तकमित्याह स्वानामिति । आत्मा देहः आत्मैव देहः न जीवदेहवत् ब्रह्मज्ञानप्रतिबंधकः किंतु मुक्तिदायक एव । अयं भावः – यदिदं जगत् ब्रह्मविवर्तमिति वेदान्ते सिद्धान्तितम् । स्वरूपाविकृतत्वे सत्यपररूपत्वं विवर्तलक्षणम् । स विवर्तो द्विविधोऽध्यस्तोऽनध्यस्तभेदात् । योऽधिष्ठानज्ञानप्रतिबंधकोऽधिष्ठानज्ञानेन निवर्तते मालाहिशुक्तिरजतादिवत्स आद्यः । एतद्रूपेणैव जगदाविर्भवत्यतो ब्रह्मज्ञानेन निवर्तते । यस्त्वधिष्ठानज्ञानाप्रतिबंधकत्वे सति कनककुंडलादिवदधिष्ठानज्ञानानिवर्त्यः स द्वितीयो विवर्तो भगवच्छरीररूपः । अतो भगवच्छरीरं न ब्रह्मज्ञानेन निवर्तते । "नाथ तवाहमिति" श्रीमच्छंकरभगवत्पूज्यपादवचनप्रामाण्यान्मुक्तावपि भक्तिप्रतीतेः । विवर्तद्वयविस्तरस्तु भक्तिपदतीर्थामृतनिदिध्यासनप्रकाशादौ ज्ञेयः । कथमनपेक्षः संकल्पो भगवतीत्यस्य समाधानं मूलेनाह । आत्ममाययेति । प्रतिबिंबेनैव बिंबत्वमापेक्षिकमिति बिंबत्वे सूर्यत्वाविरोधवद्भगवच्छरीरमपि ब्रह्मण्यविरुद्धमिति तात्पर्यम् । तानि सर्वाण्यपि कर्माणि कीर्तनार्हाणि गेयानि

श्रोतव्यानि चेत्यर्थः। ननु "यान्येवास्माकं सुचरितानि तान्येव त्वयोपास्यानि नो इतराणि" "ईश्वराणां वचः सत्यं तथैवाचरितं क्वचित्" न देवचरितं चरेदित्यादिश्रुतिस्मृतिभ्य उत्तमान्येव कर्माणि कीर्तनार्हाणि भवितुमर्हंति न सर्वाणीति चेदुच्यते। "त्वं स्त्री त्वं पुमानसि उत वा त्वं कुमार उत वा कुमारी" "तेजीयसां न दोषाय वन्हेः सर्वभुजो यथो" त्यादिवाक्यैर्यद्यद्भगवच्चरितं तन्माहात्म्यज्ञानायैव भवति न गर्हार्थम्। न देवचरितं चरेदित्यादिनिषेधस्तु बालेन मधुरं न भक्षणीयं कृमिभयादिति निषेधवत् रजस्तमसोर्भयात् जीवसत्वरक्षक एव। न भगवति विरुद्धाचरणप्रदर्शकः। तत्रेयं योजना। यानि भगवच्चरितानि स्पष्टतया लोकधर्माविरुद्धानि तान्यनुकरणीयानि। यानि पुनर्वस्तुतोऽविरुद्धान्यपि विरोधाभासवत् दृश्यंते तानि भगवन्महिमत्वेव गेयानि श्रोतव्यान्येव चाननुकरणीयानि। यथा स्वानुकूल्येनैव पित्राद्याचरणं पुत्रादिभिर्गृह्यते न मातृगमनादिकं तथा यश्च सत्पुरुषः कथमप्याचरितवान् न लोकान् विषमाचरणे प्रवर्तयितुमुत्सहते। यथा व्रजयोषिदनुगामी श्रीकृष्णोऽपि गीतायां क्वचिदपि परस्त्रीगमनविधिं नोपदिष्टवान्। अतः सर्वाण्युत्तमश्लोकचरितानि कीर्तनार्हाणि। अनुकीर्तय वेदादिभिःकीर्तितान्यपि पुनः परंपरानुवृत्त्या कथयेत्यर्थः ॥३॥

सूत उवाचः— द्वैपायनसखस्त्वेवं मैत्रेयो भगवांस्तथा।
प्राहेदं विदुरं प्रीत आन्वीक्षिक्यां प्रचोदितः ॥४॥

श्रीधरीः— यथा त्वं मां प्रचोदयस्येवं प्रचोदितः सन् तथा तत्प्रश्नानुसारेण आन्वीक्षिक्यामात्मविद्यायाम् ॥४॥

श्रीधरोच्छिष्टपुष्टिः— श्लोकत्रये तु प्रश्नस्योत्तरप्रसंगेन पुनर्विदुरमैत्रेयसंवादमनुवर्णयन्नाह यथेति शिष्यप्रश्नानुसारेणैव गुरौ बाधितानुवृत्तिरूपेण जगदुद्धरणादिकं स्फुरति न स्वतः ब्रह्मणि ज्ञाते जगतोऽत्यंताभावानुभवादि-

त्याह तत्प्रश्नानुसारेणेति । आत्मविद्यायां श्रुतियुक्त्यनुभवैर्ब्रह्माकारापरोक्षवृत्ति-रूपिण्याम् ॥४॥

मैत्रेय उवाचः— पितरि प्रस्थितेऽरण्यं मातुः प्रियचिकीर्षया ।
तस्मिन् बिंदुसरेऽवात्सीद्भगवान् कपिलः किल ॥५॥

श्रीधरीः— बिंदुसरे बिंदुसरसि ।

श्रीधरोच्छिष्टपुष्टिः— आर्षस्य लौकिकत्वेन शब्दार्थमाह । बिंदुसरसीति ।

तमासीनमकर्माणं तत्वमार्गाग्रदर्शनम् ।
स्वसुतं देवहूत्याह धातुः संस्मरती वचः ॥६॥

श्रीधरीः— तत्वमार्गस्याग्रं पारं दर्शयतीति तथा तम् । एष मानवि ते गर्भे प्रविष्टः कैटभार्दन इत्यादिधातुर्वचः ॥६॥

श्रीधरोच्छिष्टपुष्टिः— तत्वमार्गस्य अग्रं ब्रह्मज्ञानस्य पारमपरोक्षानंदरूपम् । गताध्यायात्तु प्रमाणमाह एष इति । कैटभार्दनः विष्णुः । अंगुलिनिर्देशेन हृदयस्थः परेशोऽपरोक्ष इत्येष शब्दार्थः । धातुर्ब्रह्मणः ॥६॥

देवहूतिरुवाचः— निर्विण्णा नितरां भूमन्नसदिंद्रियतर्षणात् ।
येन संभाव्यमानेन प्रपन्नांऽन्धतमः प्रभो ॥७॥

श्रीधरीः—असतामिंद्रियाणां तर्षणाद्विषयाभिलाषान्निर्विण्णा श्रांताऽस्मि येन संभाव्यमानेन पूर्यमाणेन ॥७॥

श्रीधरोच्छिष्टपुष्टिः— इंद्रियशब्देनांतःकरणमप्युपलक्ष्यते । तान्यंतःकरणसहितानींद्रियाण्यसंत्येवाविद्याकार्यत्वात् । न हि सत्कारणपरिणामोऽसन्भवितुमर्हति । अनेन श्रौते ब्रह्मणि जगतो विवर्तत्वमेव न परिणामित्वमिति भावः । समासं स्पष्टीकरोति असतामिति । तर्षणं रागः सुखानुशयी ।

तन्मूलकत्वाद्द्वेषस्यापि ग्रहणम्। स एव स्वस्य वृद्धौ विषयाभिज्ञत्वमाप्नोति तथाभूतादित्यर्थः। निर्विण्णा श्रांता कष्टत्वं प्राप्ता। अनेन वशीकाराभिधम-परवैराग्यमुक्तम्। रागस्यैव व्याप्तिमाह पूर्यमाणेनेति। विरक्ताऽप्यहं न शक्नोमि संसारपारं गंतुं गुरुं विनेति भावः ॥७॥

तस्य त्वं तमसोंऽधस्य दुष्पारस्याद्य पारगम्।
सच्चक्षुर्जन्मनामंते लब्धं मे त्वदनुग्रहात् ॥८॥

श्रीधरी:— पारं गमयतीति पारगं त्वमेव श्रेष्ठं चक्षुर्मे मया लब्धम्। त्वदनुग्रहाज्जन्मनामंते भाग्ये सति ॥८॥

श्रीधरोच्छिष्टपुष्टिः— पारगशब्दस्य विग्रहमाह पारं गमयतीति। पारं त्रिविधदुःखस्यात्यंतनिवृत्तिम्। "अथ त्रिविधदुःखात्यंतनिवृत्तिरत्यंत-पुरुषार्थ" इति सांख्यसूत्रात्। चक्षुर्ज्ञाननेत्रं महावाक्यादुपाधिभागत्याग-चैतन्यग्रहणलक्षणारूपमित्यर्थः। अनुग्रहात्कृपया। भाग्ये सति। त्वदनुग्रहा-दित्यनेन केषां पूर्वमविद्यापन्नाः पश्चान्मुक्ता गुरवः। मम तु पुत्रभावेन कृतस्नेहो नित्यमुक्त ईश्वर एव गुरुरहो भाग्यं मन्ये। जन्मनामंते चरमे जन्मनि। अयं भावः — ज्ञानेन संचितं कर्म निःशेषेण क्षीयते। क्रियमाणं त्वागामि श्लिष्यते। "तदधिगमे उत्तरपूर्वार्धयोरश्लेषविनाशौ तद्व्यपदेशात्" इति न्यायात्। अधिगमे ज्ञाते अश्लेषः असंस्पर्शः। "तस्य तावदेव चिरमित्यादि श्रुतेः। "प्रारब्धकर्मणां भोगादेव क्षय इति स्मृतेश्च। आरब्धान्यपि कर्माणि बहूनि संति नैकं यावच्छरीरमिति स्मार्तबहुवचनेन सूचितमन्यथा प्रतिक्षणसुखदुःखासंभवात्। तथाप्येतत्सामान्यज्ञानिनामेव। आधिकारिकाणां भगवद्भक्तानां चारब्धमप्येकमेव कर्म सुखरूपम्। यावद-धिकारमवस्थितिराधिकारिकाणामिति ब्रह्मसूत्रतद्भाष्याभ्यामवगम्यते। तच्चोपा-सकानामेवेति गूढार्थदीपिकोक्तेश्च। विवदंत्यत्र हि परस्परवादिनः। केचिद्ब-हुजन्मसमुच्चयरूपं प्रारब्धं मन्यंते। "पावमानं परं ब्रह्म ये पठंति मनीषिण।

सप्तजन्म भवेद्विप्रः धनाढयो वेदपारगः इति श्रुत्या सप्तजन्मसमुच्चायकमेकमेव प्रारब्धमुक्तमिति। तद्यस्मिन् जन्मन्यारंभकं भवति तत्संपूर्णमेवैकव्यक्तित्वान्न कश्चिदंशः संचितत्वेन तिष्ठति। शेषेऽपि प्रारब्धे गुरुवाक्यसामर्थ्याज्ज्ञानं संजातं चेद्योगेन कायव्यूहं कृत्वा सर्वं भोक्तुं शक्यते। अन्ये त्वेकजन्मारब्धकमेव कर्म मन्यंते। तद्यदा पूर्वजन्मार्पिताखिलाचारेश्वर भक्तिप्रचोदितयेश्वरकृपया सर्वं क्षीणं चरमजन्मारब्धमात्रमेव तिष्ठति। तदा तस्मिन्नेव जन्मनि ज्ञानं संजायते। "बहूनां जन्मनामंते ज्ञानवान्मां प्रपद्यते" अनेकजन्मसंसिद्धस्ततो याति परां गतिमिति" जाग्रच्छ्रुतेः। योगेन भगवद्भक्त्या वा प्रारब्धाभिभव एव भवति। तेन समाधिप्रतिबंधकारिणीं दुःखाकुलतां न प्राप्नोति। आरब्धकर्मनाशस्तु भोगादेवेति शेषः। अयं खलु पक्षः साधीयान् ॥८॥

स आद्यो भगवान् पुंसामीश्वरो वै भवान् किल।
लोकस्य तमसांधस्य चक्षुः सूर्य इवोदितः ॥९॥

श्रीधरीः—तत्प्रपंचयति। स भगवान् भवांश्चक्षूरूपः उदितः। सूर्यो यथा ॥९॥

श्रीधरोच्छिष्टपुष्टिः—तत्प्रपंचयति। तद्भगं वैभवं प्रपंचयति विस्तारयति। चक्षुः प्रकाशात्मा ज्ञातृज्ञेयानपेक्षी ज्ञानरूपः। चक्षुर्वद्वादपरोक्षः। प्रज्ञानं ब्रह्मेति श्रुतेः। दृष्टान्तमाह सूर्य इति। अतिरोहितार्थमन्यत् ॥९॥

अथ मे देव संमोहमपाक्रष्टुं त्वमर्हसि।
योऽवग्रहोऽहं ममेतीत्येतस्मिन् योजितस्त्वया ॥१०॥

श्रीधरीः—अपाक्रष्टुमपनेतुम्। कोऽसौ संमोहस्तमाह। एतस्मिन् देहादौ त्वयैव योजितो योऽहं ममेत्यवग्रह आग्रहः। द्वितीय इतिशब्दस्तत्कार्यरागादिग्रहणार्थः ॥१०॥

श्रीधरोच्छिष्टपुष्टिः—प्रश्नमुत्थापयति कोऽसाविति । संमोहः अज्ञानमेतस्मिन्निदंत्वेन प्रतीयमाने देहादावहंममेत्याग्रहरूपः । देहेऽहंताग्रहः पुत्रादौ ममताग्रह आवरणविक्षेपरूप इति भावः । त्वयैव योजितः । त्वां सामान्यचैतन्यमधिष्ठानं विना न स्थातुमर्हतीत्यर्थः । तं त्वमेव विशेषचैतन्यज्ञानेनापनेतुं नाशयितुं शक्तोऽसि । यथा सामान्यज्ञातरज्वामाहिरुत्पद्यते स रज्जुरितिविशेषज्ञानेनैव विनश्यतीति तात्पर्यम् । अत्र सत्तामात्रं सामान्यशब्दार्थः । कारणाविद्यां प्रदर्श्य कार्याविद्यामाह । तत्कार्यरागादिरूप इति । अयं भावः । अस्ति सत्वासत्वाभ्यामनिर्वाच्याऽनादिभावरूपाऽऽवृत्तिविक्षेपमय्यघटितघटनापटीयसी त्रिगुणात्मिका कार्यानुमेया प्रकृतिशक्तिमायादिपर्यायभूता जगतः परिणाम्युपादानरूपिण्यविद्या । "देवात्मशक्तिं स्वगुणैर्निगूढामजामेकां लोहितशुक्लकृष्णाम्" मायां तु प्रकृतिं विद्यादित्यादि श्रुतिभ्यः । "दैवी ह्येषा गुणमयी मम माया दुरत्यया" "अज्ञानेनावृतं ज्ञानं तेन मुह्यंति जंतव" तासां ब्रह्म महद्योनिरित्यादि जाग्रच्छ्रुतिभ्यश्च । साद्विविधा कारणाविद्याकार्याविद्येति भेदात् । कारणाविद्या उक्तलक्षणा । कार्याविद्या विक्षेपसमेता क्लेशरूपां । सैव पतंजलिनोक्ता । "अविद्याऽस्मितारागद्वेषाभिनिवेशाः पंच क्लेशाः" अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्येति । अनित्येषु दृष्टजननमरणादिविकारवत्सु नित्यख्यातिर्नित्यबुद्धिः। अशुचिषु अस्थिवसामेदरक्तमांसश्लेष्ममलमूत्रदुर्गंधपूरितेषु स्त्र्यादिदेहेषु शुचित्वबुद्धिः । मुखचंद्र इत्यादि गर्हितका कविकल्पनया प्राक्सत्वाऽपि दृढीकृता । दुःखेषु परिणामे तापसंस्कारादिदोषवत्सु विषयसुखेषु सुखबुद्धिः । इदमेव सुखमयमनेनैवाहं सुखीदमेव मे सदाऽस्त्विति प्रतिपत्तिः । अनात्मसु असज्जडदुःखेषु जाग्रत्स्वप्नादिदेहेषु आत्मख्यातिरहंबुद्धिः । दृक्दृश्ययोरविवेकोऽस्मिता । ममतारूपः सुखानुशयी रागः । भेदाग्रहेण स्वन्यूनत्वप्राप्तौ दुःखेष्वप्रीतिर्द्वेषः । मरणादिभयमभिनिवेशः । अत्रेदं बोध्यम् । कारणाविद्ययाऽसत्वापादकाभानुपादकरूपं द्विविधाऽऽवरणं हिरण्यगर्भादिरूपो

विक्षेपश्च । कार्याविद्यांतरीयाविद्याक्लेशेन देहादावहंममेत्यवग्रहः । अस्मितया वासनोपपादनं प्रवृत्तिश्च । रागात्कामः । द्वेषात्क्रोधः । अभिनिवेशाल्लोभः । कामनादित्रयेण वासनावृद्धिस्ततो जनिमरणादिकमितीत्थं निगडसंसारशृंखला-बंधनम् । अस्य संसारस्य सकारणनिवृत्तिर्ज्ञानयोगभक्तित्रिकेण भवति । तत्र ज्ञानेन कारणाविद्यानिवृत्तिः । योगेन क्लेशनिवृत्तिः । भक्त्या प्रारब्धा-भिभवो लेशाविद्यानिवृत्तिश्च । "तस्याभिध्यानाद्योजनात्तत्वभावाद्भूयश्चांते विश्वमायानिवृत्तिरिति श्रुतेः । "मामेव ये प्रपद्यंते मायामेतां तरंति ते" इति प्रियवचनात् । "असेवयाऽयं प्रकृतेर्गुणानां ज्ञानेन वैराग्यविजृंभितेन । योगेन मय्यर्पितया च भक्त्या मां प्रत्यगात्मानमिहावरुंध" इति वक्ष्यमाण-त्वाच्च । भक्तिज्ञानयोगानां त्वमेवोपदेष्टाऽतस्त्वां गुरुं ज्ञात्वा प्रपन्नास्मीत्याह॥

तं त्वा गताऽहं शरणं शरण्यं स्वभृत्यसंसारतरोः कुठारम्
जिज्ञासयाऽहं प्रकृतेः पूरुषस्य नमामि सद्धर्मविदां वरिष्ठम् ॥११॥

श्रीधरीः–प्रकृतेः पुरुषस्य च जिज्ञासया त्वामहं शरणं गता सती नमामीत्यन्वयः । कुठारं छेत्तारम् ॥११॥

श्रीधरोच्छिष्टपुष्टिः–प्रकृतिरविद्याख्या पुरुषो ब्रह्म तयोर्जिज्ञासा ज्ञातुमिच्छा । त्यागार्थं प्रकृतिज्ञानं तदानंदभावार्थं पुरुषज्ञानमित्यर्थः । अयं भावः ब्रह्मज्ञाने सांख्यं वेदान्तश्च प्रमाणम् । तत्र सांख्येन सामान्यात्मविवेकः सच्चिद्रूपोऽनुभवस्त्वंपदशोधनं वा । वेदान्तेन ब्रह्मानंदरूपो विशेषात्मविवे-कस्तत्पदशोधनपूर्वको महावाक्यार्थो वेति । द्विविधज्ञानार्थमप्यागतास्मीति संबंधः । मूलान्वयसगतिमाह त्वामित्यादिना । छेत्तारमात्यंतिकत्वेन निवर्त-कमिति ॥११॥

मैत्रेय उवाच-इति स्वमातुर्निरवद्यमीप्सितं निशम्य पुंसामपवर्गवर्धनम् ।
धियाऽभिवंद्यात्मवतां सतां गतिर्बभाष ईषत्स्मितशोभिताननः ॥१२॥

श्रीधरीः–अपवर्गवर्धनं मोक्षे रतिजनकम्। ईषत् स्मितेन शोभितमाननं यस्य

श्रीधरोच्छिष्टपुष्टिः–अपवर्गवर्धनं मैत्रेयोक्तिमवतारयति । यद्यपि प्रश्नस्फुटीकरणेनैव किंचिद्वेदान्तसिद्धान्तः स्फुटीकृतः स न प्रश्नकर्तुरज्ञानत्वादुच्चारितशब्दार्थेन निष्कासनार्हस्तथापि प्रश्नस्तस्मिन् श्लोकत्रये पूर्वापराभिप्रायेणैव सिद्धो न शब्दार्थेन। मदीय वेदान्तस्फुटीकरणं तु शब्दभावैरतो न दोषः। अपवर्गः मोक्षः तस्य वर्धनं तत्साधनभूतज्ञानस्य वर्धनम्। जीवन्मुक्तिपूर्वकदृष्टसुखवर्धनमिति वार्थः। भक्तियुक्तज्ञानस्य वक्ष्यमाणत्वान्मुक्तौ तारतम्याभावेऽपि विरक्त्युपरतिभक्त्याद्यभ्यासेन दृष्टसुखतारतम्यमस्त्येतन्निदिध्यासनप्रकाशेऽस्माभिः प्रपंचितम्। नन्वेतत्कापिलोक्तं ज्ञानं मातुरपवर्गायैव भवति न सर्वेषामिति चेन्मूलतः समाधत्ते। पुंसामित्यत्र बहुवचनान्मातृव्याजेन सर्वेषामेवेदं मुक्तिदायकम्। मोक्षे रतिजनकं ज्ञानमित्ययं प्रथमार्थ एव स्वाम्यभिमतो दृश्यते। अथवा मोक्षे ब्रह्मणि रतिः प्रीतिस्तज्जनकमुत्पादकं सभक्तिमुक्तिदायकं ज्ञानमिति द्वितीयः पक्षः स्वामिवचनादपि स्वीकर्तुं शक्यते। बहुव्रीहिर्दर्शयति इषादित्यादिना ॥१२॥

श्रीभगवानुवाच – योग आध्यात्मिकःपुंसां मतोनिःश्रेयसाय मे
अंत्यतोपरतिर्यत्र दुखःस्य च सुखस्य च ॥

श्रीधरीः— अध्यात्मिकः आत्मनिष्ठः यत्र यस्मिन् ॥१३॥

श्रीधरोच्छिष्टपुष्टिः— आध्यात्मिकः आत्मनिष्ठः आत्मनि निष्ठा यस्येति' भाष्येऽनुक्तं मूलं किंचिदुद्घाट्यते यथामति। मे मम परमात्मन आध्यात्मिकः यथार्थतत्वरूपः जहदजहल्लक्षणया गृहीतो योगो जीवेश्वरैक्यभावः पुंसां मुमुक्षूणाम्। ये पुरुषार्थे यतंते तएव पुरुषा इतरे षंढा इति भावः। निःश्रेयसाय मोक्षाय। कुतोऽत्र योगस्य निःश्रेयसकरत्वं तत्र हेतुमाह। यत्र यस्मिन् योगे दुखःस्य सुखस्य चात्यंतोपरतिस्त्रैकालिकोऽभावः। चकारेणा-

ज्ञानस्यापि । अयं भावः सत्वरजस्तमोगुणात्मिका माया "दैवी ह्येषा गुणमयीति श्रुतेः । तत्र ज्ञानं सुखरूपं सत्वम् । कर्म दुखःरूपं रजः । अज्ञानादिरूपं तमः । एतानि सत्वरजतमांसि द्रव्याणि न वैशेषिका गुणाः संयोगविभागवत्वात् । तानि बहुवृत्तिरूपाण्यपि सत्वत्वादिजात्या त्रित्वसमानिष्ठानि संति । तेषां गुणत्वं चात्मबंधकत्वात् । "कारणं गुणसंगोऽस्य सदसद्योनिजन्मस्विति श्रवणात् । कथं तानि बध्नंति तत्कांतैरेवोक्तम् । "तत्र सत्वं निर्मलत्वात्प्रकाशकमनामयम् । सुखसंगेन बध्नाति ज्ञानसंगेन चानघ" रजो रागात्मकं विद्धि तृष्णासंगसमुद्भवम् । तन्निबध्नाति कौंतेय कर्मसंगेन देहिनम् । तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत" । देही:जीवः । एवमुपक्रम्यैतेषां निवृत्तिरपि "मां च योऽव्यभिचारेण भक्तियोगेन सेवते । स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पत" इत्युपसंहारे भक्तियुक्तज्ञानेनैवोक्ता । अव्यभिचारेण कालत्रयेऽपि ब्रह्मज्ञानरहितेन । जीवन्मुक्तिस्थितिसहितेन वा । अयमेवाध्यात्मिको योगः । एवं सुखस्यापि बंधकत्वादत्यंतोपरतिरेवापेक्षत इति निष्कृष्टोऽर्थः । दुःख स्वभावतो द्वेष्यमतस्तन्निवृत्तीच्छा सर्वेषां स्वतःसिद्धा तस्मान्नोपदिष्टा ।

तमिमं ते प्रवक्ष्यामि यमवोचं पुराऽनघे ।
ऋषीणां श्रोतुकामानां योगं सर्वांगनैपुणम् ॥१४॥

श्रीधरोच्छिष्टपुष्टिः—हे पापरहिते । पुराऽहं कपिलाकारेणैव सांख्यसूत्राण्यासुर्यादि ऋषीणां श्रवणेच्छूनां विवेकाधिकारिणां कथितवान् । तमेवोक्ताध्यात्मयोगमद्य त्वां कथयिष्यामीति संबंधः । यत्तु केचिदेकः कपिलोऽग्निरूपोऽन्यो विष्णुरूप इति तन्न । एतद्वाक्यबलात् कपिलद्वयस्यापि विष्णुत्वलाभात् । यत्तु देवहूतिपुत्रेणैव कपिलेन सांख्यसूत्राणि प्रगटीकृतानि सांख्यभाष्यकृदवोचत तदप्यसत् । एतद्वाक्यबलादेव । अयं भावः— अस्ति खलु कपिलद्वयम् । ऋषिं प्रसूतं कपिलमित्यादि श्रुतेः । "सनकश्च सनदंश्च तृतीयश्च सनातनः । आसुरिः कपिलश्चैव वोढुः पंचशिखस्तथा ।

इत्येते ब्रह्मणः पुत्राः सप्त प्रोक्ता महर्षय" इति स्मृतेः । वाजसनीयशाखायामपि । कपिलस्तत्वसंख्यातेत्यादिभागवतवचनाच्च । प्रथमस्कंधेऽपि भगवदवतारगणनासमये कपिलोऽप्येक आसुरिमुनिसांख्योपदेशकोऽवतारोऽभवादित्युक्तम् । एक एव विष्णुरेकेनैव कपिलरूपेण किमर्थं पुनराविर्बभूवेति चेच्छृणु । आधिकारिक एतद्याविर्भावो भवितुमर्हति । यथा सनत्कुमारनारदापांतरतमवसिष्ठद्वैपायनशुकप्रभृतीनाम् । अत्रेदं बोध्यम् । शुकः कलेः पुरा विदेहमुक्तिं गत इति भारते । परीक्षितिं प्रति भागवतमुपदिष्टवानिति तत्रैव । कथमेतदुपपद्यते आधिकारिकग्रहणं विना ? । अन्यथाऽऽग्रहेणैकपुराणोच्छेदे तत्पुराणाग्रहेणैतत्पुराणोच्छेदप्रसंगः । एवं चेत्सर्वपुराणोच्छेदप्रसंगः । तथा सति वेदोपबृंहणग्लानेर्वेदस्य विपरीतार्थसंभवः । "इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् । बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यतीति" वचनात् । तथा च वेदस्याप्यप्रामाण्यं प्रसज्जेत । तेन सर्वथैव शब्दप्रामाण्योच्छित्तिः स्यात् । न वैदिकशब्दप्रमाणं विना ब्रह्मप्रकाशो भवति । अनुमानस्य सामान्यज्ञानसंभवेऽपि विशेषज्ञाने सामर्थ्याभावात् । यथाऽयं घटः कुलालरचित इत्यनुमीयते । केन वा कुलालेन शिवदासनाम्नेति जिज्ञासा चेन्नानुमानं शब्दं विना ज्ञापयितुं शक्नोति । तथा ब्रह्मण्यपरोक्षज्ञानार्थमनुमितकार्यकारणत्वेऽपि शब्दमेव प्रमाणम् । तदपि वैदिकमीश्वरप्रोक्तमेव । तदानुकूल्येन पौरुषेयमपि प्रमाणं भवति न स्वतंत्रम् । तत्र भ्रमप्रमादविप्रलिप्साकरणाकौशल्यादिदोषसंभवात् । साधु तद्याधिकारिकत्वेन कपिलद्वयाविर्भवनम् । आधिकारिकविस्तरस्तु ब्रह्ममीमांसाबृहद्वासिष्ठाद्याकरेषु द्रष्टव्यः ॥ १४ ॥

चेतः खल्वस्य बंधाय मुक्तये चात्मनो मतम्
गुणेषु सक्तं बंधाय रतं वा पुंसि मुक्तये ॥१५॥

श्रीधरीः— तत्र सर्वांगनैपुण्यं चित्तसंयमाधीनमिति दर्शयन्नाह । चेत इति । अस्यात्मनो जीवस्य । गुणेषु विषयेषु । पुंसि परमेश्वरे । वाशब्दस्तुशब्दार्थे ॥१५॥

श्रीधरोच्छिष्टपुष्टिः— न हि केवलशाब्दिकब्रह्मज्ञानेन वृत्तिनिरोधं विना मुक्तिर्भवतीत्याशयेनाह तत्रेति । सर्वांगनैपुण्यं सर्वसाधनसामर्थ्यवत् । चित्तं मनः । संयमाधीनं योगेन निरुद्धम् । संयमो नामैकस्मिन् विषये धारणाध्यानसमाधित्रयाभ्यासः । कर्षणादेकाग्रवृत्तिकरणरूपः प्रत्याहारो यदा दृढीभवति तदा विजातीयवृत्त्युत्थाने पुनः कर्षणासत्वेऽपि चित्तमेकाग्रतामायाति तदा तद्धारणाशब्देनोदीर्यते । "देशबंधश्चित्तस्य धारणेति" योगसूत्रात् । भ्रांतिरहितो मनोरथैक्यरूपः साक्षिनिष्ठः समाधिः । तदा परमात्मनः स्वरूपे चेतसोऽवस्थितिर्भवति । तदा द्रष्टुः स्वरूपेऽवस्थानमनेन ज्ञायते । मृदुसंवेगो धारणा । मध्यसंवेगो ध्यानम् । तीव्रसंवेगः समाधिरित्यभिप्रायः । "तीव्रसंवेगानामासन्नसमाधिलाभ" एतत्सूत्रमप्यस्मिन् प्रमाणम् । इदं त्रिकं यदैकस्मिन् विषये भवति तदा संयम उक्तो भगवता सूत्रकारेण । तथा च सूत्रं "त्रयमेकत्र संयमः" इति । तदधीनमिति तात्पर्यम् । परमेश्वरे द्रष्टुः स्वरूपे । ननु कथमात्मनो बंधः । आत्मबंधने किं निमित्तम् । देशो वा कालो वा स्वभावो वा । नाद्यौ तयोर्जडत्वात् । अन्त्येऽनिष्टापत्तिः । न स्वभावतो बद्धस्य मोक्षसाधनोपदेशविधिरिति सांख्यसूत्रात् । एवं प्राप्ते मूलं पुरस्कृत्य ब्रूमः । बंधनमेवात्मनः स्वभावश्चेत्तर्हि दुःखमपि प्रियं भवेत् तन्न दृश्यते । तस्मान्न हि रे मूढ ! आत्मनि स्वाभाविको बंधः किंतु नैमित्तिक एव । त्वन्मते सर्वथापि दुःखक्षतिर्न स्यात् । एवमप्यंगीकरोषि चेद् भव तद्वंधो बधिरो मूको वा । दुःखस्यापि त्वया प्रियत्वस्वीकारात् । पथ्यागतोऽसि चेच्छृणु । अस्माकं तु तावन्नात्मनो बंधः । बंधमोक्षयोर्मन एव निमित्तम् । जडत्वान्न निमित्तं भवितुमर्हतीति चेत्सत्यम् । तथापि बंधस्त्वनुभवात्सिद्धो न युक्त्या । अहं ब्रह्म न जानामि दुःखमस्ति सुखमपेक्ष्यते इत्याद्यनुभवोऽत्र प्रसिद्धः । अयं भावः । बंधविषयेऽनुभव एव प्रमाणं न प्रत्यक्षादिकम् । तस्य बंधदशायामेव स्वप्नकालीनप्रत्यक्षादिवत्सिद्धत्वात् । बृहद्वासिष्ठेऽपि तथैवोक्तम् । 'स्वप्नसंभ्रमसंकल्पस्वानुभूतिपरंपरा । प्रमाणान्यत्र मुख्यानि संबोधाय प्रदी-

पवत्" । अत्राविद्याविषयेऽविद्यासिद्धिरपि ब्रह्मबोधाय निरूप्यते नाविद्याबोधाय । न हि काचित् कोऽपि गुरुः कमपि घटसत्तां बोधयति तस्याः शिष्यसंमतत्वादिति प्रदीपवद्वाक्यार्थः । नन्वात्मविषयेऽप्यानुभव एव प्रमाणं बंधाविषयेऽपि तथा चेत् प्रमाणसाम्यादात्मबंधयोरेकत्वमेव प्राप्तमिति चेत् कामिनीमंचकीयपाटवामिदमत्र मा कुरु । न हि प्रमाणसाम्यात्प्रमेयैकत्वनियमः । अग्निजलयोर्दाहकशीतलयोर्विरुद्धप्रमेययोर्दृष्टस्पृष्टादिप्रत्यक्षप्रमाणसाम्येऽपि भेददर्शनात् । पुनरात्मानुभवस्य बंधानुभवात्किंचिद्भेदोऽप्यस्ति । आत्मानुभवो "दृश्यते त्वग्रया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिरि" त्यादिश्रुतिप्रमाणगोचरसूक्ष्मवृत्तिसाध्यः । बंधानुभवस्तु भ्रांतिसिद्धविषयसुखदुःखगोचरवृत्तिसाध्य इत्येवंरूपो भेदः । श्रुत्या मायादिनिरूपणाद्बंधोऽपि श्रुतिप्रमाणगोचर इति चेन्मैवम् । श्रुत्या ब्रह्मबोधार्थमेव तस्यानुवादित्वात् । सिद्धौ तर्हि चेतस एव बंधमोक्षौ । तथाप्यत्रेदं ज्ञेयम् । न केवलस्य चेतसो बंधस्तस्य जडत्वात् । नापि शुद्धचैतन्यस्य तस्याकर्त्रभोक्तृत्वाभ्युपगमात् । कस्य तर्हि बंधोऽयम् । तदाह आत्मनो जीवस्य । आत्मप्रतिबिंबो हि जीवः । जले प्रतिबिंबस्यैव गमनागमने दृश्येते न तदधिष्ठानस्य । तथा बुद्धिप्रतिबिंबस्य जीवस्यैव गमनागमने न शुद्धात्मनः । "तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवदिति" न्यायात् । गमनागमने बुद्धिधर्मौ स्वाभाविकत्वाच्चित्तं बद्धुं न शक्नुतः । न वात्मानं तच्छुद्धत्वात् । तस्माज्जीवमेव तौ बध्नीतः । गमनागमनाभ्यामुपलक्षणेन सर्वबंधस्य ग्रहणम् । भगवत्पादैरप्युक्तं शतश्लोक्याम् । "आसीत्पूर्वं सुबंधुर्भूशमवनिसुरो यः पुरोधाः सनातेर्ब्राह्म्यात्कूटाभिचारात्स खलु मृतिमितस्तन्मनोऽगात्कृतान्तम् । तद्भ्रांता श्रौतमंत्रैः पुनरनयादिति प्राह सूक्तेन वेदस्तस्मादात्माभियुक्तं व्रजति ननु मनः कर्हिचिन्नांतरात्मा" । आत्माभियुक्तमात्मप्रतिबिंबेन सहितं सत् व्रजति गच्छति । एतन्मूलभूता श्रुतिरपि ऋक्संहिताष्टमाष्टके । "यत्ते यमं वैवस्वतं मनो जगाम दूरकम् । तत्त आवर्तयामसीह क्षयाय जीवसे" ।

यद्यप्यविद्यायामेवात्मनोऽऽभासो जीवो न बुद्धाविति सिद्धान्तस्तथापि जाग्रतौ प्रत्यक्षतया बुद्धावेवाविद्याकार्यांशे मोक्षसाधनादिलाभात्तस्याश्च स्वच्छत्वादेस्तत्रैवात्मावभास उक्तः। बुद्धिश्चित्तादिपर्यायः। तस्य प्रधानत्वाच्चेतस एव बंधमोक्षौ नात्मनस्तयोर्मिथ्यात्वात्। बंधमोक्षविरुद्धस्वभावत्वाच्चित्तमपि मिथ्येति भावः। तदेवाविद्यारूपमुक्तं वासिष्ठे। "मन एवोल्लसन्मात्रं बद्धतामगमद्यतः। मनःप्रशमने राम मोक्ष एवावशिष्यते" तस्मान्मनस एव बंधमोक्षौ जीवे प्रतीयमानत्वात्तादात्म्याध्यासेन चित्तमेव जीवबंधमोक्षनिमित्तमिति सिद्धम्। "मन एव मनुष्याणां कारणं बंधमोक्षयोरि"त्यमृतबिंदुश्रुतेः। कथं तस्य बंधो मोक्षश्चेत्याह। चेतः खल्वस्य बंधाय। गुणेषु सत्वरजस्तमस्सु सक्तं संगीभूतं बंधाय संसाराय पुंसि परमेश्वरे रतं भक्तिनिष्ठया प्रीतं चेन्मुक्तये निमित्तं भवति। तदपि फलप्राप्तिपर्यवसानपर्यंतमेव। वस्तुत गुणनाशाच्चित्तं नश्यत्येव। भक्तिस्तु तत्रात्मप्रीतिरूपेत्यस्मदीयनिदिध्यासनप्रकाशादवगंतव्यम्। आचार्यैरप्येवमुक्तं विवेकचूडामणौ "न ह्यस्त्यविद्या मनसोऽतिरिक्ता मनो ह्यविद्या भवबंधहेतुः। तस्मिन्विनष्टे सकलं विनष्टं विजृंभितेऽस्मिन् सकलं विजृंभितमिति"। "योगश्चित्तवृत्तिनिरोधः" "तदा द्रष्टुः स्वरूपेऽवस्थानम्" "वृत्तिसारूप्यमितरत्रेत्येभिर्योग सूत्रैरयमेव विषयः प्रतिपादितोऽस्ति ॥१५॥

अहंममाभिमानोत्थैः कामलोभादिभिर्मलैः
वीतं यदा मनः शुद्धमदुःखमसुखं समम् ॥१६॥

श्रीधरीः—यथा च चित्तसंयमे पुरुषार्थसिद्धिस्तद्दर्शयति त्रिभिः। मलैर्वीतं विरहितं यदा शुद्धं मनो भवति। मनःशुद्धेर्ज्ञापकमाह अदुःखमिति ॥१६॥

श्रीधरोच्छिष्टपुष्टिः—योगेन मोक्षसिद्धौ श्लोकसंगतिमाह। यथेत्यादिना। मूलमपीत्थम्। अभिमानो द्विविधः। देहादावहंतारूपः पुत्रादौ ममतारूपश्च। तदुत्पन्नाः कामक्रोधलोभाख्या मलाः। कामो रागः। क्रोधो द्वेषः। लोभः

प्राप्तरक्षणेच्छा । श्रूयते हि तेषां मलत्वं "त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः । कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेदिति" । वीतं गतेषु मलेषु पुनरस्पर्शनयोग्यम् । ज्ञापकं लिंगमदुःखं रजस्तमोभ्यां निर्मुक्तम् । असुखं सत्वनिर्मुक्तं च । यद्यपि चित्तशुद्धिदशायां न गुणत्रयनिवृत्तिर्विक्षेपावरणयोः सत्वादिति वेदान्तसिद्धान्तस्तथापि चित्तशुद्धिर्द्विविधाऽपरवैराग्यनिष्ठा परवैराग्यनिष्ठा च । प्रथमायां सत्यां विक्षेपावरणे स्तः द्वितीयायां न तथा । प्रथमचित्तशुद्धेर्लक्षणं विषयसुखदुःखरहितत्वमेव । द्वितीयचित्तशुद्धेरुपर्युक्तं गुणत्रयनिवृत्तिरूपं लक्षणमिति संगतिः ॥१६॥

तदा पुरुषमात्मानं केवलं प्रकृतेः परम् ।
निरंतरं स्वयंज्योतिरणिमानमखंडितम् ॥१७॥
ज्ञानवैराग्ययुक्तेन भक्तियुक्तेन चात्मना ।
परिपश्यत्युदासीनं प्रकृतिं च हतौजसम् ॥१८॥

श्रीधरी :—निरंतरं निर्भेदम् । अणिमानं सूक्ष्मम् । अखंडितं अपरिच्छिन्नम् । हतौजसं क्षीणबलम् ॥१७।१८

श्रीधरोच्छिष्टपुष्टिः—आत्माणुत्वं निराकुर्वन्नाह निरंतरं निर्भेदमिति । मन्यंते हि पांचरात्रिणः शैवाः पाशुपता रामानुजमाध्वनैंबार्कवाल्लभाः सर्वेऽप्यात्मनोऽणुत्वं तदसत् । कथमात्मनोऽणुत्वं सिध्यति । जातितो व्यक्तितो वा । आद्ये व्यक्त्याश्रयं विना जातेरसंभवात् । अन्त्ये विनावयविनं व्यक्तेरलाभात् । तथात्वे चात्मनाशापत्तिः । अवयवत्वे चानवस्था । एतस्यावयवस्यापि मनसा विभागकल्पनासत्वात् । पुनरणुत्वाभ्युपगमेऽपि तदणुत्वं परमाणुरूपमुताणुसमुच्चयरूपम् । आद्ये प्रष्टव्यमस्माभिः कोऽयं परमाणुः सावयवो निरवयवो वा । नाद्यः अनंतरोक्तदोषात् । द्वितीयश्चेन्नैय्यायिकाभिमतस्तत्रयैव कालितो वा । न प्रथमस्तैर्जडविषय एव परमाणुत्वं स्वीकृतं न चैतन्यविषये । जीवात्मा प्रतिशरीरं भिन्नो विभुर्नित्यश्चेति जीवात्मनोऽपि

विभुत्वोक्तेः। विभुत्वे प्रतिशरीराभिन्नत्वं तु तेषामपसिद्धान्तोऽग्रे परीक्ष्यते। न चरमः कल्पितानामवस्तुत्वात्। नाप्तवचनवत् त्वद्वचनस्वीकारः शक्यस्त्वय्यस्माभिर्मूढत्वस्थापनात्। एवमन्त्येऽपि सिद्धसाधनादनुपपन्नोऽयमात्माणुत्वविवादः। मूलस्थमणिमानमिति पदं नात्माणुत्वपरं योजनीयं किंतु स्थूलान्नादिकोशपरित्यागात्सूक्ष्मबुद्धिसंबंधात् स्थूलजडदर्शिभिर्दुष्प्राप्यत्वात्सूक्ष्मत्वपरमित्याह। आणिमानं सूक्ष्ममिति। अखंडितमपरिच्छिन्नम्। आत्मनो विभुत्वेऽपि नैय्यायिकवत्परिच्छेदापत्तिरत आह। अपरिच्छिन्नमिति। नैय्यायिकाः खल्वात्मादिक्कालखानां चतुर्णामपि विभुत्वं जल्पंति। सर्वदेशसंयोगित्वं तेषां विभुत्वलक्षणम्। तत्र प्रष्टव्यमेवारे! यत्त्वया चतुर्णामपि विभुत्वमंगीकृतं तत्कथमुपपद्यते। चतुर्णामपि व्यापकत्वेसति सांकर्यात्तेषां पृथङ्निर्धारणाशक्यत्वात्पदार्थत्वेन दुर्वचत्वाच्च। मिश्रणस्वीकारश्चेत् दुर्युक्तिरियम्। संयोगस्यैकदेशावच्छिन्नत्वेऽन्यदेशे संयोगाभावावच्छिन्नत्वात्। नापि दुग्धजलवन्मिश्रणं वाच्यम्। तस्यावयवीत्वेन दर्शनात्। आत्मदिक्कालखानां निरवयवत्वमभ्युपगतं त्वया। अतस्तदपि न भवितुमर्हति। निरवयवमिश्रणं चेत् दृष्टमनुमितं शाब्दं वाग्रहात्कल्पितम्। नाद्यं क्वचिदप्यदर्शनात्। न द्वितीयमनुमानस्य दृष्टमूलकत्वात्। न तृतीयमणुत्वाभासशब्दानां "यो वै भूमा तदमृतं यदल्पं तन्मर्त्यम्" "यो मां पश्यति सर्वत्र" "नित्यः सर्वगतः स्थाणुरित्यादिन्यायानुगृहीताभिः श्रुतिभिः समन्वये कृते नार्थांतरं युक्तम्। चतुर्थं चेत्तवैवास्तु। न ह्युन्मत्तेन सह प्रलपितुमुत्सहामहे। त्वन्मताभ्युपगमेऽपि कथं दिशायाः सर्वदेशसंयोगित्वम्। दिशं विना देशस्य पार्थक्येन निर्देष्टुमशक्यत्वात्। यद्याकाशं विना पार्थक्येन दिशो निर्देष्टुं न शक्यंते तर्हि कथमाकाशस्यापि सर्वदेशसंयोगित्वं कल्पनीयम्। स्यात्तर्हि व्याघातत्वेनाकाशसंयोगित्वमेवाकाशविभुत्वमिति सान्निपातिकप्रलपनम्। कालस्य तव लक्षणाभासलाभेऽपि निरवयवमिश्रणोक्तदोषः। आत्मनः संयोगित्वं चेत्तवाभ्युपगतजीवेश्वरभेद एव न संभवति।

भेदस्यान्योन्याभावावच्छिन्नत्वात् । आग्रहे जीवेश्वरमिश्रणमपि स्यात् । नित्यजीवेश्वरसंयोगेऽपि जीवस्य दुःखसुखादिबंधनासंभवात् । तथात्वे तव शास्त्रोपदेशवैयर्थ्यम् । नापि जीवस्य विभुत्वे प्रतिशरीराभिन्नत्वं शक्यं स्वीकर्तुम् । न वा संकोचोपि भवति । विभुपदार्थस्य येन कर्मजन्यसंकोचेन प्रतिशरीराभिन्नत्वं कल्प्यते तेन द्वयोर्द्वयोः शरीरयोर्मध्येऽपि जीवलाभसंभवात्तत्रापि तस्यादृष्टसंयोगित्वात्सर्वादृष्टसर्वशरीरसर्वभोगानां संयोगेन सर्वस्य सर्वभोगापत्तेः । भिन्नत्वे स्वीकृते हि द्वयोः शरीरयोर्मध्येऽवश्यमेवाभावः स्वीकरणीयः । अनिष्टं खलु विभुपदार्थस्य क्वचिदप्यभावकल्पनम् । न च शरीरांशके जीव एव भोग इति वाच्यम् । निर्युक्तिकत्वात् । वस्तुतोंऽशत्वस्वीकारे निरवयवत्वविभुत्वहानिप्रसक्तेः । अस्माकं त्वौपाधिकत्वेनांशावच्छेदप्रतिबिंबाभासादीनां स्वीकारान्न दोषः । सांख्यानां पुरुषबहुत्वमप्यौपाधिकमेव जननमरणकार्यानुमेयत्वात् । "नानोपाधिषु यन्नानारूपं भात्यनलार्कवत् । तत्समं सर्वभूतेषु चित्सामान्यमुपास्महे" । एवमौपाधिकमेव पुरुषबहुत्वं सांख्यभाष्यकृद्भिः कंठरवेण प्रतिपादितम् । नाप्युपाधिसंयोगोऽस्माकं नित्यस्तदनादित्वेऽपि ज्ञाननाश्यत्वाभ्युपगमात् । नोपाधिरपि युक्त्या खंडयितुं शक्यते । अहं न जानामीत्याद्यनुभवेनोपलंभात् । न युक्त्या क्वचिदप्यनुभवापलापस्तस्या एकदेशित्वात् । सुष्ठूक्तमतोऽपरिच्छिन्नमिति । पुरुषस्य ब्रह्मणः । कथं तर्हि ब्रह्मप्राप्तावपि जीवन्मुक्तौ सत्यां संसारिवत्पुरुषस्तिष्ठति तत्रोपाधिनाशस्वीकारादिति चेद्यावदारब्धं भोगेन न क्षीयते तावल्लेशाविद्या तिष्ठति । तामेवोपाधिभूतां दग्धपटावभासवत् बाधितानुवृत्तिरूपिणीं साक्षिभास्यत्वेन पश्यतीत्याह । हतौजसं क्षीणबलाम् । श्रीधर्यामनुक्तं मूलमपि यथामति चोद्घास्यते । तदा पुरुषः आत्मना ज्ञानवैराग्ययुक्तेन भक्तियुक्तेनच केवलं प्रकृतेः परं निरंतरं स्वयंज्योतिरणिमानमखंडितमुदासीनमात्मानं परिपश्यति । तदा चित्तशुद्धौ सत्याम् । पुरुष आभासः । आत्मना चेतसा । "मनसैवेदमाप्तव्यम्" "पश्यंति ज्ञानचक्षुषेत्यादि श्रुतेः । अनेनेदं दर्शितम् ।

यथाऽन्यपदार्थदर्शने चक्षुर्दीपयोरपेक्षा वर्तते, दीपदर्शने तु केवलं चक्षुष एव तथा देहादिज्ञाने बुद्धिचिदाभासयोरपेक्षाऽस्ति । साक्षिज्ञाने तु केवलशुद्धबुद्धेर्नाभासस्य । ज्ञानं महावाक्यलक्ष्यमपरोक्षम् । वैराग्यं परमपरं च तयोर्द्वंद्वः । जीवन्मुक्तौ प्रारब्धाभिभवकारिणी परमात्मप्रीतिर्भक्तिः । सैव मुमुक्षुदशायां विघ्नापनोदिनी । एतात्रिकमेवात्म प्राप्तिसाधनम् । युक्तेन सहितेन । केवलं स्वतंत्रम् । प्रकृतेः परं निरुपाधिकम् । स्वयंज्योतिः स्वयंप्रकाशम् । उदासीनं तेजस्तमःप्रवृत्तावाकाशैकरसवत् गुणप्रवृत्तिनिवृत्तिजन्यहर्षविषादराहितम् । आत्मानं निजं रूपं परिपश्यति यथार्थत्वेनाभिजानाति । प्रकृतिं शिष्यादिजगन्मयीं बाधितानुवृत्तिरूपिणीमाविद्यां परिपश्यति मिथ्यात्वेन जानाति । अयं भावः । ब्रह्मज्ञानं न ब्रह्मणो भवितुमर्हति किंत्वाभासस्यैव । आभासो हि शुद्धेन चेतसा फलव्याप्तिरहितं वृत्तिव्याप्तिनिष्ठं ब्रह्म ज्ञात्वा ब्रह्मैवाहमनुभूयमानो मुक्तो भवतीति तृप्तिदीपे प्रोक्तं विद्यारण्याचार्यैस्तत्तत्रैव सम्यक् प्रपंचितम् ॥१८॥

न युज्यमानया भक्त्या भगवत्यखिलात्मनि ।
सदृशोऽस्ति शिवः पंथा योगिनां ब्रह्मसिद्धये ॥१९॥

श्रीधरीः—मनःशुद्धौ च भक्तिरेवांतरंगसाधनमित्याह नेति ॥१९॥

श्रीधरोच्छिष्टपुष्टिः—स्पष्टम् ।

प्रसंगमजरं पाशमात्मनः कवयो विदुः ।
स एव साधुषु कृतः मोक्षद्वारमपावृतम् ॥२०॥

श्रीधरीः—अस्य सर्वस्यापि सत्संगो मूलमित्याह प्रसंगमिति । अपावृतं निरावरणम् ॥२०॥

श्रीधरोच्छिष्टपुष्टिः—श्लोकमवतारयति अस्येति । सर्वस्य उपर्युक्तयोगस्य मूलकारणम् । "सतां संगतिरेवात्र प्रथमं साधनं स्मृतामिति स्मृतेः । ननु संगत्वात्संगवत्तस्यापि त्याज्यत्वमेवेति चेन्नेत्याह निरावरणमिति । एतत्सर्वं

मूलेन स्फुटीक्रियते। कवयः सर्वज्ञाः प्रसंगमेवात्मनोऽजरं पाशं विदुः। अयमर्थः— न हि सामान्यपदार्थसंगो बद्धुं शक्नोति किंतु विशेषसंग एव। सर्वेषां पुत्राणां न कस्यापि प्रीतिरुत्पद्यते किंतु ममताध्यासनिष्पादिते स्वपुत्रे। तृणादीनां संगस्तु सर्वेषामपि यावद्देहो भवति तथापि तत्रोपेक्ष्यत्वान्न मतिरुपजायते। अहंतावच्छिन्नममताध्यासनिष्पादितेषु क्षेत्रधान्यनिष्पत्त्यर्थे शकृतादिगर्तेष्वपि प्रसक्त्या प्रीतिर्दृश्यते। तस्मान्नेयं वासनोच्चनीचत्वं पश्यति किंतु भोगानुत्पाद्य वर्धत एव। स्वर्गादिराज्यसत्वेऽपि केवलपरस्त्रीभोगार्थे विश्वामित्रेंद्रादीनां श्वादिरूपग्रहणं श्रूयते। अतो मनसा गृहीतो विशेषसंगो भवति बंधहेतुरिति सिद्धम्। बंधनहेतुत्वादेवास्य पाशत्वम्। इमं पाशं कवयो विदुः। जरायामपि वासनावृद्धिदर्शनान्मूढास्तु वासनाभिभूता वासनामेवानुवर्तंते। अत्र कवीनामेवानुभवः प्रमाणम्। एवमयं प्रसंगः सर्वथा बंधनमूलोऽपि साधुषु कृतश्चेदावरणनिवर्तकतया निरावरणत्वान्मोक्षहेतुर्भवति। यथा मरणमूलं हालाहलमपि द्रव्यांतरैर्भावितं भिषग्वर्यकरनियोगान्नितरां व्याधीन्निवारयति ॥२०॥

तितिक्षवः कारुणिकाः सुहृदः सर्वदेहिनाम्।
अजातशत्रवः शान्ताः साधवः साधुभूषणाः ॥२१॥

श्रीधरीः—साधूनां लक्षणमाह तितिक्षव इति चतुर्भिः। साधवः शास्त्रानुवर्तिनः। साधु सुशीलं तदेव भूषणं येषाम् ॥२१॥

श्रीधरोच्छिष्टपुष्टिः—शास्त्रं ऋगादिकं येऽनुसरंति ते शास्त्रानुवर्तिनः। श्रीमद्भागवतं भक्तिशास्त्रं वा। ननु सर्वेषु सात्विकेषु सत्पुरुषव्यवहाराच्छास्त्ररहिता अप्यविगीतवृद्धव्यवहारानुसारिणः स्वभावात्सात्विकश्रद्धावंतः साधवो भवितुमर्हंत्यतः कुतः शास्त्रानुवर्तिनामेव साधुत्वमिति चेदुच्यते। स्वभावजा श्रद्धा खलु त्रिविधा। सात्विकी राजसी तामसी चेति। यथाकथंचित्पूर्वकर्मफलानुसारिणी बुद्धिः सत्वानुसरणादस्मिन् जन्मनि स्वभावेनैव श्रद्धामुत्पादयति। यद्यपि

न बुद्धिः कर्मपरिणामजन्या तथापि शास्त्रीयविवेकहीनत्वात् दृढव्यसनानु सारिवत् कर्मफलरूपस्वभावमनुसरति। अतस्तदनुरूपा श्रद्धा त्रिविधा भवति। यद्यपि बुद्धेः सात्विकत्वं तथापि गंगाजलमपि मद्यभांडे प्रवाहहीनत्वाद्गंधवत् दृश्यते तथा बुद्धिरपि शास्त्रीयविवेकहीनत्वाद्यथोत्कटगुणजन्यस्वभाववती दृश्यते। सा सत्वस्वभाववती सात्विकी श्रद्धा। रजःस्वभाववती राजसी। तमःस्वभाववती तामसी चेति। यस्य जीवस्य खलु दैवेन या स्वाभाविकी श्रद्धा तन्मय एव स पुरुषो ज्ञेयः। स तामसश्रद्धश्चेत् विनायकमातृका-चतुर्भगिन्यादीन् भूतान् स्वधर्मच्युतत्वात् देहपातानंतरमुल्कामुखादिप्रेतत्वं प्राप्तांश्च यजति। तस्मै ते प्रेताभूताश्च क्षुद्रफलं यच्छंति। देवास्तु नित्यकर्म-त्यागादिपापं मत्वा तं नरके पातयंति। राजसश्रद्धश्चेत् कुबेरादीन् यक्षान्नि-र्ऋतिप्रभृतीनि रक्षांसि च यजति। तमपि यक्षरक्षांस्यनुगृण्हन्ति किंतु नित्यकर्मत्यागादिरूपपापापनोदने समर्था न संत्यतो राजसं तं देवा नरके पातयंति। ननु "भूतानि यांति भूतेज्या" इत्यत्र यद्याजी तल्लोकं प्राप्नोतीत्युक्तेः कथं भूतयक्षादिलोकप्राप्तान् रजस्तमःश्रद्धावतस्तल्लोकस्य मनुष्यलोकापेक्षया-धिकसुखित्वात् देवा नरके पातयंतीति चेच्छृणु। अत्र हि पक्षत्रयम्। तस्मिन् लोकेऽपि तेषां दुःखमेव भवति। यथा मत्स्यानां घृतप्रदानं दुःखायैव भवति तथा राजसतामसश्रद्धावतां यक्षादिलोकोऽपि न सुखाय कल्पते। किंतु तत्रैतावान् विशेषः। येषां श्रुतिष्वधिकारस्ते त्रैवर्णिका यदि यक्षादीन् यजंते तदैव ते तस्मिंल्लोके देवरोषाद्दुःखं प्राप्नुवंति। ये च श्रुतावनधिकारिणः। शूद्रस्य पुराणादिष्वधिकाराद्वैदिकवर्णत्वमेवातस्ततोऽपि नीचाः विगीत-वृद्धव्यवहारानुसारेण राजसास्तामासा यक्षादींश्च यजंते तेषां तस्मिंल्लोके देवैरुपेक्ष्यत्वात्सुखमस्ति किंतु तदपि न कल्पादिनिर्मितयक्षादिवदिति केचित्। अन्ये तु तद्याजिनां तल्लोके सुखभोगानंतरं नरकादिषु पतनम्। तत्रायं विशेषः। सात्विकस्वभावाः मानुषं जन्म मरणानंतरं कथंचित् प्राप्नुवंति। राजसस्वभावास्तल्लोके सुखभोगानंतरं क्षुद्रनरकं यान्ति। एवं

तमःस्वभावा अपि पैशाचभोगानंतरं महानरकं यान्ति। पुनरन्ये इत्थं वदंति। "भूतानि यान्ति भूतेज्या" इत्यादि वचनं न स्वभावश्रद्धावद्यजनपरं किंतु शास्त्रीयश्रद्धावद्यजनपरम्। देवयजने विधिकांडं शास्त्रम्। तद्विवेकिनां तेनैव श्रद्धोत्पद्यते। यक्षराक्षसयजने च योगमोक्षभागवर्जं रुद्रयामलादितंत्र शास्त्रम्। तद्विवेकिनां तेनैव श्रद्धा जायते। एवं भूतादियजनेऽपि भूतडामरादितंत्रं शास्त्रम्। अतस्तद्विवेकिनां तेनैव श्रद्धा। सा च क्रमेण सात्विकी राजसी तामसी भवति। तत्र ये शास्त्रीयविवेकजन्यया सात्विक्या श्रद्धया यथाधिकारं देवान् यजंते ते तल्लोकमवाप्य पुण्यक्षये मंगलयोनौ संजायते। ये च तंत्रविवेकजन्यया राजस्या श्रद्धया यथाधिकारं यक्षरक्षांसि यजंते ते तल्लोकं प्राप्य यथोचितं सुखं भुक्त्वाऽमंगलयोनौ जायंते। एवं भूतडामरादिविवेकजन्यया तामस्या श्रद्धया यथाधिकारं भूतप्रेतांश्च यजंते तेऽपि तल्लोके तदुचितं सुखं भुक्त्वा नरकं प्रयान्ति। श्रुतिरप्येतदाह "तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वाथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चांडालयोनिं वा"। एतत्सर्वं यथाधिकारं याजिनामेव। अधिकारो वर्णाश्रमपालनं यथा प्रथमपक्षे चोक्तम्। अधिकारत्यागेन तु सर्वेषां याजिनां पतनमेवेति निष्कर्षः। अतः शास्त्रीयविवेकहीनानां रजस्तमस्स्वभावश्रद्धावतां यक्षादियाजिनां निधनानंतरं तल्लोके दुःखप्राचुर्यं संकष्टरसचोषणन्यायेन सुखमिति सिद्धान्तितम्। यथा कश्चित्पुरुषः कूपे पतितः। तदा दैवप्राप्तस्य तरोर्मूलं करे गृहीत्वा कथमप्यंतराले तिष्ठन् तत्र यद्यधः पश्यति तर्हि स्वभक्षणार्थं जलचरादीनां मुखं प्रसृतमिति पश्यति। तेन भीतः यदोर्ध्वं पश्यति तदा स्वभक्षणार्थं व्याघ्र आगत इति पश्यति। तेनापि भीतः। इत्येतस्मिन् समये तरुस्थमधुरमधुबिंदवो मुखे पतंति। तदा स मूढपुरुषः संकटसिंधौ मग्नोऽपि सुखं मनुते तद्वत्। इत्येतस्य पक्षत्रयस्य सुग्राह्यत्वेऽपि चांत्याधिक्यं भाति। एवं सात्विकश्रद्धोऽपि देवान् यजति।

शास्त्रीयविवेकहीनेषु त्रिष्वपि श्रद्धावत्सु विगीतवृद्धव्यवहारो योजनीयः। तत्र तामसानां शकृत्पुत्तलादिपूजनादिकं विगीतवृद्धव्यवहारः। रजस्स्वभावानां भैरवादिभक्तभोजयितृत्वादि विगतितवृद्धव्यवहारः। एवं सत्वस्वभावानामपि देवबुद्धया तातकूपपूजनादिकं विगीतवृद्धव्यवहाराः। यथा मम गुरुणा तातेन वा कृतः कूपो गंगाशतादप्यधिकोऽस्तीति मत्वा स तातकूपभक्तो देवबुद्ध्या तं यजते। तं सात्विकं देवा उपेक्षन्ते। न प्रीतिं कुर्वंति न वा द्विषंति। यथा तस्य कर्म तथा कथमपि फलं भवतु तथापि किंचिद्देवानामनुग्रहो वर्तत इति भावः। एवं सात्विकश्रद्धावंतं सात्विकपुंडरीकमिव देवा अनुगृण्हंति। नित्यकर्मत्यागादिकं पापमप्यस्यापनुदंतीति भारतभावदीपकृन्मतम्। स्यादेतत् प्राचीनवचनाभिप्राये के वयं वराकाः। इत्येतत्सर्वं श्रद्धावताम्। नास्तिकानामासुराणां तु लोकाद्यव्यवधानेन नरकः। "जायस्व म्रियस्वेत्यादिश्रुतेः"। "पतंति नरकेऽशुचाविति" जागृच्छुतेश्चेति बोध्यम्। एते सात्विका अप्यत्र कृपणा अतो न साधवः। शास्त्रीयविवेकहीनानामेवैतच्छ्रद्धात्रैविध्यम्। शास्त्रीयविवेकिनां तु प्रयत्नबलात् स्वतंत्रया धिया स्वभावविजयादेकैव शुद्धसात्विकी श्रद्धा। यद्यपि श्रद्धात्रैविध्येऽपि विवेकिनां प्रवृत्तौ किंचिच्छास्त्रीयत्वं प्रागुक्तं तथापि तस्य स्वभावश्रद्धाजाड्यमिश्रणेन गौणत्वम्। अत्र तु मोक्षशास्त्रविवेकिनां शास्त्रीयत्वं स्वभावविजयहेतुकमिति ज्ञेयम्। अतः सुष्ठूक्तं शास्त्रानुवर्तिनः साधव इति। तेषां मुमुक्षुदशायां शास्त्रानुवर्तित्वे सिद्धे सिद्धदशायां शास्त्रप्रयोजने क्षीणेऽपि जगत्कल्याणायैव शास्त्रानुवर्तित्वं "लोकसंग्रहमेवापि संपश्यन् कर्तुमर्हसीति" जागृच्छुतेरित्याह। सुशीलं तदेवेत्यादिना। अधुना मूलं किंचिदुद्घाटयते। अहो मनुष्याः स्खलनशीला साधवस्तु न्यायमूर्तयः। तेषां प्रसंगे शिष्यप्रमादश्चेत्ते कथं सहंते। इत्यस्योत्तरं तितिक्षवः। तथापि प्रमत्तं शिष्यं किमुपेक्षंत एव। नेत्याह कारुणिकाः। ननु करुणा सत्वपरिणामस्ते तु त्रिगुणरहिताः

कथं तेषां कारुणिकत्वमित्यस्योत्तरं सर्वदेहिनां सुहृदः। यथा जलं स्वभावतः समुद्रगाम्यपि सहजमेव जगत्तृषाहरणे समर्थं तद्वत्। कथं तर्हि नारदादिभिः केषांचित् दंडः कृत इति श्रूयतेऽत्र ब्रूमः। न स दंडः शत्रुबुद्ध्या कृतः किंतु परिणामदृष्ट्या मातृपितृताडनवत्। उक्तमेतन्महाभाष्यकाद्भिः। "लालने बहवो दोषास्ताडने बहवो गुणा"। अयं भावः। सत्पुरुषा यदा दंडं कुर्वंति तदा तस्योद्धारमपि स्थापयंति। यथा श्रीनारदेन नलकूबरौ वृक्षदशां गतौ पुनस्तौ श्रीकृष्णकरेण मुक्ताविति शापोद्धारौ नारदकृतावेव दृश्येते। तथा नदृश्यते शत्रूणां कुत्रापि। अतः सर्वानुग्राहकत्वात्तेऽजातशत्रवः। तर्हि तेषां जगदुद्धरणचिंतापिशाचीकृतः संसारोऽस्ति वा। नेत्याह शान्ताः ब्रह्मनिष्ठा आत्मारामाः "यज्ज्ञात्वा मत्तो भवति स्तब्धो भवत्यात्मारामो भवति"। "लोकहानौ चिंता न कार्या निवेदितात्मलोकवेदत्वादिति" श्रीनारदीयभक्तिसूत्राभ्यामवगम्यते। मत्तः स्वतंत्रः। स्तब्धः साधनशून्यः आत्मारामः ब्रह्मरूपः। अहैतुकी भक्तिरात्मनिवेदनम्। लोकानपि परमात्मैव तारयतीति बुद्ध्या निराभिमानत्वं लोकनिवेदनम्। यावद्देहस्तावद्यथातथा कर्मसमर्पणरूपेण भगवत्सेवनं वेदनिवेदनमिति सूत्रयोः स्वारस्यम्। इत्येवंविधा जीवन्मुक्ता भगवद्भक्तास्तिष्ठंतीति तात्पर्यम् ॥२१॥

मय्यनन्येन भावेन भक्तिं कुर्वंति ये दृढाम्

मत्कृते त्यक्तकर्माणस्त्यक्तस्वजनबांधवाः ॥२२॥

श्रीधरोच्छिष्टपुष्टिः—नन्ववगतं सत्पुरुषाणां शास्त्रानुवर्तित्वं तितिक्षुत्वं कारुणिकादित्वं च। तच्च बौद्धशास्त्रवर्तिनामपि संभावयितुं शक्यते। कारुणिकादित्वं हि स्वाभाविक्या कोमलया वृत्त्याऽऽक्षिप्यते। तेन न कारुणिकादित्वं शास्त्रस्य विषयो भवितुमर्हति। नापि विधिकांडस्य विषयः कार्पण्यात्। विधिकांडवशा हि कृपणाः स्वार्थिनो निकृष्टदृष्टयो यज्ञेऽवक्लृप्तब्रह्मचर्या अप्सरस्समूहयात्रादिकं फलं साधयंतः पुण्यक्षयेऽवतरंतो भ्रमंति।

तदुक्तं हृदयालुकैः “कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् । क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति” । श्रुतिरपि “यथेह कर्मचितो लोकः क्षीयते” इत्यादि । तेन तेषामौदार्यादिगुणानां किमपि शास्त्रयोनिरूपमधिष्ठानमवश्यमवगंतुं योग्यमित्यत आह मयीति । अस्मच्छब्दस्य सप्तमीनिरूपणेन प्रत्यगात्मन एकान्तेन विषयित्वं विनिवारितम् । यदस्मत्प्रत्ययगोचरं साक्षिचैतन्यं तदेव समष्टिवृत्त्याश्रयेणानध्यस्तविवर्तं कापिलाद्यवताररूपमिति । अतो मयि परमेश्वरेऽनन्येन भावेन नाहमन्य इत्येकाग्रवृत्त्या चिंतयंतः भक्तिं प्रीतिं कुर्वंति स्थापयंति । अहमन्य इति मत्वा भजतां श्रौतनिषेधो दृश्यते । “अथ योऽन्यां देवतामुपासतेऽन्योऽहमस्मीति न स वेद यथा पशुः” । ज्ञानेऽत्यंतमन्यत्वलाभेऽपि परमप्रेमास्पदतया न तस्य भक्तिर्विषयप्रीतिरिवास्माभिः परिभूयते इत्याह दृढामिति । जागृतौ स्वप्ने चानध्यस्तविवर्तविषये साकारे प्रीतिः । सुषुप्तेरपि ज्ञानेनाज्ञानहानौ समाधिरूपत्वात्समाधेरपि स्वरूपविषयसावधानतयोपक्षयात्सर्वास्ववस्थास्वेका ब्रह्मप्रीतिरेव संबध्यते । तदा सर्वाणि कर्माणि कर्त्राश्रयेण न तिष्ठंति यच्च न कर्त्राश्रयं कर्म तच्च विहितं निषिद्धं वा वेदेनाऽप्युद्देष्टुं न शक्यते । क्रियामात्रे तत्स्थापनेन गृहभ्रमणादावपि तथैव स्यात् । विहितनिषिद्धाभावे न तस्य फलजनकत्वम् । वृत्तेर्ब्रह्मरूपत्वान्न क्रियामात्रमपि । अतो स्थानराहित्यात्स्वाश्रयाणि सजातिकान्येव कर्माणि त्यक्तानि भवंति । एवं स्वेच्छाकालसुखदायकं पारलौकिकं कर्म यद्येते त्यजंति तत्किं देहात्मवादिवद्विषयासक्त्यैव नेत्याह । त्यक्तस्वजन इति । विषयासक्ताः कर्मत्यागिनः परलोकाविश्वासादप्यैहिकं स्वजनादिकं न त्यक्तुं शक्नुवंति । एते त्वहंममविषयराहित्यात् त्यक्तस्वजनबांधवा इति तात्पर्यम् ॥२२॥

————

# १४

## संस्कृत

१३११ /२१९०/ सामनुष्टुप. मूळ.–पूर्वी. ता.–तेताला. गौण.–
सगुण चरित्रें

मदनदहनप्रियवृषभानुसुतापतिं भजस्व मनः । यत्कृपया भवभुजगवदनतो दूरे यान्ति जगाः ।। धृ० ।। कामक्रोधमदलोभैः सह त्वं मा कुरु व्यवहारम् । गुरुशास्त्राभ्यां श्रुत्वाऽलोचय परब्रह्मसारम् ।। १ ।। त्यक्त्वा गौतमकणादतर्कं श्रुतिमार्गणैर्हि । अन्वयव्यतिरेकतोऽथ पश्य ब्रह्मणि जगन्नहि ।। २ ।। कृष्णभक्तिमिच्छसि चेच्चिंतय व्रजदारान्सगुणान् । ज्ञात्वा सच्चित्सुखमितरेषान्न' पश्य दोषगुणान् ।। ३ ।। अनध्यस्तमस्कांतं दृष्ट्वा चित्तनुसाकारम् । ज्ञानेश्वरकृपया नान्ना च न प्राप्स्यसि संसारम् ।। ४ ।।

१३१२ / २१९१ / श्लोक

विभातिसच्चित्स्वसुखं यदा तदा । न दृश्यते विश्वमनेकरूपगम् ।
परं पदं यं श्रुतयो वदंति तं । शिवं गुरुं शंकरमीश्वरं भजे ।।

१३१३/२१९२

सर्वेषु शास्त्रेषु गुरुप्रसादतः पश्यन्ति कृष्णेन सहाविरोधम् ।।
तेषां न वैतंडचभयं कदा भवे दग्नौ न दह्यन्ति यथाग्निकीटकाः ।। १ ।।

१३१४/२१९३

जय जय हर इत्युच्चारमात्रेण हि त्वं । जहि भवगतिमेतां स्थीरबुद्धे महात्मन् ।। इहपरपुरदोषालोकनाद्रागमुक्तः । श्रुतिपथमविकारं गच्छ

हित्वाऽन्यशास्त्रम् ।। २ ।। श्रौतं स्मार्तमथैतीह्यं प्रमाणं शब्दकं त्रिधा । तर्केणास्यनुकूल्येना ऽ नुभूत्या च विचारयेत् ।। ३ ।।

१३१५ /२१९४/ धर्मलक्षणम्

ईश्वरास्तित्वबुद्धिस्तु सुकृताचरणं तथा ।।
सामान्यत्वेन गृण्हीयादेतद्धर्मस्य लक्षणम् ।। १ ।।

अष्टमीचे वेळेला लीलावैंचित्र्याने भाषण केले आहे. उत्सवसमयीचें.

१३१६/२१९५/ श्लोक

भगवन्नत्र किं चित्रं यस्माद्भिन्नं जगन्नहि । यत्र ते भावना जाता स वै साक्षात्परेश्वरः ।। १ ।। सर्वेषामेव योगिनां मध्ये श्रेष्ठो महामुनिः । भगवान् ब्रह्मपुत्रोऽस्ति तेन पोक्तमिदं पुरा ।। २ ।। राधिकाशापयोगेन व्रजेऽस्मिन्नागतो हरिः । तस्मात्तद्दर्शनायैव मामद्य नय सद्गुरो ।। ३ ।।

१३१७ /२१९६/ रंभावृत्त. रा.—सारंग ता.—तेताला.

संसारेऽस्मिन् गुरुचरणौ भज ।। धृ० ।। जगदिदमखिलं मायारचितम् । मत्वा अनृतेद्राग् विरज विरज ।। १ ।। पश्यसि यत्तत् सकलमनित्यम् । विष्णुगुणेषु समनुरज अनुरज ।। २ ।। ज्ञानेश्वर मे कान्तरूपिणम् । स्मृत्वा दीनेषु दयां सृज सृज ।। ३ ।।

१३१८/२१९७/ रमावृत्त. रा.– यमन. ता.– तेताला.

भज राधारंगम् ।। मानस ।। धृ० ।। प्रमदाहृदयरतीशशमंतं । सुखसिंधुतरंगं ।। १ ।। सच्चित्सुखघनतनुमविकारं । निजजनभवभंगं ।। २ ।। गोपीपीनपयोधरपाणिं । विठ्ठलतनुजांगं ।। ३ ।।

१३१९ /२१९८

चेतो भज युगलकिशोम् ।। धृ० ।। स्त्रीसुतधनजायासु ह्यस्मिन् । संसृतिपारनिसारम् ।। १ ।। ज्ञानेश्वरकन्याकुचमर्दन । कारकमिच्छितभारम् ।। २ ।।

१३२०/२१९९/ श्लोक

शिवस्तुति.

यस्य ज्ञानं सर्वविज्ञानरूपम् । यस्य ध्यानं सर्वसंप्रापकं च ।।

योऽर्वाचीनो माययानुग्रहाय । तं सद्भक्त्या पार्वतीशं प्रणौमि ।। १ ।।

१३२१ /२२००

शशिशिररतिपात्रं शुद्धचैतन्यमात्रं विमलसुगुणगात्रं भक्तसंछिन्नरात्रम्
निगमगतिविहारं संभृतांधांधभारं व्रजयुवतिविलासं व्रीडहासं प्रणौमि ।। २ ।।

१३२२ / २२०१

यस्य ध्यानात्स्थैर्यतामेति चित्तं यस्य ज्ञानान्मुक्तं तायाति जीवः ।।
यद्धर्मेणावाप्यते चित्तशुद्धिः तत् ब्रह्मैकं पार्वतीशं नमामि ।। ३ ।।

१३२३/२२०२/ शिवस्तुति .

श्लोक.

यदज्ञानान्माया भवति सविलासद्युतिधरा । यतो यस्य ज्ञानादपनयति तां सन्निगमवित् ।। असावात्मज्ञप्तौ सतनुरहितं स्वीयसदयम् । शिवं वंदे सद्यस्तुहिनतनुजानंदनिलयम् ।। १ ।।

१३२४ /२२०३

कोऽयं भो नयने महाद्युतिधरो वन्हिर्न शंका कुरु । कोऽयं भो शिरसिंदुरेव गिरिजे नैवानृतं मे वचः ।। केऽयं केशसमाश्रितेति वचसा मौनं समासादितः। संरंभं प्रणयादुमा कृतवती यस्मिन् शिवः पातु नः ।। २ ।।

१३२५ /२२०४

वेदा यस्य प्राणतः संप्रवृत्ताः संकल्पाद्वै खदिभूम्यंतभावाः ।।
सत्यज्ञानाऽनंदमंतर्बहिस्थं । तद्ब्रह्मैकं पार्वतीशं प्रणौमि ।। ३ ।।

१३२६ /२२०५/ श्रीकृष्ण स्तुति.

अन्योन्यत्राध्यासतः संगभावात् ब्रह्मैवैकं संसरत्यत्र मोहात् ।।
तद्यत्प्रेम्णा सर्वसंगं विहाय मुक्तं स्यात्तं गोपबालं नमामि ।। ४ ।।

१३२७ /२२०६

ब्रह्मज्ञानात्केवलानंदलब्धौ संधौ वृत्तौ प्रेमभक्त्यैव सिद्धः ।
योऽनध्यस्त स्तिष्ठमानो विवर्तो विश्वात्मानं तं स्वकांतं श्रयेऽहम् ।। ५ ।।

१३२८/२२०७/ उपदेशपर.

भव भव सुभक्तिनिष्ठो इष्टज्ञानेन पूर्णतामेहि ।
अनित्यमसुखं लोकं ज्ञात्वैत्कांते भज स्वमात्मानम् ।। १ ।।

१३२९/२२०८/ शिवस्तुति.

संसारे पतितस्य दुःखिततनोरात्माभिलाषास्थितौ । कारुण्येन महत्तरेण वपुषा साकारतामागतौ गाढालिंगनरुपिणौ चितिमयौ यौ ज्ञानवृत्या भिदौ । वंदे हैमवतीश्वरौ प्रणयतः कैवल्यमुक्तिप्रदौ ।। २ ।।

१३३० /२२०९ / अंबास्तुति.

यज्ञसि जगतो माता तस्मान्माता मसाप्यनायासात् । स्तनपानार्तं मामपि दृष्ट्वा धावसि कथं न गिरिकन्ये ।। १ ।। यद्यसि निजपतिसेवानिरता त्वं धर्मपालनाद्धेतोः । तदपि स्वसुतप्रीत्या रुणद्धि न हि ते पिता शिवोऽपि मम ।। २ ।। त्वय्यपि सुताभिलाषा मयि तु क्षुद्दीनता महत्यस्ति । स्वसुतं मत्वा त उमे पालय मे स्तन्यदानतो मातः ।। ३ ।। पीतो गजवदनादिभिरपि ते न स्तनपयोर्णव क्षीणः । स्वीयप्रेमतरंगैरुल्लसितो दृष्यते यतो नित्यम् ।। ४ ।। लालामलमूत्रमयं परतंत्रं दुःखरूपमपि बाल्यम् । पुत्रीकृत्य त्वया चेत् अंगीकृतमयि तदेव संयाचे ।। ५ ।। शतशः संत्यपराधाः क्षंतव्यास्ते त्वयैव मे मातः । स्तन्यंविना क्व कार्यं क्रीडासक्तं न चित्तमपि तद्वत् ।। ६ ।। तरुणं वयो न याचे तव कुचदुग्धं विना कुतो जरठम् । मे स्यात् सदैव बाल्यं यस्मिंस्त्वं पास्ययं ममेति धिया ।। ७ ।। प्रयःप्रदानेन सदा पासीत्यनुभूतिमानमस्ति मम । तावत् चिन्मयि माता प्रौढापि[1] जडा कुतो वदंति बत ।। ८ ।। तव यदि वरमासाद्य श्रेष्ठो जीवति चिरं भृषिः काकः । तर्हि स्तनपानात्तव बाल्यं मे स्यात् कुतो न ब्रह्मसम् ।। ९ ।। धनवनितामतिविक्लवमयसतिमतिरेव यौवनं श्रयते । शिवगिरिजालालनजे बाल्ये कैवल्यमेव मन्येहम् ।।१० ।। मूत्रेण मूत्रयोगो वनितायोनौ हि योवने चेताः । मूढ स्पृहयसि किं तत् बाल्ये गिरिजास्तनं पिबस्व सखे ।। ११ ।। मदर्थमपि ताडणमिव ते चेत्त्वं भवसि शोकसंमग्ना । झटिति स्वांके कृत्वा सांत्वयसे

१ ह्रा छांदस प्रयोग आहे. हे सखेतिवत्.

स्तनपय:प्रदानेन ।। १२ ।। केनाऽपि ममावगुण: कथितश्चेद्वदसि रोषयुक्त-
धिया । एवमरे किं प्रोढये क: स्याद्बाल्मे गुणी नु दर्शय माम् ।। १३ ।।

१३३१/२२१०/ तातस्तुति.

यस्य प्रसादात् परमार्थरूपात् नार्यप्यहं विष्णुरूपा बभूव ।।
यो विग्रही भक्तसंज्ञानहेतो ज्ञानेश्वरं तं शरणं प्रपद्ये ।। १ ।।

१३३२ /२२११ / उपदेशपर. प्रश्नोत्तर.

ज्ञानस्य तत्वं कथमस्ति सम्यक् भूतेषु साम्यं परमार्थरूपम् ।।
भक्त: स्वरूपं कथमस्ति तातज्ञातेपि तत्वे हरिपादसेवा ।। २ ।।

१३३३/२२१२/ उपासनापर.

पितास्तु देवो पितृपूजकानां माता गुरुश्चैव विधेयकानाम् ।।
दैवं हि देवो बहु कामिकानां ममास्तु कांतो भगनन्परेश: ।। ३ ।।

१३३४ /२२१३ / वेदान्तपर

गर्भेऽथ बाल्ये तरुणे जरायां मृतौ जनौ स्वर्गयमालये वा ।।
भक्ताबभक्तौ विरतावमुक्तौ नाहं स्वरूपच्च्युतिं संस्मरामि ।। १ ।।

१३३५ /२२१४ / देवीस्तुती.

सत्यां ज्ञानमयीमनंतवचगां शांतां सुखैकांतिकाम् । कांतां शंकरभूतपालन-
विभोरेकांतवार्त्ताश्रियम् ।। भक्तानुग्रहहेतुरद्वयतनुं श्यामां जगत्सुंदराम् ।
अंबा मातरमंगजावनरतां स्वां देवतामाश्रये ।। १ ।।

१३३६/२२१५ / रा. रा. त्रिपुरवार यांनीं महाराजांना समस्या दिली ती
महाराजांनी पूर्ण केली. संकीर्ण.

नह्यस्ति पूर्णपरमार्थसुखाववोधो । विद्यास्ति किंतु न हि कोपि ततो
रसज्ञ: ।। वांछा यतो महति भूपतिजादरस्य । तस्माद्भजंति कवयो
धनदुर्मदांधान् ।। १ ।।

१३३७ /२२१६ / कमलारंगीवृत्त. रा.–बेहाग. ता.–तेताला.
(राजविद्याधर.) उपासनापर.

गोविंदं वंदे ।। धृ० ।। या पदभजनें निर्वृतिरस्या । सौं.न चिदानंदे ।। १ ।।

करुणार्णवतनु मयि करुणांबु । मनसिज मतिमंदे ॥ २ ॥ श्रीज्ञानेश्वरकन्या क्रीडति । केवलचिंतिछंदे ॥ ३ ॥

१३३८/२२१७ / कमलारंगीवृत्त. रा.—छायानट. ता.—तेताला. भगवत्स्तुति.

वंदे गोपालम् ॥ धृ० ॥ देवकितनुजं मायामनुजं । भुवनत्रयपालम् ॥ १ ॥ शशिधर प्रियकर कमलाकांत । मुखमुरलीलोल ॥ २ ॥ अलकावतिपति-नंदिनिरमणम् । करुणाकल्लोलम् ॥ ३ ॥

१३३९/२२१८ / यत्नप्रशंसा.

यः कालं प्रहिणोति तीव्रगमनात् यश्चेश्वरोपेक्षते । दैवं येन विना न यच्छति फलं यस्मिन् स्थितं जीवितम् ॥ जीवः कोऽपि यतो भवत्कमल-जोऽन्यः शंकरोऽन्यो हरिः । विश्वं यस्य बलाद्धिनस्ति दुरकं यत्नाय तस्मै नमः ॥ १ ॥

१३४० /२२१९ / उपदेशपर

कोणा एका आईला सांगितले.

वेदान्तश्रवणं शुद्ध मयि पुत्रत्वभावना । सत्संगश्च स्वधर्मश्च शिवविष्णो-रुपासनम् ( भजनं शिवकृष्णयोः) ॥ १ ॥ एतानि साधनान्यत्र कथितान्या-त्मसिद्धये । कृत्वा प्रेमवशात्तूर्णं कृष्णत्वमनुभूयताम् ॥ २ ॥

१३४१/२२२०/ श्लोक

नाहं वेदपदार्थतत्वविदुषी न्यायादिवादे रता । नाहं योगविवेकयज्ञफलभुक् नालंकृतालंकृतौ ॥ नाहं मुक्तिसुखाभिलाषनिरता मुक्ता न संसारिणी । यो गोपीकुचमर्दने पटुरहं तन्मंदिरे मार्जनी ॥ १ ॥

१३४२/२२२१/ सुशीलावृत्त. रा.—केदारा. ता.—तेताला.

(राजविद्याधर.) करुणापर (व्यासचतुः सूत्रीवर)

भगवन् मामवलोकय तात ॥ धृ० ॥ अलकावतिवल्लभ करुणार्णव । अपवर्गश्रीकान्त ॥ १ ॥ जनजनिमरणविलयक निगमकृत् । सत्यं ज्ञानमनंत ॥ २ ॥ ज्ञानेश्वर गुरुनाथ दयालो । जय निगमांतप्रांत ॥ ३ ॥

१३४३ /२२२२ / श्री महाराजांनीं केलेली स्वतःच्या अलोका आईची स्तुति.

न याचे भूराज्यं रुचिरसुरसाम्राज्यमपि नो । न वा ब्राह्मन्धाम प्रवरकपुरं नो हरिपुरम् ।। न कांक्षे कल्याणं न च परपदानंदपदवीम् । परं कांक्षेऽलोकाचरणकमलप्रीतिमचलाम् ।। १ ।।

१३४४ /२२२३ / रसालावृत्त. रा.–बिलावल. ता.–तेताला.

कृष्णं भज मतिमोहनकारम् ।। धृ० ।। मदनारिविनोदास्पदमीशं । विज्ञानामृतसारम् । येनापहृतोऽर्जुनस्य शोकः । दत्वागीतासारम् ।।२।। मद्भगिनीभिः सेवमानकं । वेणूनादोद्धारम् ।। ३ ।। ज्ञानेश्वरकरुणाधनकृपया । स्मर मधुमुरहंतारम् ।। ४ ।।

१३४५/२२२४/ श्लोक शिवस्तुति.

यद्राजसं रूपमुत्पत्तिहेतौ सत्वं स्थितौ तामसमंतनिष्ठम् ।
यत्कारणं वेदमयं तुरीयम् उमासहायं पितरं श्रयेऽहम् ।।

१३४६/२२२५/ रमावृत्त. रा.–भूप. ता.–तेताला.

मंगलाचरणपर पद.

वंदे सुगजाननजरणम् ।। धृ० ।। विघ्नैरभिभूतेऽस्मिल्लोके । त्वदन्यो न शरणम् ।। १ ।। धृत्वाऽलंदीवरूपं विभो । वारय जनिमरणम् ।। २ ।।

१३४७/२२२६ / संकीर्णश्लोक.

ज्ञानेश्वरकृपालेशात् श्रीकृष्णस्य प्रसादतः ।
योषित्सुमातृबुद्धित्वात् वयं वै निर्भयास्सदा ।।

१३४८ /२२२७ / श्लोक–शिवस्तुति.

शिवाय शूलिने नमः शशांकशालिने नमः । पिनाकधारिणे नमोंऽधकांतकारिणे नमः ।। उमाविहारिणे नमोऽखिलाघहारिणे नमः ।। कपालिने नमोनमः कपर्दिने नमोनमः ।।

१३४९/२२२८/ वीरजननीवृत्त. रा-भूप. ता.–मुक्तदेशी. झंपा.

देवीस्तुति. मंगलाचरणपर.

**जय जगज्जननी जय दनुजदलिनी ।। धृ० ।। अंब जगदंब करुणाकिरण-कीरिणी । तुहिनतनुनंदिनी प्रवररमणी ।। १ ।। त्रिपुरसुंदरी शिवे अशिव-संहारिणी । मदनदतितीर्षुणां पुर्णतरणी ।। २ ।। ज्ञानदेवात्मजा याचते मेऽप्युमे । नंदनंदनकरे देहि जननि ।। ३ ।। जय जगज्जननि जय दनुज-दलिनी ।। ४ ।।**

१३५० /२२२९/ तातस्तुति श्लोक.

**सूर्यो भासयते न यश्चितिपदं नानंददश्चंद्रमाः । विद्युद्वाप्यलोऽथवा न पुनरित्येवं किमाभाष्यते ।। तन्मायारहितं तथापि तनयोद्धाराय दृग्गोचरम् । श्रींद्राणीपुलिनेषु खेलनिलयं वंदे महीयो महः ।।**

१३५१ /२२३० / तातस्तुति श्लोक

**अम्बारूपेण यो मे सुखमनुतनुते पाययंस्तन्यमीशः । यस्तातः पाति कृष्णः पतिरतिमपि मे केलिकीर्तिर्बिभर्ति ।। योऽनध्यस्तो' विवर्तः सकरूणहृदयोऽलंदिपीठाधिवासः । सोऽयं श्रीसद्गुरुमे प्रभवतु भवतां भूतये ज्ञाननाथः ।।**

---

१ आचार्यो यः स्ववाचा प्रहरति कुभिदामात्मनोर्मंदवेद्याम् । सोऽलदींद्र कृपालु : प्रभवतु भवतां भूतये ज्ञानदेवः ।। पाठांतरम्.

# नारदीयभक्तिसूत्रभाष्यम्

यत्सत्तया जगत्सत्यं यत्प्रतीतेः प्रतीयते
यदानंदेन सानंदं तं श्रीज्ञानेश्वरं नुमः ॥

भक्त्यावश्यकत्वाधिकरणम्

अथातो भक्तिं व्याख्यास्यामः ॥१॥

अ. भा. भक्तिर्ग्राह्या न वात्र प्रवदति न हि सज्ज्ञानकर्मादिसिद्धेः ।
ग्राह्या यस्मात्प्रसादः शिवपदरजसां तां विना जायते नो ।
सौकर्याद्विघ्नहंत्री प्रपतति न यतः कोऽपि वर्णो महात्मा ।
ब्रह्मज्ञानोपलब्धावपि हरिपरमानंदतायै श्रयेत ॥१॥

इह खलु "यं सर्वे देवा नमन्ति मुमुक्षवो ब्रह्मवादिनश्च । ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति । समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् । आत्मारामाश्च मुनयो निर्ग्रंथा अप्युरुक्रमे । कुर्वंत्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः । मुक्ता अपि लीलया विग्रहं कृत्वा भजन्ते । सत्यपि भेदापगमे नाथ तवाहं न मामकीनस्त्वम् । सामुद्रो हि तरंगः क्वचन समुद्रो न तारंगः" इति श्रुतिस्मृतिभाष्यादिवचनशतेभ्योऽस्ति मुक्तानामपि पंचमपुरुषार्थापन्नाया भगवच्चरणरत्नाकरं संततधारारूपेण समालिंगन्त्या भक्तेरपेक्षा । तयैवैक्या निवृत्तेऽपि निखिलाविद्योपाधौ रसास्वादरूपेण ज्ञानाभिमानरूपेण त्वावशिष्टं बागृणं निवर्तत इति संप्रदायचूडामणिभिः श्रीमत्सद्गुरुज्ञानेश्वराचार्यपूज्यचरणैरुपपादितम् । अतस्तस्याः सलक्षणस्वरूपं भगवन्निर्लोकानुग्रहोपहितचेतनचरणैः श्रीमन्नारदाचार्यैः सूत्रितं तत्प्रज्ञानुसारेण बालः पितरं रंजयन्निवाव्याकृतशब्दैर्विवृणोमि । तत्रेदमादिमं सूत्रमथातो भक्तिं व्याख्यास्याम इति ।

अथेति । "ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कंठं भित्वा विनिर्यातौ तस्मान्मांगलिकावुभाविति" इत्युच्चारणमात्रेणाथशब्दो मंगलरूपः ।

तस्यार्थाश्चारंभाधिकारानंतर्याणि । तस्मादर्थत्वेनारंभाधिकारानंतर्येषु योजनीयः । अधिकारोऽस्या भक्तेः स्वातंत्र्यादन्यसाधननिरपेक्षरूप इति बोध्यः । अत्र हि जाग्रच्छ्रुतिश्च भवति "सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज । अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः" । 'जीर्णभावं गता पुनः संस्थापिता भक्तिर्नारदेनेति पाद्मेतिहासादारंभोऽपि घटते । आनंतर्यं तु पराभक्तिविषयकं "ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति । समः सर्वेषु भूतेषु मद्भक्तिं लभते परामि"ति ज्ञानानंतरमेव पराभक्तिप्राप्तिप्रतिपादनात् । ननु ज्ञानिन उपासनायां न प्रवर्तन्ते कृतकृत्यत्वात् । तथाचोपासना कर्तृबुद्धित्वाज्ज्ञानविरोधिनी भवति । यदपि सूर्यस्य मृगजलमिव मिथ्यात्वादुपासनापि दृढबोधस्य न विरोधिनी तदपि मंदबोधस्य तु भवत्येव विरोधिनी भेदबुद्धिसंभवात् । उपास्यमन्यदहमन्य इति भेदधियैवोपासना भवति । ततः सा सर्वं खल्विदं ब्रह्मेत्यादिज्ञानप्रतिपादिकाभिः श्रुतिभिर्विरुध्यते । अतो मंदज्ञानिभिः सा त्याज्यैव । अथ मन्यसे विक्षेपानिवृत्त्यर्थं मंदज्ञानिभिरपि सा ग्राह्येति चेन्न "आवृत्तिरसकृदुपदेशादि"ति न्यायात्तेषां विक्षेपशांतिर्वेदान्तश्रवणावृत्त्यैव भवति । यस्य तु दृढबोधस्तस्यापेक्षैव नास्तीति प्रतिपादितमाचार्यैरनपेक्षाधिकरणे । अथ लोकसंग्रहार्थं सा ग्राह्येति चेन्न, सा तस्मिन्विधिबोधनेऽसमर्था उच्यते । सत्यमुपासनायां न संभवति ज्ञानिनां प्रवृत्तिस्तस्याः सर्वब्रह्मधीविरोधित्वाद्भक्तिस्तु सर्वब्रह्मबुद्ध्या न विरुध्यते; यतो त्वंपदलक्ष्यात्मप्रेमैव ज्ञानाभिमानपरित्यागेन सर्वभूताधिष्ठाने तत्पदार्थे भगवति समापन्नं सद्भक्तिसंज्ञामाप्नोति । व्युत्थाने ज्ञानिन आत्मप्रेमाभियुक्तो देहाहंकारो भवति । स मा भवत्वित्यपेक्षयैव तस्य सर्वव्यापकस्य भगवतोऽन्वयेन सर्वभूताधिष्ठाने प्रेमविषयिणी मूर्तिर्ज्ञानानंतरमपि न विरुध्यते । अत एव "मुक्ता अपि लीलया विग्रहं कृत्वा भजन्ते" इत्युक्तमाचार्यैः । एवं मंदबोधस्यापि विरोधिनी न भवति भक्तिः सर्वकर्मार्पणरूपत्वात् । प्रारब्धपूर्वको व्यवहारो बहुविधः । तदनुरोधेन सर्वकार्यकरणवेलायां वेदान्तश्रवणं न

संभवति। अस्थिरत्वात्। भगवति कर्मार्पणं तु संभवत्येव "यत्करोषि यदश्नासि यज्जुहोसि ददासि यत्। यत्तपस्यसि कौंतेय तत्कुरुष्व मदर्पणम्"। इति जाग्रच्छ्रुतेः। "यद्यत्कर्म करोमि तत्तदखिलं शंभो तवाराधनम्" "शय्यासनस्थोऽथपथिव्रजन् वा स्वस्थः परिक्षीणवितर्कजालः। संसारबीजक्षयमीक्षमाणः स्यान्नित्यमुक्तोऽमृतभोगभागी" इत्यादिस्मृतिभ्यश्च। योगवासिष्ठाद्याकरेषु जीवन्मुक्तिविवेकादिप्रकरणेषु च व्यवहारसंपादका ज्ञानिनः समाधिनिष्ठाः ब्रह्मविद्वरिष्ठा इत्युपपादितम्। स समाधिरपि भगवत्प्राणिधानेनैव भवतीति शांडिल्यभक्तिशास्त्रपातंजलयोगशास्त्रयोरभिप्रायः। यदपि प्रारब्धानुसारेणैव ज्ञानिनो वर्तंते। येषामधिकभोगदायकं प्रारब्धं तेषामधिकभोगप्रवृत्तिर्भवति। ज्ञानं तु समानमेव। ततो मुक्तिरपि समा। ईश्वरोऽपि न प्रारब्धं हंतुं शक्नोति तेनैव न्यायकृता संकल्पितत्वात्तथापि भक्तिरहितानामेवैष नियमः। अन्यथाऽनीश्वरत्वप्रसंगात्। ज्ञानानंतरं परमेश्वरस्य यथा न्यायकर्तृत्वं स्वीकृतं त्वया तथा दयालुत्वं किं नांगीकुरुषे। तस्माद्भक्तिमतां प्रारब्धाभिभवं कर्तुं शक्नोति परमेश्वरः। नाशस्तु भोगेनैव भवतीति तत्वम्। यदपि "ज्ञानादेव तु कैवल्य"मिति श्रुत्याऽन्यानपेक्षत्वं कृतकृत्यत्वं ज्ञानिनामस्तीति प्रतिपाद्यते तथापि तद्विदेहमुक्तिविषयकम् जीवन्मुक्तिसुखार्थे ज्ञानिनामपि भगवदाराधनयोगापेक्षा त्वस्त्येवेत्याह भगवती श्रुतिः "आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठः"। वक्ष्यंति चाचार्याः "सा तु कर्मज्ञानयोगेभ्योऽप्याधिकतरेति"। अतः शब्दो हेत्वर्थः। व्याख्यास्यामः प्रतिबंधान्दूरीकृत्य प्रकटीकरिष्यामः। तत्र च ज्ञानिनां सा ग्राह्या न वेति संशये कर्मयोगज्ञानैश्चित्तशुद्ध्यैकाग्र्यावरणभंगादिलाभान्नैव ग्राह्येति प्राप्ते ब्रूमः। ज्ञानेऽहंवृत्तिप्रधाने व्युत्थानबाहुल्यदर्शनाद्भगवद्वृत्तिप्रधान आत्मनिवेदने परमानंदानुभवाज्ज्ञानिनामपि भक्तिर्ग्राह्येवेति। यदि ज्ञानिनामपि भक्तिर्ग्राह्या तर्हि कर्माभिमियोगिभिः कर्तृतंत्रवादिभिश्च सा ग्राह्येति किमु वाच्यम्। तथाच शास्त्रम् "नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते

ज्ञानमलं निरंजनम् । कुतः पुनः शश्वदभद्रमीश्वरे न चार्पितं कर्म यदप्यकारणम् ” । इत्येतत्सर्वं बहुषु स्थलेष्वग्रे प्रदर्शयिष्यामः । नन्वनिर्वचनीयं प्रेमस्वरूपमित्यग्रिमसूत्रेण भक्तेरनिर्वाच्यत्वे प्रतिपिपादयिषिते तस्या व्याख्यानप्रतिज्ञा विरुध्यत इति चेत्प्रष्टव्यस्त्वस्माभिः । कोऽयमनिर्वचनीयपदार्थस्त्वयाऽभिमतः । सर्वथा वागगोचररूपो वा सदसद्विलक्षणरूपो वा ? । पक्षद्वयेऽपि नास्मदभिमतोऽर्थः ज्ञातस्त्वयेति ब्रूमः । आद्ये यथाऽनिर्वचनीयं ब्रह्मापि श्रुत्याऽतद्व्यावृत्तिप्रकाश्यमंगीकृतं ब्रह्मविद्भिस्तथा भगवति प्रीतिधारासंतत्यस्थापनरूपः प्रतिबंधः शब्देन निवर्तत इत्यस्माभिरपि स्वीक्रियते । मायायामतिव्याप्तेर्न द्वितीयः पक्षो युक्तः । प्रकृष्टे प्रेम्णि भावोत्कर्षे वचनविस्मृत्यप्रवृत्ती एवानिर्वचनीयपदविषयिण्यावित्यग्रे उपपादयिष्ये ॥१॥

### भक्तिलक्षणाधिकरणम्

### सा त्वस्मिन्परमप्रेमरूपा ॥२॥

अ. मा. सापेक्षा वानपेक्षा भवति परपदेच्छैव सापेक्षरूपा ।
मोक्षः कृष्णो निजात्माऽपि ह न विरहितः प्रीतिरूपाच्च यस्मात् ।
आत्मप्रीतिर्विगर्वा भगवति लभते पूर्णसद्भक्तिसंज्ञाम् ।
तस्मादस्मिन्परेशे द्रुतपरमतमप्रेमतः साऽनपेक्षा ॥ २ ॥

कैवं प्रतिज्ञाता भक्तिः किमधिकरणमित्यत आह । सेति । अस्मिन् अपरोक्षभूते परमेश्वरे । अस्मिन्निति पदेन नित्यपरोक्षपरमेश्वरवादो निरस्तः । स चास्तिभगवद्भक्तिविमुखानामजागलस्तनभूतवेदान्तिनाम् । ते चेत्थं जल्पंति । निखिलब्रह्मांडाधिष्ठानेन दूरत्वात्परमेश्वरो नित्यपरोक्ष एव । अपरोक्षस्तु त्वंपदविशिष्टो जीव इति । दुर्युक्तमेतच्छ्रुतियुक्तिविरोधात् । श्रुतिस्तु बृहदारण्यकेऽतर्यामीप्रतिपादिका “ यो विज्ञाने तिष्ठन्विज्ञानादंतरो यं विज्ञानं न वेद यस्य विज्ञानं शरीरं यो विज्ञानमंतरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ” ( बृ. ३।७।२२ ) न ह्यंतर्यामिणः परिच्छित्तिः कल्पयितुं शक्या तस्य सर्वव्यापकत्वात् । न हि परिच्छित्तिं विना दूरत्वं संभवति तथाऽदृष्टत्वात् । न हि दूरत्वं विना पारोक्ष्यं वक्तुं योग्यम् । न हि दूरत्वविशिष्टमेव पारोक्ष्यं किंत्वावृतमप्यभानादिति चेत्त्वंपदविशिष्टस्य जीवात्मनो लक्ष्यरूपावृतत्वात्तदप्य

परोक्षं न स्यात्। एवमपि चेत् तत्त्वंपदयोः परोक्षज्ञानेनैव मुक्त्यापत्तेः। न ह्यसत्त्वापादकमभानापादकमावरणंच जीवेऽसत्त्वापादकमेवेश्वरेऽतस्तन्निवृत्तय ईशपरोक्षज्ञानमेवापेक्ष्यमित्यपि वक्तुं शक्यम्। परोक्षज्ञानेनासत्त्वापादकावरण-निवृत्त्याऽभानापादकावरणाभावे भगवद्ध्यानभावादपरोक्षतासिद्धेः। नापि भगवत्स्वभाव एव परोक्षत्वम्। परोक्षत्वे जाते औपाधिकत्वात्स्वभावपारोक्ष्या-भ्युपगमेंऽतर्यामित्वासंभवाच्छ्रुतिप्रमाणव्याकोपः। तथा हि जाग्रच्छ्रुतिरपि भवति "उपद्रष्टानुमंता च भर्त्ता भोक्ता महेश्वरः। परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः परः" "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। भ्रामयन् सर्वभूतानि यंत्रारूढानि मायया" "तमेव शरणं गच्छ सर्वभावेन भारत। तत्प्रसादात्परां शांतिं स्थानं प्राप्स्यसि शाश्वतम्"मिति भगवतैव हृद्देशेऽस्मिन्देहे इत्याद्युक्त्या परमेश्वरस्यापरोक्षत्वं वर्णितम्। तमेवापरोक्षमेव शरणं व्रजेत्य-प्याज्ञप्तं च। भगवत्पादा अपि "अनुपपत्तेस्तु न शारीरः" इतिसूत्रभाष्ये एवमेवाहुः। तथाहि भाष्यम् "ब्रह्मैवोक्तेन न्यायेन मनोमयत्वादिगुणं न तु शारीरो जीवो मनोमयत्वादिगुणः। यत्कारणं सत्यसंकल्प आकाशात्मा अवाकी अनादरः ज्यायान् पृथिव्या इति चैवंजातीयका गुणा न शारीर आञ्जस्येनोपपद्यंते। शारीर इति शरीरे भव इत्यर्थः। नन्वीश्वरोऽपि शरीरे भवति। सत्यं शरीरे भवति न तु शरीर एव भवति। ज्यायान्पृथिव्या ज्यायानंतरिक्षात् आकाशवत्स-र्वगतश्च नित्यः इति च व्यापित्वश्रवणात्। जीवस्तु शरीर एव भवति तस्य भोगाधिष्ठानाच्छरीरादन्यत्र वृत्त्यभावात्"। जीववत् सुखदुःखप्राप्तिस्तु 'न तु शरीर एव भवति'इत्यादि भाष्येण परिहृता। अतः परमेश्वरापरोक्षत्वे न काचिदनुपपत्तिः। नाप्यंतर्यामिणि मंजुषादिवदावरणं संभवति। मंजुषादेरि-वावरणस्य देशकृतत्वाद्देशकालयोश्चकल्पितत्वात्पृथिव्याकाशाद्यंतर्यामित्वश्रु-तेश्च। श्रुत्या तत्कृतदेशादिकस्य च कार्यत्वान्नहि कार्यं कारणमावृणोति। दृष्टविरोधात्। नापि जलकार्यरूपो फेनो जलमावृणोतीतिवदीश्वरकार्यमपीश्वर-

मावृणोतीति वक्तुं योग्यम्। परदृष्ट्यैव जडावरणवज्जीवदृष्ट्यैव परेशावृतत्वात्। तथापि गले पतितं ते भगवत्पारोक्ष्यमिति चेन्न। ज्ञानेनावरणविनाशे हृदये भगवन्नदपरोक्षत्वोपलंभात्। तदा जीव एव परेशो भवति किं तत्रेश्वरापरोक्षत्वेनेति चेन्न। ज्ञानिनां व्युत्थाने प्रारब्धभोगादौ प्राप्तवैकल्ये दुःखित्वादीव दर्शनात्। तर्ह्यपरोक्षभगवद्भक्तया किं नैतत्प्रतीयत इति चेच्छृणु। ज्ञानिन्यविद्यालेशः सर्वैर्वेदान्तिभिः स्वीकृतः। स विक्षेपरूप एव नावरणरूपस्तथापि जीवस्य तद्वशवर्तित्वमेव। "मायाबिंबो वशीकृत्य तां स्यात्सर्वज्ञ ईश्वरः" इति स्मृतेः। परमेश्वरस्तु विक्षेपशक्तिमपि वशीकरोति अतस्तद्भक्त्या प्रारब्धाभिभवो वारणनिवृत्तिश्चोपपद्येते। कोऽयमीश्वरो भवन्मते। द्वैतवादिकल्पितो नित्यज्ञानादियुक्तो वा सत्तात्रयवादिकल्पितो मायाप्रतिबिंबो वा सत्ताद्वयवाद्यभिमतो बिंबभूतः शुद्धो वा?। नाद्यस्त्वयाद्वैतसंप्रदायाभ्युपगमात्। न द्वितीयः। ज्ञानेनोपाधिनिवृत्तावाभासनिवृत्तेः। नापि तृतीयः। "जीवेशावाभासेन करोतीति" नृसिंहतापनीयश्रुतिविरोधादिति चेदुच्यते। न ह्यस्मन्मते द्वैतवादिस्वीकृत ईश्वरोऽस्ति। केवलनिमित्तकारणमसावंतवत्त्वमसर्वज्ञता वेत्यादिसूत्रैर्निराकृतः। नापि सत्तात्रयवाद्यभिमतमीश्वरं ब्रूमहे। सिद्धान्तहानेः। परिशेषात्तृतीय एवेश्वरोऽस्माकमस्ति। स च दृष्टिसृष्टिवादिभिर्विवरणानुसारिसत्तात्रयवादिभिश्चांगीकृतः बिंबभूतः शुद्धो वेति निर्धारितः। जीवस्तु तस्याध्यासिक आभासः 'आभास एव चेत्यादि सूत्रात्। "नहि तस्य यो विज्ञाने तिष्ठन् विज्ञानमंतर्यमयतीत्यादिश्रुतिप्रतिपादितं, यत्समाश्रित्य त्वया परमेश्वरापरोक्षत्वं स्थापितं च, तदंतर्यामित्वमेव न संभवति बिंबस्योपाधिबहिर्भूतत्वादुपाधेर्ब्रह्मांडावर्तिव्यापकत्वादित्यपि शंकनीयम्। अस्माभिरवच्छेदवादानंगीकारात्। यद्यप्युपाधिः प्रतिबिंबं पृथगिव करोति तथापि न बिंबप्रतिबिंबयोर्मध्ये तात्विकीं परिच्छित्तिमुत्पादयति। अतः प्रतिबिंबाभासस्य स्वप्रकाशरूपाश्रयभूतत्वे सत्युपाधिबहिःस्पष्टत्वे सत्यपि रासरूपेण साभासोपाधिभासकत्वात्स्वाभासयोः संध्यभावादाभाससन्निहितत्वमनु-

पाधिपक्षपातित्वं च बिंबलक्षणम् । तदंतर्यामित्वेन न विरुध्यते । साभासोपाधि शुद्धमेव भासयत्यतस्तदेवांतर्यामीतिचेदस्तु । दृष्टिसृष्टिवादे शुद्धस्यापीश्वरत्वस्वीकारात् । बिंबभूतस्य शुद्धस्य च सर्वथा भेदाभावात् । कथं तर्हि बिंबभूतत्वं प्रथमं निर्दिष्टम् । उच्यते । प्रतिबिंबापेक्षिकबिंबत्वारोपावच्छिन्नस्य शुद्धत्वावधारणार्थम् । यद्यपि जीवशुद्धयोर्भेदो वाचारंभणमात्र एव तथापि जीवस्तूपाधिसंश्लेषविशिष्ट ईश्वरस्तु तदसंश्लेषविशिष्ट इति बोध्यम् । अतो नोपाधिनिवृत्तावीश्वरस्यापि निवृत्तिः । विवरणकारैरुक्तौ तदभेदस्वीकाराच्च । येषां मते मायाप्रतिबिंब ईश्वरस्तेषांमते मायाविद्याभेदांगीकारेऽविद्याया एव ज्ञानविरोधित्वादीश्वरोपाधिनिवृत्त्यभावः । तदभेदांगीकारे त्वीश्वरेऽप्यावरणसंभवात्सर्वज्ञत्वहानिः । अथ विक्षेपशक्तिप्रधानायामेवाविद्यायां प्रतिबिंबस्य परमेश्वरस्य स्वीकारान्नैतद्युक्तमिति चेन्न । विक्षेपांशस्य ज्ञानाविरोधित्वेऽन्यथा तन्निवृत्त्यसंभवात् । प्रारब्धनिवृत्त्यैव तन्निवृत्तिरस्तीतिचेत्प्रारब्धमेव विक्षेपोत्पादकमिति गले पतितम् । तदा विक्षेपशक्तेः सादित्वात्तदुपहितस्येश्वरस्यापि सादित्वं स्यादनिष्टमेतद्वैदिकानाम् । अतोऽस्मदुक्त एव समीचीनः पक्षः । न हि सावरणं प्रारब्धं विक्षेपोत्पादकमित्यपि वक्तुं शक्यम् । प्रारब्धस्यांतःकरणाद्याश्रयत्वेन विक्षेपस्वरूपत्वात् । न च "तस्य तावदेव चिर" मित्यादिश्रुत्युपपत्यर्थमेनाविद्यालेशांगीकरणं योग्यम् । "यं सर्वे देवा नमंति मुमुक्षवो ब्रह्मवादिनश्चेति" श्रुत्यैव ब्रह्मज्ञानानंतरं भगवद्भक्त्या विक्षेपनिवृत्तिप्रतिपादनादस्मन्मत एव समन्वयः । न च "जीवेशावाभासेन करोती" त्यादिश्रुतिविरोधः । आभासशब्देनाजहल्लक्षणया प्रतिबिंबापेक्षिकबिंबत्वारोपावच्छिन्नस्य बिंबस्यापि ग्रहणात् । नन्वीश्वरस्य नित्यत्वाभ्युपगमे दृष्टिसृष्टिवादहानिरिति चेन्न । अनाद्यतिरिक्तविषय एव दृष्टिसृष्टिस्वीकारात् । नात्र सत्तात्रयवादापत्तिः "यद्यत्प्रातिभासिकं तत्तदेव भ्रांतिवेलायां व्यावहारिकमिति सर्वत्र योज्यमिति" निरंजनभाष्यात् । नहि वासिष्ठपूर्वापरलोचनेनाप्यनादौ दृष्टिसृष्टिः स्वीकर्तुं शक्या । कारणात्मना स्थायित्वस्वीकारात् ।

एवमपि जीवस्य सृष्टिकर्तृत्वाभावे दृष्टिसृष्टिवादहानिरितिचेन्न स्वप्नादिसृष्टावपि श्रीमच्छंकराचार्यैः सामान्यत्वेन प्राज्ञव्यवहारस्वीकारवदस्माभिर्जीव कर्तृत्वाभ्युपगमेऽपि भगवतोऽनुमंतृत्वाभ्युपगमात् । तदनुमंतृत्वं द्विविधम् । जीवयाचनावच्छिन्नं संध्यभावात्स्वाभास कल्याणानुकूल्यावच्छिन्नं च । कल्याणमिष्टमिति सुखेच्छया प्रतीयते जीवे । तत्र च प्रथममनुमंतृत्वं सर्वकर्तृत्वसर्वशक्तिमत्वसर्वज्ञत्वादिशब्दैरुदाह्रियते । द्वितीयमनुमंतृत्वमनुग्रहरूपं वदंति । तत्र प्रथमं जीवकर्मनियामकम् । द्वितीयं तु कल्याणोपायसूचकम् । अनुमंतृत्वद्वयमपि भगवल्लीलैव । न प्रयोजनवती प्रवृत्तिः । "लोकवत्तु लीलाकैवल्य"मिति बादरायणीयन्यायात् । न अत्र सूत्रस्य भाष्ये लीलासंकोचः कुत्रापि प्रतिपादितो भगवत्पूज्यपादैः । प्रत्युत "आप्तकामस्य का स्पृहेत्यादि" श्रुतिभिर्युक्तिभिश्च लीलैव समर्थिता । तर्हि कथं जीवस्य कर्मफलभुक्त्यादि प्रयोजनं सिध्यतीति चेदुच्यते । यथा नृपतिना लीलयोत्सृष्टेन द्रव्येण प्रयोजनवंतो बहवो रंका जीवंति तद्वद्भगवल्लीलयापि जीवः कर्मफलभुक्त्यादि प्रयोजनं साधयति । नहि मिथ्याभासानुमोदनेनैव लीलामिथ्यात्वं शंकनीयम् । बालसमाधानार्थं निर्मिताया मृत्कन्यकाया मिथ्यात्वेऽपि मातुर्लीलासत्यत्वदर्शनात् । नन्वेवं भगवत उन्मत्तवच्चेष्टा स्यादिति चेन्न । नोन्मत्तचेष्टया कस्यापि प्रयोजनं सिध्यति । भगवल्लीलया तु सिध्यत्येव जीवप्रयोजनम् । उन्मत्तचेष्टा पुनर्दुर्गुणान्विता निंदावहा च न तथा हरेर्लीला दोषान्विता । न च लीलयैव जीवसुखदुःखदातरि नैर्घृण्यवैषम्ये स्याताम् । प्रथमाया लीलाया जीवयाचनावच्छिन्नत्वात् । नापि वेदशब्दैर्जीवे भगवतैव प्रेरिता याचनेति वक्तव्यम् । सर्वथा नानुश्राविकाणां पश्वादीनामपि सुखकामनादर्शनात् । याचनाश्रुतयस्त्वनुवादपराः । अथवा कथमाह्वयामि पितरमिति पृष्टवति नंदने तातेत्याह्वयेति मातुरुत्तरवत्ताः वेदितव्याः इष्टसाधनं याचितुमजानंतं जीवं "दुरितानि परासुव" इत्यादिवचनानि भगवतैव कृपयोपदिष्टानि । अस्त्वेवम् । द्वितीयानुग्रहाख्या लीला तु भवत्येवोन्मत्त-

वादिति चेन्न जीवश्रमात्रपरत्वात् । तत्र प्रथमानुमोदनेन मृष्ट्यादीशनशीलत्वं द्वितीयानुमोदनेन तु स्वभक्तिवर्धकत्वमित्युपपन्नम् । स्वभक्तिवर्धनायैव द्वितीयया लीलया भगवच्छरीरोपलब्धिस्तच्च भगवच्छरीरमनध्यस्तविवर्त न ज्ञानेन निवर्तनीयमधिष्ठानाविरोधित्वात्कनककुंडलादिवत्सूर्य-बिम्बाकृतिवच्च । जाग्रच्छ्रुतिरपि भवति " अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् । प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममाययेति " । मायया लीलयेत्यर्थः । अस्याः श्रुतेर्नीलकंठभाष्यं प्रमाणार्थं संगृह्यते । " किं तर्हि योगिनां सर्वज्ञत्वप्रसिद्धेस्त्वं जातिस्मरो जीवोऽसीत्याशंक्याह अज इति । देहान्निकृष्टस्याजत्वाव्ययत्वे " न त्वेवाहं जातु नासमित्यत्र साधिते । इह तु विशिष्टस्यैव ते उच्येते । ईश्वरोऽपीत्यनेन देहान्नि-कृष्टस्यास्मदादेरपीश्वरत्वं " तत्वमसि " " अहं ब्रह्मास्मीत्यादिश्रुतिप्रसिद्ध-मतो देहविशिष्टस्यैवाजत्वानित्यत्वे दृढीक्रियेतेऽन्यथाऽनीश्वरत्वप्रसंगात् । न ह्या-दित्यान्तर्यामिणः परमेश्वरस्य हिरण्यश्मश्रुत्वादिविशिष्टो देहो जन्मव्ययवानिति वक्तुं शक्यमकर्मजत्वात् । कर्मफलस्य हि पराकाष्ठा हैरण्यगर्भशरीरप्राप्तिः । न च " पुरुषो ह वै नारायणोऽकामयत अत्यतिष्ठेयं सर्वाणि भूतानि अहमेवेदं सर्वं स्यामिति स एतं पुरुषमेधं पंचरात्रं क्रतुमपश्यत् " इत्यादिना शतपथे नारायणाख्यस्य परमात्मनः "सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । स भूमिं विश्वतो वृत्वात्यतिष्ठद्दशांगुलम्" इति "पादोऽस्य सर्वा भूतानित्रिपादस्यामृतं दिवि " इति च पुरुषसूक्तप्रतिपाद्यस्य सर्वाणि भूतान्यतिक्रम्य स्थितस्ये-श्वरस्यापि शरीरं पंचरात्राख्यकर्मविशेषफलमिति श्रूयत इति वाच्यम् । तत्र नारायणशब्देन हिरण्यगर्भस्यैव विवक्षितत्वात् । न हि परमेश्वरस्य पूर्णकामस्य सर्वानतिक्रम्य स्थितस्य पुनरत्यतिष्ठेयं सर्वाणि भूतानीति कामना भवति । ननु परमेश्वरेऽपि कामना दृष्टा " सोऽकामयत बहुस्यां प्रजायेय" इति चेच्छ्लाघनीयप्रज्ञो देवानां प्रियः । यत आप्तकामस्य का

स्पृहेति श्रुतेः। लोकवत्तु लीलाकैवल्यमिति न्यायाच्च निस्पृहस्य लीलयैव ब्रह्मांडकोटीः सृजतो भगवतो राजगोपालस्य कर्मकिंकरेण कर्मणा सार्वात्म्यं प्रार्थयता साम्यमापादयति। तस्मान्न कर्मफलं भगवतः शरीरम्। अत एव न भौतिकम्। विराट्सूत्रात्मातिरिक्तस्य भौतिकस्याभावात् तस्माद्युक्तमजोऽपि सन्निति। ननु भगवच्छरीरस्य किमुपादानम्। अविद्येति चेन्न परमेश्वरे तदभावात्। जीवाविद्या चेन्न शुक्तिरजतादेरिव तुच्छत्वापत्तेः। चिन्मात्रं चेन्न। चितः साकारत्वायोगात्। तथात्वे वा तस्यातींद्रियत्वापत्तिः। तस्मात्किमालंबो भगवद्देहो देवकीगर्भप्रवेशजननबाल्यकौमारपौगंडयौवनादि-प्रतीतिविपय इति। चेच्छृणु। प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममाययेति। अयमर्थः- जीवात्मानो ह्यनात्मभूतां प्रकृतिं तेजोबन्नात्मिकां पंचभूतात्मिकां वाधिष्ठाय संभवंति जन्मादींल्लभंते। अहं तु स्वां प्रत्यगनन्यां प्रकृतिं प्रत्यक्चैतन्यमेवेत्यर्थः। तदेवाधिष्ठाय न तूपादानान्तरम्। आत्ममायया स्वीयमायया संभवामि। यथा कश्चिन्मायावी स्वयं स्वस्थानादप्रच्युत-स्वभावोऽप्यदृश्यो भूत्वा स्थूलसूक्ष्मभूतान्यनुपादायैव केवलया मायया द्वितीयं मायाविनं स्वसदृशमेव सूत्रमार्गेण गगनमारोहंतं सृजति, एवमहं कूटस्थ-चिन्मात्रोऽग्राग्रः स्वमायया चिन्मयमात्मनः शरीरं सृजामि तस्य बालाद्य वस्थाश्च सूत्रारोहणवद्दर्शयामि। एतावांस्तु विशेषः। लौकिकमायावी मायामुपसंहरन् द्वितीयं मायाविनमप्युपसंहरति। अहं तु तामनुपसंहरन् स्वविग्रहमपि नोपसंहरामीति। एवं हि सति हिरण्यश्मश्रुवादिलक्षणाविग्रह योगिनश्चैतन्यस्य अंतस्तद्धर्मोपदेशादित्यादिन्यायसिद्धं वियदाद्युपादानत्वलक्षणं सर्वेश्वरत्वं युज्यते नान्यथेति। तस्मात्सिद्धं परमेश्वरस्य मायामयं शरीरं नित्यमिति। एकेनैव देहेन विवस्वंतमुपदिश्य त्वामप्युपादिशामीति। अन्यत्रापि "नित्यैव सा जगन्मूर्तिरिति सावधारणं प्रतिज्ञायते। देवानां कार्यसिद्ध्यर्थमाविर्भवति सा यदा। उत्पन्नेति तदा लोके सा नित्याऽप्यभि-धीयते" इति। नित्याया अप्याविर्भावापेक्षया सूर्यस्येव बाल्यादिक-

मुत्पत्त्याद्युपगम्यते । नैतच्छरीरं कर्मजन्यम् "त्वं जातो भवसि विश्वतो मुखः" इति श्रुतिविरोधात् । नन्वस्मदादीनामिव व्यक्तिमत्वादवयविरूपं पांचभौतिकं तच्छरीरमिति चेन्न " अवयवानामानवस्थ्यादुभयथापि दोषादिति सूत्राच्च भूतानां जडत्वे कथं शरीरारंभसामर्थ्यम् । माययैवेति चेत्तस्या अपि जडत्वमभ्युपगतमस्ति सर्वैः । ईश्वराधिष्ठिततयैवेति चेत् । किमीश्वरो जगदुपादाने स्वतंत्रोऽभ्युपगतस्त्वयाऽहोस्वित्परतंत्रः । द्वितीये जीवत्वापत्तिः । आद्ये इष्टापत्तिः । स वशी लीलया कथं साकारो भवितुं नार्हति । कर्मजन्य-शरीरे कर्मार्पणेन कर्मनिर्हाराऽसंभवात् श्रुतौ स्मृतौ च शरीरवति भगवति कर्मार्पणाविधिबोधनात् न क्षेतद्कर्मत्वच्छरीरं कर्मजन्यम् । तर्ह्यस्तु त्रिगुणा-त्मकमायाजन्यं भाष्योक्तेरिति चेन्न । त्रिगुणात्मकमायाजन्यत्वे भगवत्यावरण-संभवात् । भाष्य हि तुष्यतु दुर्जन इति न्यायेन परदृष्टिविषयम् । तर्हि भवतु शुद्धसात्विकमायाजन्यमिति चेत् किं भगवता शुद्धसात्विकमाया पारतंत्र्येण तच्छरीरं गृहीतमाहोस्वित्स्वातंत्र्येण । नाद्यः; उपर्युक्तदोषप्रसंगात् द्वितीये लीलैव ते गले पतिता । लीलयैवास्तु शरीरं किं मध्ये शुद्धसत्वग्रहणेन । अथ न हि भगवतीच्छा दृश्यते मनसोऽभावादिच्छां विना शरीरग्रहणं चाशक्यमिति चेत्कथं तव मतेऽपीच्छां विना भगवान् सृष्टिमुत्पादयति । ईक्षणादिति चेदस्मन्मतेऽपि प्रथमया लीलया सृष्टेरीक्षणं द्वितीयया लीलया च शरीरग्रहणमिति वक्तुं शक्यते । तथा चोक्तं ब्रह्मणा भागवते गर्भस्तुतौ "अस्यापि देव वपुषो मदनुग्रहस्य स्वेच्छामयस्य न तु भूतमयस्य कोऽपि । नेशे महित्ववसितुं मनसांतरेण साक्षात्तवैव किमुतात्म सुखानुभूतेः ( भाग. स्कं १० अ-श्लो-) अत्र मदनुग्रहस्येत्येकवचनं मुख्यजीवानुग्रहाभिप्रायम् । अनुग्रह एव शरीरं सैव स्वेच्छा । "न तु भूतमयस्येति" कार्यत्वेन कर्मजन्यत्वं भूतकार्यत्वेन मायाजन्यत्वमित्यपास्तम् । अतिरोहितार्थमन्यत् । किमेवं तव भगवदाकारस्वीकार आग्रहः । तवापि किं

तस्य निराकारस्वीकार आग्रहः। तस्य सर्वव्यापकत्वाच्छरीरस्य चैकदेशित्वादिति चेदेकदेशित्वदूषणे किं दूषितं त्वया। एकदेशोपाधिरुतैकदेशोपहितचैतन्यम्। आद्ये सर्वव्यापकस्यापि सर्वदेशावच्छिन्नत्वादेकदेशदूषकस्त्वं सर्वदेशोपाधिं किमर्थमंगीकुरुषे। एकदेशोपहितचैतन्यमेव दूषयसि चेत् सर्वदेशोपहितचैतन्यमपि दूषय। देशस्य मायामात्रत्वात्तद्बाधे एकदेशित्वं व्याहृतं चेत्तद्बाधे सर्वदेशित्वमपि कुतो न व्याहृतम्। निराकारोपलब्धिर्ज्ञानेनेति चेत्साकारस्याप्युपलब्धिर्ज्ञानेनैवास्ति। नापि भगवच्छरीरबाधः शंक्यः। तस्यानध्यस्ताविवर्तत्वात्। ननु का तच्छरीरसत्ता। पारमार्थिकी प्रातिभासिकी वा। आद्ये द्वैतापत्तिर्द्वितीये बाधापत्तिः। उभयमप्यनिष्टमेवेति चेदुच्यते। प्रतिभासानुमोदनावच्छिन्ना पारमार्थिकी सत्ता। किं तव चित्रं भासते। जीवस्याप्येवं पारमार्थिकी सत्ता प्रतिपादिता विवरणकारैः प्रतिबिंबदृष्टान्तेन। प्रतिबिंबं न हि छाया भवितुमर्हति। तल्लक्षणाभावात्। यस्यां दिशि पुरुषमुखादिकं तस्यां दिश्येव छायामुखादिकमनुभूतं लोके। प्रतिबिंबस्य मुखादिकं तु तद्विपरीतमिति। नाप्यनिर्वचनीयमुखान्तरोत्पत्तिः। सजातीयत्वदर्शनात्। नाप्यालोकावर्तनमालोकस्य मुखदर्पणप्रतिबिंबेषु सामान्यत्वात्। नेत्रांतरवर्तित्वेऽपि त्वन्मुखमिति व्यवहारासंभवेन प्रतिबिंबाप्रतीत्यापातात्। किं तर्हि प्रतिबिंबं नाम। शृणु। चक्षुर्द्वारा निर्गतांतःकरणवृत्तिश्चक्षुषोरधिदैवतालोकसहकारेण दर्पणं विषयीकृत्य दर्पणाभिहता दर्पणपराङ्मुखीभूय शीघ्रमेव ग्रीवास्थं मुखं विषयीकरोति। तदेव प्रतिबिंबम्। तन्मुखाभिन्नत्वात्सत्यमेव। मदीयमिदंमुखमितिप्रत्यभिज्ञादर्शनात्। प्रतिबिंबत्वस्य न्यूनसत्ताकत्वमुपाधेस्तत्पक्षपातित्वाद्बोध्यम्। प्रतिबिंबत्वधर्म एवोपाधिकल्पितः। बिंबत्वधर्मारोपस्तु प्रतिबिंबापेक्षिकः। न प्रतिबिंबं बिंबं वा कल्पितमेवं दार्ष्टान्तेऽपि मायोपाधौ न चेतनस्य छाया भवितुमर्हति। न वानिर्वचनीयाऽऽभासोत्पत्तिश्चेतनस्योत्पत्तेरसंभवात्। उत्पत्त्यसंभवादित्यधि-

करणे भाष्यकृद्भिर्जीवोत्पत्तेरपि निराकरणात्पूर्वोक्तन्यायेन मायावशात् ब्रह्मप्रतिबिंब एव जीवः। तस्यापि पारमार्थिक्येव सत्ता। कुतस्तर्हि बिंबभूतस्य परमेश्वरस्य लीलासाकारस्यापि सा न भवेत्। ननु नोपाधिसत्यता विना प्रतिबिंबस्थितिरिति चेन्न स्वाप्निकमुखस्य स्वाप्निकदर्पणेऽपि प्रतिबिंबसंभवात्। न तत्राप्युपाधिसमसत्ताकत्वं शंकनीयम्। ऐंद्रजालिके दर्पणेऽपि स्वमुखप्रतिबिंबसंभवात्। कुतस्तर्हि भक्तिपदतीर्थामृते प्रतिबिंबवादं प्रतिक्षिप्याभासवाद एव क्रोडीकृतः। शृणु। आभासवादेनापि भक्तिर्वक्तुं शक्यत इति प्रौढिद्योतनायैव। किंतु प्रतिबिंबवादेनैव जीवपारमार्थिकसत्तावत्समीचीनतया भगवच्छरीरस्य पारमार्थिकी सत्ता निर्धारयितुं शक्यते। नापि द्वैतापत्तिः लक्षणे विवर्तपदनिवेशनात्। नापि प्रतिभासापत्तिरनध्यस्तपदनिवेशनात्। अनध्यस्तविवर्तपदलक्षणं तु बहुषु ग्रंथेषु निष्पादितमस्माभिः। नापि जीवाविद्यानिवृत्तौ भगवच्छरीरानिवृत्तिः। ज्ञानस्यावरणनिवर्तकत्वाद्भगवच्छरीर आवरणाभावात्। न तच्छरीरं कर्मजन्यमिति भाष्यकारादिभिरप्युपपादितम्। भगवच्छरीरं मायाजन्यं स्याच्चेदवश्यं ज्ञाननिवर्त्यं भवेत्। परं चार्जुनस्य ज्ञाने जातेऽपि श्रीकृष्णशरीरसत्वदर्शनात्सिद्धमेव तच्छरीरमनध्यस्तविवर्तम्। कनककुंडलादिवत्। ननु तर्हि घटादीनामप्यनध्यस्तविवर्तत्वं स्यात्सत्यम्। मृत्तिकादृष्ट्या घटादीनामप्यनध्यस्तविवर्तत्वम्। ब्रह्मदृष्ट्या तु तेषामविद्यावत्वाद्युगपदुत्पत्तेश्चाध्यस्तविवर्तत्वमेव। तथादर्शनात् "ज्ञानज्ञेयप्रभेदेन यथा स्वप्नं प्रतीयते" इति वाक्याच्च। श्रीकृष्णशरीरं तु ब्रह्मदृष्ट्याप्यनध्यस्तविवर्तमेव। न मायाकार्यम्। शुद्धसत्वमायाया रजोगुणं विना कार्यप्रवृत्त्यसंभवात्। तमोगुणं विना नियमनाभावाच्च। तथाभ्युपगमे मलिनसत्वाभ्युपगमेन भूतकार्यत्वापत्तिः। नापि विक्षेपशक्त्याख्यमायाकार्यं भगवच्छरीरं, तस्य प्रारब्धावष्टंभं विना स्थातुमशक्यत्वात्। नन्वस्तु तर्हि प्रारब्धावष्टब्धविक्षेपकार्यं भगवच्छरीरं मायाकार्यमिति चेन्न। भगवतः स्वप्रारब्धांगीकारे जीवत्वापत्तेः। सर्वथा परप्रारब्धजन्यत्वांगीकारे घटादिभोग्यवज्जडत्वापत्तेश्च।

नापि स्त्र्यादिसचेतनभोग्यत्वात्परप्रारब्धजन्यमिति वाच्यम्। स्त्र्यादीनामपि स्वप्रारब्धेन पत्युर्भोग्यत्वदर्शनात्। यथा स्त्रीप्रारब्धेन पतिर्भोग्यस्तथा पत्युः प्रारब्धेन स्त्र्यपि भोग्या। भोगस्तु भोक्तृचेतनस्यैवोभयशरीरास्थितस्य। न तद्वत्परमेश्वरो भोक्ता कर्मलेपाभावात्। अन्यथा सुखिदुःखित्वादिप्रसक्त्या जीवत्वापत्तेश्च। तस्मान्न परप्रारब्धजन्यं भगवच्छरीरम्। नापि केवलजीव-भावनाजन्यं स्वप्नवत्तुच्छत्वापत्तेर्जागरेऽप्रतीत्यापत्तेश्च। तस्माज्ज्ञाते तत्वेऽप्यर्जुनाय यच्छरीरस्य प्रतीतिस्तद्भगवच्छरीरमनध्यस्ताविवर्तमेव परिशेषाद-वगंतव्यम्। न तत्र दृष्टिसृष्टिस्वीकारः। प्रमाणेन तन्नित्यत्वावगमात्। प्रमाणं तु श्रुतिरेव त्रिपाद्महानारायणोपनिषदि पूर्वकांडे द्वितीयाध्याये। "साकारो द्विविधः सोपाधिको निरुपाधिकश्च। समस्ताविद्योपाधिसाकारः सावयवः। सावयवत्वादवश्यमानित्यं भवत्येव" एवं ब्रह्मदृष्ट्याऽध्यस्तावि-वर्तस्य साकारस्यानित्यत्वं प्रतिपाद्य विद्यावृत्त्या निरुपाधिकसाकारमाह। "निरुपाधिकसाकारस्त्रिविधः। ब्रह्मविद्यासाकार आनंदसाकार उभयात्मकसा-कारश्चेति"। अयमाशयः – निरुपाधिब्रह्मज्ञानेऽप्रतिबंधकत्वात्सहायकत्वाच्चा-युर्घृतमित्यादिवत् विद्योपहितसाकारोऽपि निरुपाधिक एव। अनध्यस्ताविवर्त इत्यर्थः। ज्ञाते तत्वेऽपि ज्ञानानंतरं विद्वदंतःकरणे यो ध्यानरूपो भगवदाकारः स ब्रह्मविद्यासाकारः। ब्रह्मविद्वृत्तेर्विद्यारूपत्वाद्यद्यपि तस्य विषयपरा वृत्तिरविद्याकार्यं तदपि भगवत्परा वृत्तिर्विद्याकार्यमेव। विद्याफलजीवन्मुक्त्य-विरोधात्। यस्तु नित्योऽप्यनध्यस्तविवर्तो भक्त्या यावदाविर्भावं तिरोहितो लीलाविग्रहः स आनंदसाकारः। प्रबलतरप्रेम्णा स एव ध्यानेन सदनीकृतः हृदयानवच्छिन्नो यदाविर्भवति, तदा ह्युभयात्मकसाकारो ज्ञेयः यथाहुस्तात-चरणाः "ऐसे जे मत्पर। उपासिती निरंतर। ध्यानमिषें घर। माझें झाले" (ज्ञा. अ. १२ ओ. ८०) अयं भावः – ज्ञाते तत्वे ब्रह्मविद्यासाकारो भक्तौ प्रवेशयति आनंदसाकारस्तु परप्रेमदानार्थं विरहं वर्धयति। उभया-त्मकसाकारस्त्वत्युत्कटप्रेम्णाविर्भूय योगेऽपि वियोगोपलालनं परिचाययति।

यथोक्तं राधासुधानिधौ "अंकस्थितेऽपि दयिते कमपि प्रलापं हा मोहनेति वचसा विदधत्यकस्मात् । श्यामानुरागमदविह्वलमोहनांगी श्यामामणिर्जयति कापि निकुंजसीम्नि" । अथवा "आनंदो विषयानुभवो नित्यत्वं चेति संति धर्मा ब्रह्मणो ह्यपृथक्त्वे पृथगिवावभासंते" इति पंचपादिकाकृदुक्तेर्विद्यात्मत्वया सच्चिदंशयोः पृथगिव भाने ब्रह्मविद्यासाकारः । आनंदांशस्य पृथगिव भाने आनंदसाकारः । उभयस्याप्यैकभिवनादनध्यस्तविवर्तः श्रीकृष्णो ह्युभयात्मकसाकारः । अत्रायमाशयः—विद्वान् व्युत्थाने विशेषेण सच्चिद्रूपं ब्रह्मानुसंधत्ते । तस्मिन् सत्ताज्ञानयोरेव विशेषाभिव्यक्तिदर्शनात् तदैवायं विश्वस्य सच्चिद्रूपेण ब्रह्मविद्यासाकारत्वमनुभवति । समाधौ सर्ववृत्तिनिरोधादानंदस्य प्राधान्येन पृथगिव भाने आनंदसाकारत्वमनुभवति । भक्तौ तु श्रीआलिंगनादिरूपेण व्युत्थाने प्रेमैकतानवृत्तिरूपेण समाधिस्तत्र श्रीकृष्णसाक्षात्कारादुभयात्मकसाकारत्वमनुभवति । एवमपि दर्शयति श्रुतिस्तत्रैव । "विद्याप्राधान्येन विद्यासाकारः । आनंदप्राधान्येनानंदसाकारः । उभयप्राधान्येनोभयात्मकसाकारश्चेति । अस्य त्रिविधस्यापि साकारस्य पुनर्द्विविधत्वमाह श्रुतिः । "त्रिविधसाकारोऽपि पुनर्द्विविधो भवति । नित्यसाकारो मुक्तसाकारश्चेति" । मुक्तसाकारोपपत्तिमग्रे वक्ष्यामः । नित्यसाकारश्रुतिरुदाह्रियते । "नित्य साकारस्त्वाद्यंतशून्यः शाश्वतः" । नायमारब्धः भूतकार्यत्वाभावात् नापि परिणामः प्रकृतिकार्यत्वाभावात् । नाप्यध्यस्तविवर्तः मायाकार्यत्वानभ्युपगमात् । तस्मादवयवेभ्योऽनारभ्यमाणत्वात् ब्रह्मण एव करचरणादिरूपत्वान्निरवयव एव । तदेवाह श्रुतिः "तस्मादेव निरुपाधिकसाकारस्य निरवयवत्वात् स्वाधिकमपि दूरतो निरस्तमेव" । अपरा श्रुतिरपि "विश्वतश्चक्षुरुत विश्वतो मुख" इति । जाग्रच्छ्रुतिरपि "सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखं । सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठतीति । अत एव पादचुंबनेन मुखचुंबनानंदमनुभवंति भागवताः । अत्रेदं चोद्यम् । "परब्रह्मणः परमार्थतः साकारनिराकारौ स्वभावसिद्धौ" । का वाभ्युपगतस्य नित्यसाकारस्य सत्ता ? ।

पारमार्थिकी व्यावहारिकी प्रातिभासिकी वा। आद्ये सव ब्रह्म साकारं किंचिद्वा। नाद्यः साकारोपाधौ परित्यक्ते जीवेन तदैक्यमनुभवितुमशक्यत्वात्। तत्प्रतिपादकश्रुतीनां च निराकारश्रुतीनांच व्याकोपात्। नापि द्वितीयः व्यापकस्योपाधिं विना किंचित्वं कल्पयितुमशक्यत्वात्। उपाध्यंगीकारेऽत्रैवोद्धृतनिरुपाधिकसाकारश्रुतेर्व्याकोपः। एवं द्वितीयोऽपि पक्षो न घटते। त्वया सत्ताद्वयवादांगीकारात् भगवच्छरीरस्य प्रारब्धकार्यत्वानंगीकाराच्च। नापि तृतीयः। अनंतरोक्तदोषापातात् स्वाप्नवस्तुच्छत्वापत्तेश्च। हंत तर्हि श्रुतिरेव मिथ्या वक्तीति कल्पय। नैवं कल्पयामोऽस्माभिः श्रुतेः स्वतः प्रामाण्याभ्युपगमात्। किंतूक्तार्थानां गतिमेवैवं चिंतयामः। यथाहि प्रकाशात्मयत्युक्ते बिंबप्रातिबिंबवादे बिंबत्वप्रतिबिंबत्वधर्मयोर्मिथ्यात्वाभ्युपगमेऽपि बिंबप्रतिबिंबयोः स्वरूपं सत्यामित्युपगच्छंति तद्विदस्तद्वद्वयमपि उपाधिमिथ्यात्वाभ्युपगमेन तदुपहितस्य विद्यावच्छिन्नस्य वा साकारस्य सत्यत्वमभ्युपगच्छामः। तस्मात्प्रतिभासावच्छिन्नपारमार्थिक्यस्य सत्ता। न तु सर्वथा प्रातिभासिकी अनध्यस्तत्वात्। नापि सर्वथा पारमार्थिकी विवर्तत्वात्। नाप्यनित्यतापत्तिः। संसारस्यानाद्यनंतत्वात्तत्र प्रतिबिंबापेक्षया बिंबभूतस्यापि यावत्संसारस्तावत्स्वीकारात्। अत एव परमार्थशब्दो गौण उक्तः। न श्रुत्यर्थ उपबृंहणं विना स्वतश्चिंतनीयः। "इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्। बिभेत्यल्पश्रुताद्वेदो मामयंप्रहरिष्यतीति स्मृतौ" तत्प्रतिषेधात्। तस्माच्छ्रुत्युपबृंहणमप्युदाहर्तव्यमिति चेच्छृणु। "घृतकाठिण्यवद्विप्राः केवलं कृपयैव तु। आविर्भूतं महानंदं तांडवं करुणात्मम् (स्कंद पुराण) अन्यत्रापि "न कार्यत्वादनित्योऽयं नंदनंदनविग्रहः। उपचाराद्धि कार्यत्वं तत्र पौराणिका जगुरिति। अत्रोपपत्तिं वदति दैवज्ञपंडितसूर्यः परमार्थप्रपायाम् "चिदानंदमात्ररूपस्य ब्रह्मणोऽहं प्रतिष्ठा प्रतिमा घनीभावः। यथा घनीभूतं तेज एव सूर्याकारं भवति यथा च घनीभूतः परिमल एव कर्पूराकारो भवति

तद्वादित्यर्थः" तस्मात्प्रतिभासावच्छिन्ना परमार्थसत्तैवास्यांगीकर्तव्या। नाप्यवच्छेदकमिथ्यात्वेनावच्छिन्नमिथ्यात्वमितिवाच्यम्। मृगांब्ववच्छिन्नभूसत्तासत्यत्वदृष्टान्तोपपत्तेः। नाप्यवच्छेदकप्रतिभासनिवृत्त्या तदवच्छिन्नस्यापि निवृत्तिः। यावदनंतवद्धजीवाभासप्रतिभासानंत्येन तदवच्छिन्नस्य परमार्थसत्ताकानध्यस्तविवर्तस्य नित्यत्वमभ्युपगंतुं सुशक्यत्वात्। एवं प्रतिबिंबपक्षपात्यविद्योपाध्यापादितस्य विद्यारूपबिंबत्वावच्छिन्नबिंबभूतस्य परमेश्वरसंज्ञस्य शुद्धचैतन्यस्यैव पंचपादिकोक्तन्यायेन सज्ञानप्रेमवृत्त्या यत्पृथगिवावभासनं तदेवानध्यस्तविवर्तं भगवच्छरीररूपं सत् क्रीडायां शरीररूपत्वेनाऽनुभूयते जीवन्मुक्तौ। परमार्थतस्तु सर्वं ब्रह्मैवेत्यपि दर्शयति श्रुतिः। "प्राधान्येन भेद एव वस्तुतस्त्वभेद एव" इति। अतोऽनध्यस्तविवर्तः परमेश्वरविग्रहः सेव्यः। अथ जीवो नावच्छेदः। उपाधिगमनागमनेन शुद्धस्यापि बंधनसंभवात्। नाप्याभासः। उत्पत्त्यसंभवादित्यधिकरणविरोधात्। नापि प्रतिबिंबमुपाधेर्विषमसत्ताकत्वात्किंतु ब्रह्मैवाविद्यया संसरतीति वाक्यादाध्यासिक एव जीवः। तस्य गमनागमनादिकमप्येकस्मिन्नेव स्थाने न लोकांतरे इति सत्ताद्वयसिद्धान्तः। तत्र नेश्वरलाभ इति चेन्न। संक्षेपशारीरकसिद्धान्ताभ्युपगमात्सिद्धान्तबिंदूक्तमुख्यासिद्धान्ताभ्युपगमाद्वा सत्ताद्वयेऽपीश्वर उपलभ्यते। जीवाधिष्ठानमीश्वरो विशेषचेतनत्वात्। शुद्धं वेश्वरस्तस्यैव वक्ष्यमाणपरमप्रेमास्पदत्वात् तच्छरीरमपि न्यायमकरंदोक्तपंचमप्रकारकमुक्तिवत्पंचमप्रकारकमभ्युपगंतव्यम्। न तदप्रसिद्धं भक्तानुभवात्। नापि तन्मायाकार्यं कार्यत्वे हि भौतिकत्वसंभवात्। नापि कारणमायारूपं सर्वथाऽगोचरत्वापत्तेः। अगोचरत्वे भक्तानुभवापलापदोपसंभवाच्च बहुश उपपादितमस्माभिः प्रेमनिकुंजे। तच्छरीरमादौ भक्तहृदय एवाविर्भवति। "भगवानपि विश्वात्मा भक्तानामभयंकरः। आविवेशांशभागेन मन आनकदुंदुभेः" "जीवानामिव न धातुसंबंध इत्यर्थः" इति श्रीमद्भागवततट्टीकाभ्यामवगम्यते भक्तिरसायनेऽपि "भगवान् परमानंदःस्वरूपः स्वयमेव हि। मनोगतस्तदाकारः किमन्यदवशिष्यते" इति श्रीमन्मधु-

सूदनाचार्यैः "मुक्ता अपि लीलया विग्रहं कृत्वा भजंते" इत्याचार्यैरप्यभिप्रायो दर्शितः। न तच्छरीरं वैकुंठादिलोकस्थं परोक्षमिति मंतव्यम्। वैकुंठादिलोकेऽपि भक्तार्थमेवैतत् प्रकटनमैतिह्यप्रामाण्यात्। अतोऽतर्यामितया तत्पदार्थपरमेश्वरस्यापरोक्षत्वेन तच्छरीरमनन्यस्तविवर्तं भक्तानुभवगम्यमपरोक्षमेवेतीदंपदस्य विषयः। अतः सुष्ठूक्तं सूत्रकारैर्भक्त्यधिकरणाविवक्षयाऽस्मिन्निति। का सा भक्तिः किं तल्लक्षणं तत्राह। परमप्रेमरूपेति। ननु परमप्रेमास्पद आत्मैव तदपेक्षया परमेश्वरप्रीतिरपि गौणी "न वा अरे देवानां कामाय देवाः प्रिया भवंति आत्मनस्तु कामाय देवाः प्रिया भवंतीति श्रुतेः। आत्मा तु ज्ञानेनाधिगम्यस्तस्माज्ज्ञानमात्रमेव भक्तिरितीमं पूर्वपक्षं व्यावर्तयति तु शब्दः। श्रुतौ देवा इति बहुवचनप्रयोगात् परमेश्वरभिन्नदेवतांतरप्रीतिरेव गौणी बोध्या। यत्तु श्रुत्याऽत्मनः परमप्रेमास्पदत्वं दर्शितं तदपि न जीवरूपेण। जीवस्याध्यासिकत्वात्। किंतु पारमेश्वररूपमेव जीवस्य स्वाभाविकं रूपम्। तदेव परमप्रेमास्पदम्। तदैक्येन हि निर्मलपरमानंदप्राप्तिरिति विवरणकृदुक्त्यभिप्रायात् ज्ञानेनाविद्याकार्याभिमानं परित्यज्य जीवाभिमानं ज्ञानाभिमानं च भगवत्प्रेम्णा परित्यज्यैक्येनान्वयेन साकारपरमेश्वरस्य परमप्रेमरूपां "शिवो भूत्वा शिवं यजेदिति" श्रुतिसिद्धां भक्तिमेव जीवन्मुक्तौ समाश्रयेदिति सिद्धान्तः।

## अमृतस्वरूपा च ॥ २ ॥

तन्नित्यत्वं साधयति। अमृतस्वरूपा चेति। किं मुक्तिर्भक्तेः फलं स्वरूपं वा। फलमेव मुक्तिर्भक्तेर्भवितुमर्हति "भक्तिर्मोक्षप्रदायिनी"ति वचनात्। मैवं मंस्थाः। परमानंदप्राप्तिरेव मुक्तिः। परमानंदभेदस्तु वस्तुतो नैव कल्पयितुं शक्यः। मत्सहजास्थितिरेव भक्तिरिति तातोक्तेः। भक्तिर्मोक्षप्रदायिनीति वचनं तु गौणीभक्ति प्रतिपादकम्। गौण्या समाधिसिद्धिरिति शांडिल्यसूत्रात्। एवमीश्वरोपासनाफलं योगमिति प्रतिपादकमीश्वरप्रणिधानाद्वेति पातंजलसूत्रमपि गौणीभक्तिपरमेव।

नन्वीश्वरप्रणिधानं तस्मिन्परमगुरौ सर्वकर्मार्पणमित्युक्तं भाष्यकृता साधनपादे। तथैवेश्वरप्रणिधानेन समाधिर्भवतीति "समाधिसिद्धिरीश्वरप्रणिधानादि"ति तत्रैवोक्तं सूत्रकारैः। त्वमपि "तदर्पिताखिलाचारे"त्यादि सूत्रपदैर्भगवति कर्मार्पणरूपां पराभक्तिं प्रतिपादयिष्यसि। तर्हि परयैव भक्त्या समाधिसिद्धिरिति किमर्थं न ब्रूषे। सत्यम्। यथा सर्वाचारार्पणं भक्तिलक्षणं प्रतिपादयिष्यामस्तथा तद्विस्मरणे परमव्याकुलत्वमपि भक्तिलक्षणं प्रतिपादयिष्यामो वयम्। गौण्यां परायां तु यद्यप्यस्ति समानं सर्वकर्मार्पणं तदपि गौण्यां पूर्णत्वावाप्तिफलार्थतया व्याकुलीभूतत्वम्। परायां तु भगवदर्थव्याकुलीभूतत्वमिति विशेषः। तस्माद्गौण्यैव भवति समाधिसिद्धिरिति युक्तमुत्पश्यामः। नापि भगवदेकतानतावृत्तौ सत्यां योगफलमवशिष्यते। नापि "यस्य देवे पराभक्ति र्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशंते महात्मन" इति श्रुत्या पराभक्तिफलमेव ज्ञानमिति वक्तुं शक्यं। ज्ञानिनामपि भगवद्भजनविधानश्रुतेः। श्रुतिस्तु "यं सर्वे देवा नमंति मुमुक्षवो ब्रह्मवादिनश्चे"ति। जाग्रच्छ्रुतिरप्येतदेवार्थं द्योतयति "ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति। समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्" इति। न ह्यस्या भक्तेरनित्यत्वं मनसाऽप्याक्षेप्तुं शक्यम्। तस्या असाध्यत्वात्। अनित्यत्वं च कालापेक्षया ज्ञायते। कालस्त्वविद्याकार्यमथाऽदेवाविद्यानिवृत्तौ तन्निवृत्तिः। अविद्यानिवृत्तौ यदवशिष्यते तन्नित्यमेव कालासंश्लेषात्। भक्तिस्त्वविद्यानिवृत्तावप्यवशिष्यत इत्यसकृच्चोपपादितमुपपादयिष्ये। किं तर्हि विदेहमुक्तावपि भक्तिरस्त्येव। शृणु। एतद्वाक्यपाटवं तावत्प्रश्नकोटिमेव प्रवेष्टुं नेष्टे। अद्यावधि त्वयि विदेहमुक्तेरज्ञानात्। का वा विदेहमुक्तिस्तवाऽभिमता। जीवन्मुक्तिरेव प्रारब्धनिवृत्तौ विदेहसंज्ञामापद्यत इति चेज्जीवन्मुक्तौ स्थिताभक्तिरपि विदेहमुक्तौ स्थियत इति किन्न वक्तुं शक्यते। नापि विदेहमुक्तिस्त्वयाऽद्यापि दृष्टा। त्वयि प्रश्नप्रवृत्तिदर्शनात् विदेहमुक्तौ प्रश्नोत्तरादीनामभावाच्च। विदेहमुक्तौ किं ब्रह्मबाधो भवति। न तस्य चेतनत्वादिति ब्रवीपि चेत्तर्ह्यानंदस्वरूपाया

भक्तेरपि तत्र बाधो न भवतीति किमर्थं न ब्रवीषि । अतो यस्मादानंद एव मुख्यप्रयोजनम् । स च प्रेमस्वरूपस्तस्मान्मुक्तिस्वरूपैव भक्तिरिति सिद्धम् ।

भक्तिवस्तुतंत्रत्वाधिकरणम् ।

**यल्लब्ध्वा पुमान् सिद्धो भवत्यमृतो भवति तृप्तो भवति ॥ ४ ॥**

अ. मा. स्वतो वा परतः शक्ता भक्तिः परत एव च ।
जन्मांतरीयसंस्कारवैराग्यादेरपेक्षणात् ॥
ज्ञानवैराग्यनामानौ भगवद्भक्तिनंदनौ ।
प्रेम्णश्च वस्तुतंत्रत्वात्समर्था स्वत एव सा ॥

आस्त्वियं फलरूपा भक्तिः । किंतु स्वत एवाविर्भावितुं समर्थाऽहोस्वित्परतः । तत्र तावत्प्राप्तमन्यसामर्थ्यसहकारेणैव साऽविर्भवितुमर्हति । अपेक्षाश्रवणात् । वदंति च बहवो बहुजन्मपुण्यनिचयेन भगवति रतिरुत्पद्यत इति । "बहूनां जन्मनामंते ज्ञानवान् मां प्रपद्यते" । इदं भगवद्वचनमपि भक्त्याविर्भावे ज्ञानापेक्षां बोधयति । अत्रोच्यते । वस्तुन आविर्भावे प्रतिबंधापहननं विनाऽन्यापेक्षा न दृश्यते । तत्प्रतिबंधापहननं तु भवतु ज्ञानेन परं च यथा जडपदार्थः प्रभाप्रकाश्यस्तथा भक्तिरपि ज्ञानप्रकाश्येति वक्तुं न शक्यते । चिदानंदयोरेकरूपत्वात् । आनंदप्राप्तौ ज्ञानाभिमानक्षयदर्शनाच्च । तथा च शांडिल्यसूत्रम् "तयोपक्षयाच्च" इति । ज्ञानेनाविद्यारूपप्रतिबंधविनाशे भक्तिः स्वयमेवाविर्भवितुं शक्ता । यदपि विषयानंदस्य ब्रह्मानंदरूपत्वात्प्रतिबंध एव नास्ति भक्तौ तथापि विषयाणामनित्यत्वमेव प्रेमधाराप्रतिबंधः । सोऽविद्यामाहिम्ना प्रतीयते । तस्य नाशस्तु विज्ञानेन यदा भवति तदैव नित्यपरमानंदेऽनध्यस्तविवर्तेऽचला प्रीतिर्वहति । यथोक्तं प्रल्हादेन विष्णुपुराणे "या प्रीतिरविवेकानां विषयेष्वनपायिनी । त्वामनुस्मरतः सा मे हृदयान्मापसर्पतु" इति । वैराग्यं तु क्रियासाध्यं न वस्तुतंत्रम् । केवलं विषयानित्यत्वदर्शनायैव तस्योपयोगः । बुद्धेर्दौर्बल्यात् । एते ज्ञानवैराग्ये गौणीकार्यत्वेनोपदिष्टे । तथा च शास्त्रम् "वासुदेवे भगवति

भक्तियोगः प्रयोजितः । जनयत्याशु वैराग्यं ज्ञानं यत्तदहैतुक''मिति । नहि कारणाविर्भावे कार्यापेक्षा काचित् दृष्टा । अतो भक्तेः परमानंदरूपत्वात्तल्लाभादेव पुमान् सिद्धो भवति पूर्णो भवतीत्यर्थः । न पुनः संसारे पतत्यतोऽमृतो भवति । पूर्णत्वाभिमानेन न व्युत्थितो भवतीत्यर्थः । निरंकुशस्तृप्तो भवति । असाक्षिकलयाभावात्परमानंदप्राप्तिरेव समाधिः तस्मिंस्तदाकारतामापद्यत इत्यर्थः ।

यत्प्राप्य न किंचिद्वांच्छति न शोचति न द्वेष्टि
न रमते नोत्साही भवति ॥ ५ ॥

तथापि प्रारब्धबलात् व्युत्थानदशायां प्रीतिधाराप्रवाहः खंडितः स्यान्नेत्याह यत्प्राप्येत्यादिना । प्रारब्धाभिभवो हि भक्त्या भवतीति "प्रारब्धं नियतिर्वापि महेशविमुखे भवेत् । एतन्नमृकंडुतनयेऽत्यंतमीश्वरतत्परे" "ननु प्रारब्धनियत्योरप्युल्लंघने प्रारब्धं नो नाशमीयात् नियतिर्नान्यथा भवेदित्यागमविरोध इति चेदाह । प्रारब्धमिति । महेशविमुखे एव प्रारब्ध-नियत्योर्माहात्म्यमित्यागमतात्पर्यमिति भावः । नैतदागमैकसिद्धं किंत्वैतिह्य-सिद्धमपीत्याह । एतदिति" । इति त्रिपुरारहस्योक्तितट्टीकाभ्यामवगम्यते । व्यतिरेकेण प्राप्तसमाधिः पुमान् व्युत्थानेऽप्यन्वयेन कृतभगवत्साक्षात्कारो न किंचिद्वांच्छति । अप्राप्तवस्तुनोऽभावात् । भूतेषु भगवद्दृष्टेर्न शोचति । न द्वेष्टि मिथ्यावस्तुनः संसारस्य द्वेषेणापि स्वसमानसत्ताकत्वसंभवात् । न रमते मिथ्यावस्तुनि चित्रादौ यथा बाला रमंते तथा क्रीडार्थमपि भक्तो न संसारे रमते रमणीयतमस्य पुरुषोत्तमस्य बहिरंतः संस्थितेः । एवं प्राप्तेष्वपि भोगेषु न सज्जते परातृप्त्यनुभवादित्याह नोत्साही भवतीति ।

यज्ज्ञात्वा मत्तो भवति स्तब्धो भवत्यात्मारामो भवति ॥ ६ ॥

एतदेव दृढयति । अजितोऽपि जितोऽयं भगवानिति बुद्ध्या मत्तो भवति । भक्तिरहितां मुक्तिमपि तुच्छीकरोति । तस्याः कल्पितानिवृत्तिरूपत्वे मिथ्यात्वात् । व्यवहारेऽपि प्रेमसमाध्यनुभवात् स्तब्धो भवति । आत्मारामो भवति न परमेश्वरं स्वाभिन्नं पश्यति ।

एतदेवाहर्षभः " एवंव्रतः स्वप्रियनामकीर्त्या जातानुरागो द्रुतचित्त उच्चैः। हसत्यथो रोदिति रौति गायत्युन्मादवन्नृत्याति लोकबाह्य " इति। अनेन द्वैतमाश्रित्य नारदाचार्याः भक्तिं स्थापयंतीति केषांचिज्जल्पो निरस्तः। यथा ज्ञानेन जीवः शरीराहंकाराध्यासपरित्यागेन स्वस्मिन् तिष्ठति तथा जीवत्वाभिमानज्ञानाभिमानयोश्च परित्यागेन स्वयंपदलक्ष्ये भगवत्येकीभवतीति तात्पर्यम्।

भक्ते राजसाभाववत्वाधिकरणम्

सा न कामयमाना निरोधरूपत्वात् ॥ ७ ॥

अ. मा. रागात्मिकाऽसावयवा न चास्ते
रागात्मिका भोग्यसमत्वहेतोः
रागो नराणां विषये स्वतोऽर्थे
तद्वन्न, भक्तिं व्रज, पार्थकत्वात्

किमियं भक्ती रागरूपिणी न वा। प्रीतिपर्यायो हि रागः। तस्माद्भक्तिरपि रागरूपिणी। अत एव राजसी। "रजो रागात्मकं विद्धीति भगवदुक्तेः। नेत्याह। सा न कामयमाना निरोधरूपत्वादिति। प्रीतिरागयोर्भेद उपलभ्यते सांख्ये वेदान्ते च। सांख्यैर्गुणनिरुक्त्यभिमानिभिरपि प्रीतिः सत्वगुणप्रकार इत्युक्तम्। " प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः। अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः" इति। भगवद्भिरपि सत्वस्य सुखरूपत्वप्रतिपादनात्प्रीतेः सात्विकत्वमेवाभ्युपगतम्। प्रीतिं विना सुखप्रत्ययाभावात्। वेदान्तेऽपि परमप्रेमास्पदहेतुनैवात्मा परमानंदरूपो निर्धारितः। सांख्योक्तं सत्वमसाक्षिकं निराकृतमाचार्यैरीक्षतेर्नाशब्दमित्यधिकरणभाष्ये। ससाक्षिकमंगीकृतं गीताभाष्यादिषु। तस्मात्सत्वोपहितस्य जीवलक्ष्यस्य परमेश्वरस्य परमानंदाभिव्यक्तिरेव प्रीतिः। सा न रागात्मिका। कुतः। निरोधरूपत्वात्। सांख्याश्रयेण सात्विकत्वाद्वेदान्ताश्रयेण ब्रह्मानंदरूपत्वात्प्रीती रागमपनयति।

रागस्त्वध्यासं पुरस्कृत्येदं मे स्यादितीच्छारूपः । स्वभोगार्थमेव नृणां दृश्यते । भक्तौ भोक्तृत्वाभिमानोऽपि विनश्यति । केवलं परमेश्वरविषयिणी प्रीतिधारैवावशिष्यते । अयमेव निरोधः । स एव हि समाधिशब्देन प्रतिपादितो घेरंडाचार्यैः । "स्वकीय हृदये ध्यायेदिष्टदेवस्वरूपकम् । चिंतयेद्भक्तियोगेन परमाल्हादपूर्वकम् । आनदाश्रुपुलकेन दशाभावः प्रजायते । समाधिः संभवेत्तेन संभवेच्च मनोन्मनी" गति । ज्ञानेन तुर्यावस्थाप्राप्तिर्भक्त्या मनोन्मनीति रहस्यम् । यथा योगाभिमतश्चित्तनिरोधोऽभ्यासवैराग्याभ्यां साध्यते तथाऽयं निरोधोऽसाध्योऽप्यभ्यासवैराग्याभ्यां प्रतिबंधशून्योऽनुभूयते । तत्राद्यः प्रतिपादितोऽस्मिन् सूत्रे द्वितीयं प्रतिपादयत्यनंतरेण सूत्रेण । अभ्यासवैराग्ये त्वग्र उपपादयिष्यंत्याचार्याः ।

## निरोधस्तु लोकवेदव्यापारन्यासः ॥८॥

व्यापारः क्रियाविशेषः । स लौकिको वैदिकश्चेतिभेदात् द्विधा । आद्योऽभ्युदयफलावसानः । द्वितीयो निश्रेयसफलावसानः । उभयमपि यत्नं विनैव परित्यजति पुमान् भगवद्भक्त्यावेशात् । यथोक्तं मूर्तिमतीभिः श्रुतिभिः "यत् पत्यपत्यसुहृदामनुवृत्तिरंग स्त्रीणां स्वधर्म इति धर्मविदा त्वयोक्तम् । अस्त्वेवमेतदुपदेशपदे त्वयीशे प्रेष्ठो भवांस्तनुभृतां किल बंधुरात्मा"

## तस्मिन्ननन्यता तद्विरोधिषूदासीनता च ॥९॥

ननु निरोधसंज्ञके समाधौ जडवत्प्रतीतेः कथं प्रीतिधाराप्रवाहोपलब्धिरिति चेच्छृणु । न निरोधसमाधिर्नाम सुप्तिरिव जाड्यप्रत्ययस्तामसत्वविरहात् । तस्मिन् परमेश्वरेऽनन्यताऽहमन्योऽस्मि देवोऽन्योऽस्तीत्यादिद्वैतहानिः । श्रुतिरप्याह "अथ योऽन्यां देवतामुपास्ते" "द्वितीयाद्वै भयं भवति" । जाग्रच्छ्रुतिरपि भवति "ये भजंति तु मां भक्त्या मयि ते तेषु चाप्यहम्" इति तद्विरोधिषु प्रकृत्यादिषूदासीनता विषमसत्ताकत्वनिश्चयात् । अन्यथा संसारद्वेषेण क्लेशप्राकट्याद्भक्तावपि दुःखापत्तेः । यद्यपीयमनन्यता ज्ञानैकगम्या तथापि भक्तेः परमानंदरूपत्वाद्भक्तिगम्यैवेति तत्वम् ।

## अनन्यत्वाधिकरणम् ।

अन्याश्रयाणां त्यागोऽनन्यता ॥१०॥

अ. मा. आश्रयस्यान्यदेवानां त्यागः कार्योऽथवा न हि
ते मुक्तौ विघ्नकर्तारस्तस्मात्त्यागो न चोचितः ॥
ईशितुः सर्वसामर्थ्यात्कारणब्रह्मरूपतः
आत्मप्रीतेरभिन्नत्वात्त्यजेदन्याश्रयं बुधः ॥

एवं समाधौ यथाऽनन्यता तथा व्युत्थानेऽपि स्यान्नवेति संशयः । व्युत्थाने खल्वन्यदेवाराधनमावश्यकं बृहदारण्यकश्रुतेः । यतस्ते मुक्तौ विघ्नं कुर्वंति ततस्तदाराधनं न त्याज्यमिति श्रुत्यभिप्रायः एवं प्राप्ते पठत्याचार्यः । अन्याश्रयाणां त्यागोऽनन्यतेति । व्युत्थितायां वृत्तावपि भगवानेव भजनीयः। "श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यश्चेच्छताऽभयमित्युक्तेः" । ननु कस्यचिद्विष्णुभक्तस्य ब्राह्मणस्य दारिद्र्यं दृष्ट्वा भगवान्नारदो विष्णुं प्रत्येतमनुगृण्हीष्वेत्युवाच । तदान्यदेवान् परित्यज्य ये मां भजंति ते दारिद्र्यभाजो भवंति । तथापि गच्छ त्वं तस्य वरप्रदानायेति भगवदाज्ञां शिरोधार्य ब्राह्मणगृहमेत्य वरं वृणीष्वेति तमुवाच भगवान्नारदः । तदा स्त्रीपतिपुत्रैर्बुद्धिविपर्ययेण वराः संयाचिताः । तद्विपरीतं फलं दृष्ट्वा सर्वमेतत् खलु ब्रह्मांडं देवतावशं तस्मात्सर्वे देवताभजनेनैवोचितमवाप्स्यंतीति नारद उपदिदेश । तमुपदेशमुपलभ्य स ब्राह्मणस्तथाऽनुतिष्ठन् इहलोके सुखं भुक्त्वाऽन्त्ये रुद्रत्वमवापेति भविष्यवार्तोपलंभादावश्यकमन्यदेवताराधनमिति चेन्न । राजसानां कर्मार्हत्वात् कामनावशाद्यस्मिन्यस्मिन् कर्मणि या या देवता शास्त्रेणाधिकृता सा सैव तस्मिंस्तस्मिन् कर्मणि यजनीयेति भविष्यकथाभिप्रायसंभवात् । यदपि गीतायां स्वमुखेनैव सकामानामप्युदारत्वमुक्तं तत्तु प्रेमप्रधानसकामानाम् सकामत्वेप्यचलेन मनसा भगवच्छरणानां वा । प्रेमरहितानां कामबाहुल्येन चलितचेतसां तत्तदेवतोपहितादीश्वरादेव फलप्राप्तिः । "लभते च ततः कामान् मयैव विहितान् हि तान्" इति तत्रैवोक्तत्वात् । नाप्युदाहृतबृहदार-

ण्यकश्रुतिविरोधः । सर्वत्रप्रसिद्धोपदेशादित्यादिन्यायानुगृहीतबहुश्रुतीनां भगवदेकोपास्तिपरत्वात् । बृहदारण्यकश्रुतेस्तु कर्माधिकारकाले न कर्मांगदेवतापरित्यागः कर्तव्य इति तात्पर्यात् । भक्तौ परमेश्वरशक्तिस्तु सर्वेभ्योऽधिका देवानां सृज्यकोटावंतर्भावात् । "न मे विदुः सुरगणाः प्रभवं न महर्षयः" इत्यादिवाक्ये भगवता हि देवानामल्पशक्तिः प्रतिपादिता। तल्वकारोपनिषत्सु देवानामिंद्रादीनामपि प्रदर्शितमल्पशक्तिकत्वम् । यतः परमेश्वरः सर्वकारणं ततस्तत्प्रेरणां विनाऽन्ये परकार्यहनने न शक्ताः । अपि च सर्वात्मनो भगवतः पक्षपातरहितत्वात्तज्ज्ञाने देवतादीनां मिथ्यात्वोपलंभाद्युत्थितायां वृत्तावप्यन्वयेन भगवदनन्यतासिद्धेः भवत्येवान्याश्रयाणां त्यागः ।

लोके वेदे च भगवदनुकूलमेवाचरणं कर्तव्यम् । लोके यथा देहधनपुत्रदारादीनां समर्पणेन प्रतिमादीनां भगवत्तनूनां साधूनां वा सेवा विहिता । सा तु शास्त्रोपदिष्टेति चेत्सत्यम् । वेदप्रधानमेव लोकाचरणं भगवदनुकूलं भवितुमर्हति । एवं वैदिकेष्वपि ध्यानादिषु भगवदानुकूल्यमेव भाव्यम् । "वाणी गुणानुकथने श्रवणौ कथायां हस्तौ च कर्मसु मनस्तव पादयोर्नः । स्मृत्यां शिरस्तव निवासजगत्प्रणामे दृष्टिः सतां दर्शनेऽस्तु भवत्तनूनाम्" इति शास्त्रात् । तद्विरोधिषु न रागः कर्तव्योऽनन्यत्वहानिप्रसंगात् । नापि द्वेषो भगवत्सामर्थ्येनैव सर्वे विरोधिन आत्यंतिक नाशं गमिष्यंतीति बुद्ध्या द्वेषकरणेऽनवकाशात् ।

भवतु निश्चयदार्ढ्यादूर्ध्वं शास्त्ररक्षणम् ॥१२॥

भक्त्यभिमानेन ये शास्त्रविधिमुत्सृज्य परानवैदिकेषु प्रवर्तयंति तेषामासुरत्वबोधनात्तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थिताविति भक्तिमतोऽप्यर्जुनस्याग्रहेणानुज्ञाप्रदानाद्यथा पतिव्रता स्वप्रियाज्ञां पालयति तथा लोकसंग्रहार्थं शास्त्रं पालनीयमेव । तत्पालनं निश्चयदार्ढ्याद्भवतु । पुरा भगवंतमेव शरणं व्रजामीत्यादिविधिरूपः । न ब्राह्मणं हनिष्यामीत्यादिनिषेध-

रूपोऽहिंसादि महाव्रतान् परिपालयामीत्यादिरूपश्च यो निश्चयः कृतः स हि दीर्घकालनैरंतर्यसत्कारासेवनेन जीवन्मुक्तावपि दृढत्वं प्राप्तः। तेनायासं विना शास्त्रपालनं भगवदावेष्टस्यापि चित्तस्य भवतु। सर्वत्र परमेश्वरानुकूल्येनाविरोधात्। कथमसौ पुरा निश्चयो जात इत्यस्योत्तरं सूत्रेणैव पठति।

अन्यथा पातित्याशंकया ॥१३॥

यतोऽस्मिन् जन्मनि सुखार्थे बहु यतमाना अपि जना दुःखिनो दृश्यंते। ततस्ते पूर्वपुण्यापुण्यनिचयवंतो भोगभागिन इत्युपलभ्यंते। पुण्यनिचयस्तु शास्त्रानुसारेण विहरतामपुण्यनिचयस्तु तद्विरोधिनामिति निश्चयात्। अपालितशास्त्रस्य मे पुरुषार्थमिच्छतोऽपि पतनमावश्यकं भविष्यतीत्याशंकावशाच्छास्त्रमेव पालनीयमिति प्रथमदशायां निश्चयो जातः। स यथा दृढत्वमवाप तत्सर्वं प्रदर्शितं पूर्वसूत्रे। अत्र तातवचनमपि। "पाहे पा शाखा पल्लव रुखाचे। हे काय नव्हती एकाचि बीजाचे। परी पाणी घेणें मूळाचे। ते मूळींचि घापे। कां दाहाहि इंद्रिये आहाती। इये जरी एकाचि देहींचे होती। आणि इहीं सेविले विषय जाती। एकाचि ठाया" ॥ एवं यथा शास्त्ररक्षणं निश्चयदार्ढ्यादूर्ध्वं भवति तथा लोकसंग्रहेऽपि भवतु भक्तिमतोऽद्वेष्टृत्वादिस्वभावात्। यथा वृक्षः स्वभावेनैव परार्थे फलति न तु परोपयोगबुद्ध्या परभयेन वा। तथा लोकसंग्रहोऽपि लोकहितार्थे तस्याद्वेष्टृत्वादिस्वभावेनैव भवति न लोकलज्जया तच्चिंतया वा। लज्जाया विषयप्रवृत्तिसंकोचनार्थत्वाद्भगवत्यर्पितानामिंद्रियाणां स्वयमेव विषयप्रवृत्त्यदर्शनात्। यथा ज्ञानवतां केषांचिद्विषयप्रवृत्तिः श्रूयते तथा न श्रूयते भक्तानां कुत्रापि। शास्त्रमपि भवति "बाध्यमानोऽपि मद्भक्तो विषयैरजितेंद्रियः। प्रायः प्रगल्भया भक्त्या विषयैर्नाभिभूयते" इति। ननु "विश्वामित्रपराशरादिमुनयो वातांबुपर्णाशनास्तेऽपि स्त्रीमुखपंकजं सुललितं दृष्ट्वैव मोहं गता" इत्यादिस्मृतिवचनानां विचित्रवीर्यभार्यादौ व्यासकृतनियोगस्य च का गतिरिति चेच्छृणु। भक्तिरहितानां ज्ञानिनां भवति कदा-

चित्प्रारब्धबलान्निषिद्धप्रवृत्तिरित्यर्थद्योतनायैवेयं स्मृतिः । यथाह भगवान् मुचकुंदाय "युंजानानामभक्तानां प्राणायामादिभिर्मनः । अक्षीणवासनं राजन् दृश्यते पुनरुत्थितम्"। "ग्रंथिभेदेऽपि संभाव्या इच्छाः प्रारब्धदोषत" इत्यपरा स्मृतिः । व्यासकृतनियोगस्तु परप्रार्थनया जातः । यथा भगवति निविष्टा कामना सफला भवति भगवदंशद्वारेण तथा व्यासे योगिनि निविष्टा कामनाऽपि स्वयोगमाहात्म्येन सफला जातेति नियोगकथातात्पर्यम् । लोकोपयोगचिंता तु "लोकहानौ चिंता न कार्येत्यादिना निराकरिष्यत्याचार्यः ।

भोजनादिव्यापाराधिकरणम् ।

लोकोऽपि तावदेव किंतु भोजनादिव्यापारस्त्वाशरीरधारणावधि॥१४॥

अ. मा. लोकलज्जां परित्यज्य व्रजता शरणं हरिम्
भोजनस्नानपानादित्यागः कार्योऽथवा न हि ॥१॥
कार्यो लोकपरित्यागाद्देहानासक्तितोऽपि च
भक्तिस्थापनयोग्यत्वाद्यावद्देहो न हीयते ॥२॥
तावत्तु भोजनादीनां व्यापारो न विरुध्यते
यतस्तज्जीवनेनैव भगवान् भुवि तिष्ठति ॥३॥

एवं तर्हि भोजनादिव्यापारेषु प्रवृत्तिर्न वा । भोजनादीनामपि लौकिकत्वान्नेति चेत्सत्यमासक्तित इंद्रियप्रीतये भोजनादिव्यापारस्तु लौकिक एव । न तथा भक्तानां भवितुमर्हति । किंतु यावता भोजनादिव्यापारेण शरीरधारणं भवति तावानेव स भवितुमर्हति । यतो भुवि भक्तजीवनेनैव भगवतः सशरीरविहरणं ततो लोकानुग्राहकः स भोजनादिव्यापारो न विरुध्यते ।

तल्लक्षणानि वाच्यंते नानामतभेदात् ॥ १५ ॥

विषयः— भक्तेर्लक्षणनानात्वम् ।

अ. मा. तल्लक्षणानि वाच्यंते न वा नोऽनिर्वचोक्तितः ।
तथापि बालबोधाय वाच्यंते मतभेदतः ॥

भक्तिलक्षणानि वक्तुं शक्यंते न वेति संशये नानिर्वचनीयत्वादिति पूर्वपक्षयित्वा सिद्धान्तयति तल्लक्षणानीति । शंकासमाधिस्तु भक्तिव्याख्यानसूत्र एवोक्ता । इह तु तल्लक्षणानि बालबोधाय वाच्यंते । अत्र सर्वेऽज्ञानसमापन्ना अनंकुरितप्रेमबीजा बाला एवेति । यद्यपि "सा त्वस्मिन् परमप्रेमरूपेत्यादौ लक्षणमुक्तं तथाप्यत्र नानामतसमन्वयाय पुनरभिधीयते । यथा ज्ञानाचार्याणां सांख्यादिशास्त्रकृतां परस्परमतभेदोऽस्ति न तथा भक्त्याचार्याणामिति समन्वयफलम् ॥१५॥

पूजादिष्वनुराग इति पाराशर्यः ॥१६॥

विषयः– व्यासोक्त भक्तिलक्षणम् ।

अ. मा. पूजादिष्वनुरागः स्यान्न वा नो बाह्यवृत्तितः
अपेक्ष्योऽन्तर्बहिः प्रीतेरित्थं व्यासमतं स्फुटम् ॥१॥

आदौ व्यासमतमधिकरोति पूजादिष्विति । पूजादीनां यद्यपि गौण्यां समावेशस्तदपि पूजादिष्वनुरागस्तु पराभक्तौ समाविष्टः स्यादनुरागस्य प्रेमरूपत्वात् । यथोक्तं शांडिल्येन "सा परानुरक्तिरीश्वर" इति । गौण्यां पूजकस्य पूजादिष्वनुरागः किंतु फलावसायी । ननु पूजादिष्वनुराग एव न संभवति पुष्पादिजडसामग्र्यधिकरणेन पूजायाः बाह्यवृत्तेरिति चेन्नैवम् । यथाऽनध्यस्तविवर्ता भगवन्मूर्ती रसरूपा ध्यानादिभिरंतःकरणसात्त्विकगुणैरलंक्रियते तथा बहिरप्यन्वयेनोपलब्धानध्यस्तविवर्ता भगवन्मूर्तिः प्रीत्या रचितैः सात्त्विकद्रव्योपचारैरलंक्रियते । इदमलंकरणमेव पूजा । तस्यामनुरागो न जडानुरागवदिति । आदिशब्देन व्रतोत्सवादीनां ग्रहणम् । अयं पूजादिष्वनुरागः खलु कर्तव्य एव । महाभारतादिपुराणेषु बहुषु तापनीयाद्यनुसारेण व्यासदर्शितव्रतोत्सवादिकथनात् ।

कथादिष्विति गर्गः ॥ १७ ॥

विषयः– गर्गाचार्योक्तभक्तिलक्षणम् ।

अ. मा. कथादौ स्यान्नवा प्रीतिर्न ध्वंसप्रतियोगितः ।
स्यान्नित्याविर्भावशक्तेर्गर्गाचार्योक्तितोऽपि च ॥

वागलंकरणमाह कथादिष्विति। ध्यानादिना पूजादिना च यथांतर्ब-हिर्भगवन्मूर्तिरलंक्रियते तद्वत् बव्हीभिर्गुणस्तुतिभिरप्यलंक्रियते । गुणास्तु बहुषु पुराणेषु कथारूपेण वर्णिताः । अतस्तच्छ्रवणे पठने प्रीतिरनुभाव्यैव । ननु सर्वाः कथा अतीताः पुनरनुपलंभात्किं तासु प्रीतिकरणेनेति चेन्न । भगवच्छरीरस्य नित्यत्वाद्भक्तस्याऽऽह्वानमात्रेणाविर्भावदर्शनादनुराग एव कार्यः कथादिषु । गर्गसंहितादिषु गर्गोक्तेरपि ।

आत्मरत्यविरोधेनेति शांडिल्यः ॥ १८ ॥

विषयः – शांडिल्योक्तभक्तिलक्षणम् ।

अ. भा. व्यभिचारस्वरूपा वा भक्तिरव्यभिचारिणी ।
श्रौतात्मरतिपार्थक्याद्भवेत्सा व्यभिचारिणी ॥
आत्मप्रीतिर्हि भक्तिः स्यादहंतारहिता हरौ ।
शांडिल्यसंमतं त्वेवं तस्मादव्यभिचारिणी ॥

एवं भगवत्प्रीतिमयी भक्तिर्व्यभिचारिणी न वा । "न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति आत्मनस्तु कामाय सर्वं प्रियं भवति" इत्यादिश्रुतिभिरेकस्मिन्नेवात्मनि रतिर्दर्शिता । अत आत्मभिन्ने परमेश्वरे सा गौणी स्यात् । गौणीत्वात्सा व्यभिचारिण्येव भवितुमर्हतीति प्राप्ते पठति आत्मरत्येति । शांडिल्य आत्मरत्याविरोधेन या भगवद्रतिः सैव भगवद्भ-क्तिरित्याह परमतसमन्वयेन स्वसूत्रेषु ।

अग्निरहस्येऽपि शांडिल्यविद्यायां श्रुतिर्भवति "आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपम्" । जीवस्याहंकाररहितमुख्यस्वरूपत्वात्परमेश्वर-मेवात्मानमुपासीत । कथंभूतं मनोमयं ध्यानादिभिरलंकृतम् । पुनः कथंभूतं प्राणशरीरम् । अन प्राणने इत्यस्य पालनार्थकस्य धातोः घञ्प्रत्ययेन प्रकर्षेण जगत्पालनार्थक एव प्राणशब्दोऽभूत् । तज्जगत्पालनरूपमेव शरीरमनुग्राहक-त्वाद्यस्येति तथाविधम् । किं तच्छरीरं भूतकार्यं मायाकार्यं वेत्युभयपक्षं

प्रतिषेधति भारूपमिति । भा चैतन्यमेव यस्मिन् शरीरे रूपम् । रूपस्य प्रकाशनिष्ठत्वात्प्रकाशस्य च चेतनोऽलक्षगत्वात्तमनध्यस्तशरीरं ब्रह्मरूपं परमेश्वरमिति संबंधः । इयं शांडिल्यविद्या श्रीमच्छंकराचार्यैरपि स्वीकृता शारीरकभाष्ये । तस्मान्न व्यभिचारस्वरूपा भक्तिरिति निष्कृष्टोऽर्थः ।

नारदस्तु तदर्पिताखिलाचारता तद्विस्मरणे परमव्याकुलतेति ॥१९॥

विषयः– नारदोक्तभक्तिलक्षणम् ।

अ. मा. स्वप्रेमभानवद्भानं भक्तेरस्ति न चाथवा ।
अन्यभानं निजप्रेमव्युत्थानवदिहापि च ॥१॥
सर्वाचारार्पितत्वाच्च विस्मृतौ व्याकुलत्वतः ।
भक्तेर्भानं सदैव स्यान्नारदीयं मतं त्विदम् ॥२॥

किमेतानि मतानि भिन्नान्याहोस्विदभिन्नानि संति । स्पष्टलक्षणभेद-प्रतीतेर्भिन्नानीत्यत उत्तरं पठति समन्वयार्थं नारदास्त्विति । तु शब्दः पूर्वपक्षं व्यावर्तयति । तथाप्यस्ति पुनरेकः संशयः । भक्तेः सर्वदा भान-मभानं वा । यथा व्युत्थाने प्रतिबंधेनात्मप्रीतेर्भानं न भवति तथा भक्तेरप्य-भानं स्यात्प्रतिबंधेनेति चेन्न सर्वाचारार्पितत्वात् । पूर्वोक्तव्यासमतानुसारेण पूजाद्यनुरागवशाद्भगवतींद्रियव्यापाराः समर्पिताः । कथाद्यनुरागवशाद्गर्गम-तानुसारेण श्रवणवाणीव्यापाराः समर्पिताः । शांडिल्यमतानुसारेण च ध्यानादिभिर्मनोव्यापाराः जीवव्यापाराश्च समर्पिताः । एवं सर्वमतसमन्वयेन सिद्धायां भक्तौ सर्वव्यापारसमर्पणेन प्रतिबंधावकाश एव नास्ति । भगवंतं विना समर्पितानामिंद्रियादीनां स्वातंत्र्येण प्रवृत्त्यदर्शनात् । तदपि स्यात् प्रमादेन विस्मृतौ प्रतिबंध इति प्रतिषेधार्थमेव तद्विस्मरणे परमव्याकुलतेति पदं लक्षणे निविष्टम् । यदपि व्याकुलं चेत्तत्स्मरणमेव । तथापि निराभि-मानेन या स्वस्मिन् दीनता तयैव भक्तो विस्मरणाभासं परिकल्प्य प्रेम्णाऽ-त्यंतं व्याकुलो भवति । संयोगेऽपि वियोगोपलालनं करोतीति भावः ।

यथोक्तं राधासुधानिधौ "अंकस्थितेऽपि दयिते कमपि प्रलापं हा मोहनेति मधुरं विदधत्यकस्मात् । श्यामानुरागमदविव्हलमोहनांगी श्यामामणिर्जयति कापि निकुंजसीम्नि" इति। एवं नारदाचार्यमतं स्पष्टमनेन सूत्रेण दर्शितम् ।

अस्त्येवमेवम् ॥ २० ॥

एवं श्रुतिषु स्मृतिषु च भक्तेर्लक्षणमास्ति "रसो वै सः" इत्यादि-सौषुतश्रुतिः । जाग्रच्छ्रुतिश्च भवति "यत्करोषि यदश्नासि यज्जुहोसि ददासि यत् । यत्तपस्यसि कौंतेय तत्कुरुष्व मदर्पणम् । मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते । श्रद्धया परयोपेतास्ते मे युक्ततमा मताः । मच्चित्ता मद्गतप्राणा बोधयंतः परस्परम् । कथयंतश्च मां नित्यं तुष्यंति च रमंति" चेति । शास्त्रमपि "कायेन वाचा मनसेंद्रियैर्वा बुद्ध्यात्मना वानुसृत स्वभावात् । करोति यद्यत्सकलं परस्मै नारायणायेति समर्पयेत्तत्"। "हा नाथ रमण प्रेष्ठ क्वासि क्वासि महाभुज । दास्या मे कृपणायास्ते सखे दर्शय सन्निधिम्" इत्यादि । सनातनमेतन्मधुराद्वैतमिति भावः ।

यथा व्रजगोपिकानाम् ॥ २१ ॥

विषयः— भक्तावैतिह्यप्रमाणम् ।

अ. मा. भक्त्या तृप्तिर्न वा न स्यादितिहासाद्यदर्शनात्
सर्वेषां सुखरागाद्वा शुकमुक्त्यादिबोधनात् ॥ १ ॥
उद्धवोक्तिं परित्यज्य मुक्तिदज्ञानदायिनीम्
विज्ञायाप्यंतरव्यक्तं कृष्णरक्ता व्रजस्त्रियः ॥ २ ॥
शुकादयो महात्मानो मुक्ताः संभोगवर्जिताः
कृष्णभोगान् वर्णयंति तस्माद्भक्त्यैव निर्वृतिः ॥ ३ ॥

प्रमाणार्थमैतिह्याधिकरणमुपन्यस्याति । न ह्यैतिह्यस्य प्रयोजनं सार्वकालिकत्वासंभवादिति चेदुच्यते । यद्यपि न सार्वकालिक्यैतिहासिकी गतिस्तथापि कालबलाभिहतानां राजव्यापारादिविषयाणामेवैतिह्यसार्व-

कालिकत्वहानिः । परमेश्वरस्तु यतस्त्रिषु कालेषु न बाधते ततस्तस्य प्रापकमैतिह्यमपि त्रिषु कालेषु न बाधते । ननु किमत्रैतिह्यम् । व्रजगोपिकानामाचरणं सूत्रपठितमिति चेन्न। नहि भगवदाराधनं विषयदृष्ट्या भवति । विषयस्य रजोभिभूतत्वाद्भगवदाराधनस्य च सात्विकत्वात् । यदपि विषयानंदो ब्रह्मानंद एव जडेऽप्यानंदाभावात् तथाप्यविद्यावच्छिन्नस्य तस्य बहुविक्षेपसंभवाद्विषयव्यतिरेकेण सुखस्फूर्तिरेव ब्रह्मानंदः । तथाचोक्तं भक्तिरसायने मधुसूदनाचार्यैः । "कान्तादिविषयेऽप्यस्ति कारणं सुखचिद्धनम् । कार्याकार्यतया भेदेऽप्यावृतं मायया स्वतः" । गोपिकानां तु वैषयिकी प्रीतिरिति प्रसिद्धं लोके । तस्माद्विषयविक्षेपबाहुल्यादैतिह्यं प्रमाणकोटिं प्रवेष्टुं नेष्टे । व्यासस्याप्तत्वात्तद्वचनादेवावगंतव्यमित्यपि वक्तुं न शक्यते । आत्मा श्रीकृष्णो वृत्तय गोप्य इति पुरंजनाख्यानादिरूपकालंकारेण व्यवस्थासंभवात् । अकंठोक्तस्यातिशयोक्त्यलंकारेण रूपकसंभवाच्च । नापि केवलया भक्त्या निर्वृतिः सर्वेषां स्वार्थे रागदर्शनात् । शुकादीनामपि स्वानंदरूपिण्यां मुक्तावेव प्रीत्यनुश्रवात् । एवं प्राप्तं परिहरति भगवान् सूत्रकारः । यथा व्रजगोपिकानामिति । आक्षेपसंगतिसमाधानार्थं यथेति पदम् । षोडशसहस्रसंख्याकानां तपसा कृष्णप्राप्तानां व्यावृत्तये व्रजगोपिकानामिति । यत्तूक्तं विषयदृष्ट्या न भवति भगवदाराधनं तत्सत्यं तथापि साधकानामेवैष नियमः । सिद्धानामुत्तमानां भागवतानां सर्वभूतेषु भगवद्भावदर्शनाद्भूताधिकृतस्य विषयस्य विषयत्वमेव हीयते । अत्र जाग्रच्छ्रुतिश्च भवति "यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति । तस्याहं न प्रणश्यामि स च मे न प्रणश्यति" । शास्त्रमपि "सर्वभूतेषु यः पश्येद्भगवद्भावमात्मनः । भूतानि भगवत्यात्मन्येष भागवतोत्तमः" इति । यदि स्वीकृतमपिविषयदृष्ट्या भगवदाराधनं तदपि न विरुध्यते । भगवदर्पणेन विषयाणां विषयत्वहानिदर्शनात् । स्वभोगार्थपदार्थोपयोग एव विषयो भवति । भोगस्तु कूटस्थे चिदात्मनि भोक्तृत्वारोपं विना न संभवति । विषयशब्दोऽपि षिञ् बंधने इति धातो-

निष्पद्यते। यदपि रजोभिभूतो विषयस्तदपि न विषयानंदकाले। यथा भोजनश्रमसमय एव भोजनस्य रजोभिभूतत्वं न भोजनानंदकाले। किंतु वासनानां बाहुल्यादानंदन्यूनसाधनाद्विषयस्य यत्पुनरुत्थानं तदेव रजोभिभूतत्वम्। भगवति विषयसमर्पणे तु भोगानुपयोगेन भोक्तृत्वस्यापि बाधदर्शनात्परमेश्वरस्य नित्यत्वाच्च न रजोभिभूतत्वमवकल्प्यते। यथोक्तं प्रल्हादेन विष्णुपुराणे "या प्रीतिरविवेकानां विषयेष्वनपायिनी। त्वामनुस्मरतः सा मे हृदयान्नापसर्पतु"। गोपिकानां भगवति स्वभोगार्थं प्रेमेत्येवं मतं निराकरिष्यत्याचार्यः। यथा विषयव्यतिरेकेण ब्रह्मानंदः स्फुरति तथाऽलौकिकभावनोत्पत्तौ विषयान्वयेन भगवच्छरीरालिंगने रसरूपत्वेनासावभिव्यज्यते। यथोक्तं भक्तिरसायने मधुसूदनाचार्यैः "स्थायिभावगिराऽतोऽसौ वस्त्वाकारोऽभिधीयते। व्यक्तश्च रसतामेति परानंदतया पुनः॥ भगवान् परमानंदस्वरूपः स्वयमेव हि। मनोगतस्तदाकारः किमन्यदवशिष्यते"। उपदेशवचोभिरप्येतत्कर्णामृतकारैरप्युपपादितम्। "परमिममुपदेशमाद्रियध्वं निगमवनेषु नितांतचारखिन्नाः। विचिनुत भवनेषु बल्लवीनामुपनिषदर्थमुलूखले निबद्धम्" इति। फलतयाप्यस्याः शास्त्रे वरिष्ठत्वम्। यथा चतुर्थस्कंधे ध्रुववचनम् "या निर्वृतिस्तनुभृतां तव पादपद्मध्यानाद्भवज्जनकथाश्रवणेन वा स्यात्। सा ब्रह्मणि स्वमहिमन्यपि नाथ माऽभूत् किंत्वंतकासिलुलितात्पततां विमानात्"। यत्तूक्तं व्यासवचनस्य रूपकालंकारेणातिशयोक्त्यलंकारेण वा व्यवस्था भवतीति। तदसत्। तल्लक्षणाभावात्। उपमानोपमेययोरभेदो हि तल्लक्षणम्। न च तत्प्रमाणम्। आरोपमात्रत्वाद्रूपकात्प्राक् उभयोरपि सत्वावश्यकत्वात्। न ह्यनुपलब्धयोरुपमानोपमेययोरभेदः कल्पयितुं शक्यः। वंध्यापुत्रशशशृंगादीनां साहित्यशास्त्रे रूपकादर्शनात्। नापि पुरंजनाख्यानादिवदनुमेयमकंठोक्तेः। पुरंजनाख्याने तु "पुरुषं पुरंजनं विद्याद्बुद्धिं विद्यात्पुरंजनीम्" इति तत्रैव स्पष्टोक्तेः। तस्मिन्नेवाख्याने भगवतः परोक्षप्रियत्वमुक्त्वा पारोक्ष्येण हि कथा वक्तव्ये-

त्युक्तम् । तत्संसारस्य मिथ्यात्वदर्शनायाध्यात्मपरं रूपकं कर्तव्यमिति परम् । यत्तु कुत्रचिद्वेदे ब्रह्मसूत्रे भारतादिषु च रूपकपर आख्याननिचयः प्रदर्शितः सोऽपि कुत्रचिदध्यात्मनां चाधिदैवदृष्टिकरणे नोपासनार्थमुपलभ्यते । ब्रह्मसूत्रे शरीररूपकोपन्यासोऽपि प्रत्यक्षसांख्यप्रधानप्रतिषेधार्थमुपलभ्यते । नैतच्छ्रीकृष्णगोपीचरितं संसाररूपमलौकिकलीलारूपेण स्वीकृतत्वे भगवच्छरीरस्य मायाकार्यभूतकार्ययोः प्रतिषेधात् । नाप्यधिदैवेऽध्यात्मदृष्टिवद्रूपकं स्यात् । तथात्वेऽप्यधिदैवस्यालोपेन रूपककर्तुः श्रममात्रसंभवात् । नापि श्रीकृष्णस्याधिदैवतं देवतावदंगीकृतं सर्वशक्तित्वात् । न च ब्रह्मसूत्रीयशरीररूपकोपन्यासवत्कस्यापि प्रतिषेधार्थमेतच्चरितामिति वाच्यम् । चरितश्रवणपठणमात्रेण भक्तिवृद्धिविध्युपदेशात् । नहि "यजमानो यूप" इत्यादिवदारोपरूपेण कृष्णोपासना प्रतिपादिता क्वापि । तस्मान्नैतत्सारं श्रीकृष्णचरितस्य रूपकेण वर्णनं सर्वप्रमाणव्याकोपात् । किं च गोपीकृष्णलीलाचरितस्य रूपकं सावयवं निरवयवं वा । न प्रथमं स्वारस्याभावात्प्रयोजनासिद्धेश्च । न द्वितीयमसंभवात्पुनरुक्त्यादिदोषेभ्यः । नहि रूपकार्थे जनाः प्राणान् परित्यजंति । नाप्यतिशयोक्त्यलंकारः कृष्णचरित्रम् । व्यासस्याप्तत्वात् । न ह्याप्ताः किंचिदपि हितरहितं वदंति । करुणावत्वात् । नाप्यनृतवादिनस्ते साक्षात्कृतनिखिलधर्मवत्वात् । नापि ते मनो रंजयितुमिच्छंति । रागाभावात् । नापि प्रतारयितुमुत्सहंते द्वेषाभावात् । तर्हि व्यास आप्त एव मास्त्विति ब्रवीमि । बाढं ब्रवीषि निरंकुशत्वात्तव वक्त्रस्य । यद्येवं तर्हि रूपकादिभिस्तद्वाक्यव्यवस्थया किं तव प्रयोजनं सिद्ध्यति । न ह्युन्मत्तेन सह त्वया प्रलपितुमुत्सहामहे । अस्मदीयसिद्धान्तस्त्वयम् । न हि सर्वथा जगत्प्रयोजनरहितोऽतिशयोक्त्यलंकारः प्रतिपादयितुमुत्सहते भगवान् बादरायणः । यः स्पष्टमेव ब्रह्मसूत्रादिरूपं वेदान्तं रचितवान् स कथमतिशयोक्त्यलंकारेण बोधयिता भवितुमर्हति । अतिशयोक्त्यलंकारस्य वेदान्तपररूपकं विद्वद्भिरेव कर्तुं शक्यते न तु मूढैः । रासलीलाश्रवणविधौ

तु न ह्यविदुषामधिकारो निवारितो भगवता व्यासेन । अपि तूपास्तिरेव कर्तव्या राधाकृष्णयोरिति बहुषु पुराणेषूपपादितम् । ननु "योषा वा गौतमाग्नि"रित्यस्मिन् वाक्ये यथाग्निरूपेण स्त्रीचिंतनं शास्त्रबलात् फलाय भवति तद्वत् गोपीकृष्णचरितरूपकोपासनचिंतनमपि मूढानां शास्त्रबलात् फलाय कल्पेतेति चेन्न । उदाहृतश्रुत्युक्तोपासनाया उपास्यभिन्नपुण्यलोकादिफलश्रवणात् । अत्र तूपास्यस्यैव फलरूपत्वश्रवणात् । यथा "न नाकपृष्ठं न च सार्वभौमं न पारमेष्ठ्यं न रसाधिपत्यम् । न योगसिद्धिरपुनर्भवं वा वांच्छंति यत्पादरजः प्रपन्नाः" "ज्ञाने प्रयासमुदपास्य नमंत एव जीवंति सन्मुखरितां भवदीय वार्ताम् । स्थाने स्थिताः श्रुतिगतां तनुवाङ्मनोभिर्ये प्रायशोऽजित जितोऽप्यसि तैस्त्रिलोक्याम्" । न च विषयिणां विबोधाय वेदान्तपरं कृष्णचरित्रमिति वाच्यम् । विषयिणां वेदान्ते सर्वथाऽनधिकारात् । साधनचतुष्टयसंपन्न एव वेदान्ताधिकारीति श्रुतिस्मृतिपुराणेतिहासानां डिंडिमः । साधनचतुष्टयस्य च विषयवर्णने सर्वथोपरमात्तस्य स्पष्टवेदान्तवाक्यैरेव ब्रह्मबोधो विधीयते । यत्तु कैश्चिदाधुनिकैः कृतमपि सावयवं रूपकं तदलब्धप्रतिष्ठमद्यापि । तस्मादनिष्टमेतद्गोपीकृष्णचरितरूपकं भक्तिमतां विदुषां कृतादिकालिपर्यंतं कृष्णभक्तपरंपरादर्शनात् । सर्वासां कथानामपलापके त्वयि तव पितामहादीनां कथानामप्यपलापप्रसंगः । न हि केवलया भक्त्या निर्वृतिरिति यदुक्तं तन्न । भक्त्यैव निर्वृतिरिति पुरस्तादुपपादनात् । "यं सर्वे देवा नमंति मुमुक्षवो ब्रह्मवादिनश्च" "मुक्ता अपि लीलया विग्रहं कृत्वा भजंतीत्या"दि श्रुतिभाष्ययोः सत्वात् । शुकादीनां मोक्षादप्यधिको भगवत्यनुराग इत्यत्राप्यस्ति शास्त्रम् । "आत्मारामाश्च मुनयो निर्ग्रंथा अप्युरुक्रमे । कुर्वंत्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः । "परिनिष्ठितेऽपि नैर्गुण्ये उत्तमश्लोकवार्तयेति" । ननु शूद्राणां गोपिकानां वचनं कथमार्षप्रमाणजनकेन भगवता नारदेनार्षिणा प्रमाणमभ्युपगंतव्यम् । उच्यते । भक्तिसाम्राज्ये जातिनियमाभावात् । गोपिकानां च श्रुतित्वात् । यथाकाशाद्घनघनतर-

घनतमा वाय्वग्निजलपृथिव्यो भवंति तथा वेदोपहितचेतनं शब्दब्रह्मैव मूर्ति-रूपेण परिणतं गोपिकारूपेण बभूवेति पुराणानामभिप्रायः। यथा ब्रह्मोवाच "षष्टिवर्षसहस्राणि तपस्तप्तं मया पुरा। नंदगोपव्रजस्त्रीणां पादरेणूपलब्धये" इति। "न तपोभिर्न वेदैश्च न ज्ञानेनापि कर्मणा। हरिर्हि साध्यते भक्त्या प्रमाणं तत्र गोपिका" इति पाद्मोक्तिश्च। न्याय्यमुक्तमतः सूत्रं "यथा गोपिकानामिति"।

## तत्रापि न माहात्म्यज्ञानविस्मृत्यपवादः ॥२२॥

तासां भक्त्युत्कर्षं प्रतिपादयन्नाह। तत्रापीति। अत्राह कश्चित्। एवमुत्कृष्टप्रेमवतीनां गोपिकानां भगवति पतित्वदृष्टिः पातित्यायैव स्यात्। माहात्म्यज्ञानाभावात्। भगवता बादरायणाचार्येणापि 'ब्रह्मदृष्टिरुत्कर्षात्' इत्यस्मिन् सूत्रे प्रतीके ब्रह्मदृष्टिर्विधेया न ब्रह्मणि प्रतीकधीरित्युपपादितम्। उच्यते। सत्यं निकृष्टे वस्तुन्युत्कृष्टधीरेव कर्तव्या नोत्कृष्टे निकृष्टधीस्तथा-प्युपास्तावेवायं नियमः। भक्तौ तु वस्तुतत्वस्य संबंधकरणान्न विशेषतस्त त्प्रयोजनम्। यथा वस्तुन्यधिकविवक्षितगुणवत्वमुत्कृष्टत्वं तत्तस्य भाव्यम्। सर्वसंबंधापेक्षया भगवति पतिसंबंध उत्कृष्टत्वेन वर्णितस्तेन हि पत्न्या निरपेक्षत्वं स्पष्टं भवति। उपासनायां तु यथा निकृष्टे वस्तुनि परमेश्वर-दृष्टिर्विधीयते तथा वस्तुदृष्टिर्न भक्तावपेक्ष्यते। किंतु ज्ञाते वस्तुनि परमेश्वरे उत्कृष्टसंबंध एव विधीयते। सोऽपि प्रेमतंत्रो न भावनातंत्रः। प्रेमैव भावनातंत्रमिति चेदात्मप्रीतेरपि तथात्वं स्यात्। प्रत्यक्षत्वान्नेति चेत्त्वंपद ज्ञानाभिमाने गलिते तत्पदगोचरे कुतो न तत्प्रेम वस्तुतंत्रं भवति। नापि ज्ञानात्प्रागेव भगवति संबंधो विधेय इति वाच्यम्। ज्ञानोत्तरमेव भक्ति-संबंधयोग्यताप्राप्तिरिति प्रमाणसत्वात्। अस्ति चागस्तिसंहितायां वचनम्। "देहत्रयविनाशं च कृत्वादौ गुरुवक्त्रतः। ततः संबंधयोग्यत्वं प्राप्नोति मुनिसत्तम" इति। नहि देहत्रयविनाशो भावनातंत्रः। साक्षिज्ञानं विना कारणदेहस्य नाशासंभवात्। गुरुवक्त्रतो महावाक्यज्ञानेन ज्ञाते शुद्धात्मतत्त्वे

दृष्टपरमानंदप्राप्त्यर्थं भगवति संबंधस्थापनं हितमिति वचनार्थः। यत्तु मधुसूदनाचार्यैरद्वैतसिद्धौ मुक्तौ तारतम्यभंग इत्यस्मिन् प्रकरणे ज्ञानानंतरं प्रारब्धभोगं विना भक्तेरनपेक्षणीयत्वमुक्तं तत्साधनभक्तेरेव बोध्यम्। अन्यथा स्ववचनविरोधापत्तेः। यथा तैरेवोक्तं गूढार्थदीपिकोपोद्घाते "जीवन्मुक्तिदशायां तु न भक्तेः फलकल्पना। अद्वेष्टृत्वादिवत्तेषां स्वभावो भजनं हरेरिति"। नापि गोपीषु महात्म्यज्ञानाभावः। "यत्पत्यपत्यसुहृदामनुवृत्तिरंग स्त्रीणां स्वधर्म इति धर्मविदा त्वयोक्तम्। अस्त्वेवमेतदुपदेशपदे त्वयीशे प्रेष्ठो भवांस्तनुभृतां किल बंधुरात्मा" इत्यस्मिन् श्लोके "भवांस्तनुभृतां किल बंधुरात्मेति" वचनेन स्वीयं त्वंपदलक्ष्यज्ञानं ताभिः प्रख्यापितम्। तर्हि पतिहृदयेऽप्यसावस्ति। सत्यं न पतिशरीरमनध्यस्तविवर्तमिति तत्पदलक्ष्यपूर्वकं साकारमहात्म्यज्ञानमस्त्वेवमेतदुपदेशपदे त्वयीशे इत्यादि पदैः प्रख्यापितम्। पुनः स्वीयगीतेऽप्याहुर्मूर्तिमत्यः श्रुतयः। "न खलु गोपिकानंदनो भवानखिलदेहिनामंतरात्मदृक्। विखनसार्थितो विश्वगुप्तये सख उदेयिवान् सात्वतां कुले"। जीववज्जन्मवत्त्वं निवारयंति न खलु गोपिकेति। सर्वसाक्षित्वं बोधयंत्यखिलदेहिनामंतरात्मदृगिति। अनध्यस्तविवर्तत्वं दर्शयंत्युदेयिवान् सात्वतां कुल इति। ज्ञानानंतरं संबंधं स्थापयंति सख इति। दृष्टपरमानंदप्राप्तिर्भक्तेः फलमुपपादयंति विश्वगुप्तय इति। सुगममन्यत्। अथवा महात्म्यज्ञानं ब्रह्मज्ञानम्। विस्मृतिर्भक्त्या साधिते विरक्त्युपरती। तयोरपवादः परस्परबाधो न स्यात्। किंवाऽयमीश्वर इति स्वस्माच्छ्रेष्ठत्वसंपादकस्य महात्म्यज्ञानस्य विस्मृतिरभानं नापवादः न निषेद्धुं योग्यम्। कुतः। भक्तावपि जीवेश्वरयोः परमानंदरूपेणैकत्वदर्शनात्। परमप्रेम्णा स्वविस्मृतौ स्वकनिष्ठत्वापेक्षस्य वरिष्ठत्वस्यापि विस्मरणात्। निष्कामप्रेमसंपन्नानां गोपीनां ज्ञानिष्वेवांतर्भाव इति गूढार्थदीपिकायां मधुसूदनाचार्यैरुपपादितम्। वस्तुतस्तु ब्रह्मज्ञानपूर्विकैव तासां प्रेमोत्कर्षात्सर्वविस्मृतिरन्यथा त्वनिष्टमेवेत्याह।

तद्विहीनं जाराणामिव ॥२३॥

तद्विहीनं महात्म्यज्ञानविहीनं प्रेम जाराणामिव स्यात्। स्वभोगायैव जारा प्रेम कुर्वंति। गोपीनां प्रेम तु केवलं कृष्णार्थमिति बहुषु पुराणेषु श्रूयते। अत एव तत्प्रमाणतया गृण्हंति महात्मानः। जारप्रेम तु प्रमाणकोटिमेव प्रवेष्टुं नेष्टे। तस्य रागरूपत्वात्। न च जारप्रेमापि निष्कामं चेत्प्रशंसार्हमिति वाच्यम्। कदाचिदपि ज्ञानं विना विषयेषु रमणीयताभावादर्शनात्।

नास्त्येव तस्मिंस्तत्सुखसुखित्वम् ॥२४॥

तत्प्रेम निष्कामं न भवतीत्याह तस्मिन् जारप्रेम्णि तत्सुखसुखित्वं प्रियसुखसुखित्वं नास्त्येव न भवत्येव। रागसत्वात्। रागबलादेव धर्मसिद्धां परलोकादिप्रेमप्रवृत्तिं परित्यज्यैहिकस्वभोगार्थमेव जारा प्रवर्तंते। तत्र हि यदि त्वंपदाध्यस्तस्य सुखेन सुखित्वमपि नास्ति कुतस्तर्हि तत्सुखसुखित्वं परमेश्वरसुखसुखित्वमिति वक्तव्यम्। "ननु न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति। न वा अरे जायायाः कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया प्रिया भवति। न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवंत्यात्मनस्तु कामाय पुत्राः प्रिया भवंति। न वा अरे वित्तस्य कामाय वित्तं प्रियं भवत्यात्मनस्तु कामाय वित्तं प्रियं भवती"त्यादि श्रुतिशतैरात्मप्रेमप्रतिपादनादात्मव्यतिरिक्तं प्रेम गौणमेव स्यात्। धार्मिका अपि धर्ममत्यंतदुःखनिवृत्तिसाधनं ज्ञात्वा सदाचारे प्रेम कुर्वंति। सत्यं श्रुतिरात्मप्रेम बोधयति। परं च किं सोपाधिकं स्वात्मप्रेम बोधयत्याहोस्विन्निरुपाधिकम्। आद्ये प्रसिद्धस्यानुवादपूर्वकत्वाच्छ्रुतेर्मिथ्यात्वापत्तिः। द्वितीये समाधिकाले निर्गुणे प्रेम उत्पद्यते। किंतु निर्गुणेऽपि भक्तिरुत्पद्यत इति मधुसूदनोक्तेः समाध्यतिरिक्तसमये गौणाहंकारसंप्राताविदंतेदमाकारावच्छिन्नेऽनध्यस्तविवर्ते ब्रह्मण्यन्वयेनोपपद्यते। तद्दृष्टपरमानंदप्राप्तिः सिध्यतीत्यविरोधः। श्रुतिश्च भवति "शिवो भूत्वा शिवं यजेदि"ति। तातचरणैरप्युक्तम्

"जैं कृष्ण होईजे आपण । तैं कृष्ण होईजे आपलें अंतः करण । तेथ संकल्पाचे आंगण । वोळगती सिद्धि" (ज्ञा. अ. ओ.) निरुपाधिकं ब्रह्म ज्ञात्वांतःकरणावच्छेदारोपितं प्रतिबिंबापेक्षि त्वबिंबत्वारोपावाच्छिन्नाचिंत्रभूतं वा ब्रह्माऽनध्यस्तविवर्तं हृदयमेकीकृत्य समुल्लसति । तदा जगदिदं संकल्पमात्रमेव नान्यत्किंचिदिति भाति । तेन यत्र यत्र संकल्पस्तत्र तत्र गोलोकस्तत्र तत्र वैकुंठमिति सौष्ठवमुत्पद्यते । इयमेव ज्ञानमिश्रा भक्तिर्जीवन्मुक्तिश्चेति तातचरणाभिप्रायः । यथा "अहो ऐक्याचे मुद्दल न ढळे । आणि साजिरेपणाचा लाभू मिळे । तरी स्वतरंगाचे मुकुळे । तुरंबु का पाणी" (अमृ. प्र. १ ओ. ५९) तैसे ग्रासुनि दुसरे । स्वरूपीं स्वरूपाकारे । आपुलेपणे उरे । बोधु जो कां ॥ ते ऋगशेष वाचा इया । न फेडवेचि मरोनिया । ते पाया पडुनि मिया । सोडाविले" ॥ (अमृ. प्र. ३ ओ. ३१।३२) श्रुतिरपि "यं सर्वे देवा नमंति मुमुक्षवो ब्रह्मवादिनश्च" । तदुपबृंहणं सूतसंहितायां यज्ञवैभवखंडे द्वितीयाध्याये यथा "विशुद्धं ज्ञानमुत्पन्नं यस्य तस्य महात्मनः । शिवरुद्रमहादेवब्रह्मेशानादिनामसु । रुद्रमूर्तिषु सर्वासु शांतिदांत्यादिसाधने । तिर्यक्त्रिपुंड्रे रुद्राक्षे तथा भस्मावगुंठने । शिवलिंगस्य पूजायां शिवस्थानेषु सुव्रताः । प्रियबुद्धिः प्रजायेत स्वभावादेव सर्वदा । यस्य विज्ञानिनस्तेषु प्रद्वेषो वापि जायते । उपेक्षा वा न स ज्ञानी पशुर्विज्ञानवंचकः । सर्वत्र नास्ति विद्वेषः साध्यसाधनपूर्वके । साक्षाद्विज्ञानिनो विप्रा उपेक्षाबुद्धिरेव हि । तथाप्युक्तेषु सर्वेषु शैवेषु द्विजपुंगवाः । प्रियबुद्धिः स्वतो भाति बाधिताकाररूपतः" । यस्य विशुद्धं ज्ञानमुत्पन्नं तस्य ज्ञानिनः स्वभावादेव भगवन्नामरूपे प्रियबुद्धिर्जायते । विशुद्धमित्यनेन मंदज्ञानित्वं व्यावृत्तम् । स्वभावान्न फलकल्पनयेति भावः । ननु शांतिदांत्यादिसाधनेऽपि प्रीतिर्जायत इत्युक्तमत्रैव । किं पुनर्भक्तेर्वैशिष्ट्यप्रतिपादनेनेत्युच्यते । शांत्यादयः सात्विकत्वाद्यावत्प्रारब्धावष्टब्धमंतःकरणं तिष्ठति तावत्तेऽपि तिष्ठंत्येव । किंवा मनोनाशः शांत्यादिसाधनफलं तत्वज्ञानानंतरमस्तु । वासनाक्षयस्तु भक्त्यैव । यथाहुः

कांतचरणा मुचकुंदाय “युंजानानामभक्तानां प्राणायामादिभिर्मनः । अक्षीणवासनं राजन् दृश्यते पुनरुत्थितम्” । भक्तानामेव क्षीणवासनं मन इति श्लोकतात्पर्यम् । शिवरुद्रादिनामसु गाने रुद्रमूर्तिषु सर्वासु च ध्यान-पूजन इति भावः । एवं भगवति चेतने यथा ज्ञानानंतरं प्रीतिर्जायते तथा प्रतिमास्वपि जायतेऽचेतनदर्शनाभावादित्याह । शिवलिंगस्य पूजायामिति । ननु हिरण्यकशिप्वादीनामिव कदाचिज्ज्ञानिनो भगवति द्वेषोऽपि स्यान्नवेति कल्पनायामाह । हिरण्यकशिप्वादीनां द्वेषस्तु हस्तेनास्य मृता वयं कृतार्था भविष्याम इति बुद्धया साधकदशायां मुनीनां शापाद्भगवति संजातः । ज्ञानिनस्तु द्वेषस्य कारणमेव नास्ति । द्वेषकारणस्याज्ञानस्य विद्यया बाधात् । प्रेम त्वात्मासिद्धपरमेश्वरे भक्तित्वमेतीत्यसकृदुपपादितं पुरस्तात् । मास्तु तर्हि द्वेष उपेक्षाऽपि किंन्न स्यादित्यत आहोपेक्षावेत्यादिना । यस्य भगवन्नामरूपे ज्ञानानंतरं प्रियबुद्धिर्न जायते स पशुरेव भाव्यः । न केवलः पशुरेवासौ किंतु ततोऽपि नीच इत्याह । विज्ञानवंचक इति । पशुरपि स्वामिनं प्रति प्रियं पश्यति । भक्तिरहितो ज्ञानी तु ज्ञानादेष्टारं परमेश्वरमुपेक्षत इति महादाश्चर्यम् । उपेक्षा संसारे भवति ज्ञानिनः । द्वेषस्तु तत्रापि न भवति । कुतस्तर्हि भगवद्द्वेषसंशयः इत्याशयेनाह सर्वत्रेत्यादिना । सर्वत्र संसारेऽपि ज्ञानिनो द्वेषो नास्ति । संसारस्य विषमसत्तारूपेण ब्रह्मणो हानिकरत्वाभावात् । यस्तु रज्जुसर्पं ज्ञात्वापि द्वेष्टि स यथोन्मत्तस्तद्वत्संसारद्वेष्टाऽपि न ज्ञानी । किमुत भगवत्पूजादिविद्वेषकः । उपेक्षाबुद्धिर्नाम द्वेषरहितो रागाभावो मिथ्यात्वात् । यद्युपेक्षा बुद्धिर्भवति ज्ञानिनः संसारे स्यात्तर्हि संसारवदुपेक्षाबुद्धिर्भगवद्विग्रहेऽपि, स्यान्नेत्याह । तथापीत्यादिना । अयमाशयः । शैवेष्विति बहुवचनेन भगवत्पूजादिसामग्र्यां बाधिताकारतः ज्ञानानंतरं प्रियबुद्धिर्भवति । अनध्यस्तविवर्ते परमेश्वरे तु स्वभावादेव भवति प्रियबुद्धिः । तस्मान्नायं संसारतुल्योऽनध्यस्तविवर्तो भगवान् प्रारब्धेनानिष्पादित्वात् । एवं प्रियबुद्धिरपि ज्ञानिनः कर्तव्यत्वेन नोपदिष्टा किंत्वात्मप्रेमैव स्वभावेन तत्पदगोचरे

परमेश्वरे भक्तिसंज्ञामुपैतीत्युक्तम् । ननु परमेश्वरस्यापि बाधिताकारत्वाद्भक्तिरियं लोकसंग्रहार्थं स्यादिति मैवं मंस्थाः । परमेश्वरविग्रहस्य बाधिताकारांगीकारे संसारवदुपेक्षासंभवेन पूर्वापरश्लोकविरोधः प्रसज्येत । लोकसंग्रहोऽपि ज्ञानिना कर्तव्य इति विधिर्नास्त्येव । तदुपेक्षाबोधकश्रुत्यादिसत्वात् । श्रुतिस्तु "शिष्टः शिष्टवन्नाचरेत् जडवच्चरेत् । ब्राह्मणः पांडित्यं निर्विद्य बाल्येन तिष्ठासेत्" इति । बाल्येन स्वस्य धार्मिकत्वाद्यविख्यापनेनेति टीकाकृदुक्तेर्ज्ञानिन उपेक्षैव लोकसंग्रहे भवति । जाग्रच्छ्रुतिश्चाह "यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः । आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते । नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन । न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः" । वक्ष्यति चाचार्योऽपि "लोकहानौ चिंता न कार्या निवेदितात्मलोकवेदत्वादिति" । एवं लोकसंग्रहापेक्षावतामपि ज्ञानिनां सूतसंहितोपबृंहिता ज्ञानोत्तरभक्तिरस्त्यवेत्याह जाग्रच्छ्रुतिरपि । "ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति । समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्" । ननु ब्रह्मभूतोऽयं साधकः स्यादिति चेन्न । न शोचति न कांक्षतीत्युक्तेः । साधके मोक्षाकांक्षा स्पष्टैव । अस्तु तावन्मोक्षाकांक्षा विषयाकांक्षाशोकरहितः साधक एवात्राभिमत इति चेन्न । प्रसन्नात्मेत्युक्तेः । न भवति साधकः प्रसन्नात्मा ब्रह्मप्राप्तेरभावात् । साधनचतुष्टयांतर्गतसमाधानत्वेन प्रसन्नात्मा साधकोऽभिमत इति चेन्न । समः सर्वेषु भूतेष्वित्युक्तेः । भावनामात्रेण सर्वभूतेषु समं ब्रह्मोपास्तिमान् साधकोऽयमिति चेन्न । सम इति विशेषणेन विशिष्टे ज्ञानिन्यन्वयात्स्वयमेव सम इत्यर्थोऽवगंतव्यः । स्वस्य सर्वभूतसाम्यं न ह्यपरोक्षज्ञानं विना संभवति । अतो ज्ञानवानेवायं भगवदभिमतः । सिद्धमतो ज्ञानानंतरं भगवद्विषयमात्मप्रेम भक्तिसंज्ञामेति । तदा ज्ञानी ज्ञानाभिमानशून्यस्तत्सुखसुखी भवतीति प्रतिपत्तव्यम् । ननु गोपीनामपि रासे सुरतक्रीडादर्शनाज्जाराणामिव श्रीकृष्णे प्रेमेति चेन्न । तत्सामग्र्यभावात् । नहि परमेश्वरस्य परत्वमस्ति कस्मिन्नपि येन परस्त्रीगमनात्तस्य पातकं प्रसज्येत । नाप्येकेन शरीरेणानेकगोपीसंभोगः

संपादितो भगवता येन दोषापत्तिर्वक्तुं शक्यते। एकेन परमेश्वरेण बहुशरीरसंपादितो भोगोऽपि दोषायैव स्यात्तेषु शरीरेषु परमेश्वरस्यैकत्वादिति चेत्पुत्रं प्रत्यपि पितृकृतमातृमैथुनपातकं स्यात्। पितृपुत्रशरीरयोर्जीवस्यैकत्वात्। नाप्यनेकजीववादेन चारितार्थ्यं संभवति। कुतो जीवस्यानेकत्वमभ्युपगम्यतेऽतःकरणदृष्ट्याऽविद्यादृष्ट्याऽऽत्मदृष्ट्या वा। आद्ये सर्वांतःकरणानुस्यूतस्य समष्टिजीवस्य हिरण्यगर्भस्यापि सर्वपापसमापत्तिः स्यात्! द्वितीयेऽविद्याभेदे प्रमाणाभावादेककरणेन बहुकार्यसंभवाचास्मत्पक्ष एव गले पतितः। तृतीये द्वैतापत्तिः सर्वश्रुतिव्याकोपोऽनिर्मोक्षप्रसंगश्च। अथवा ब्रह्मणो जीववत्परमेश्वरस्यापि बहुशरीरे तत्तद्भावनादृष्ट्या सजातीयत्वं बव्हंशत्वं च कल्पनीयम्। तुष्यतु दुर्जन इति न्यायेन मास्तु भगवति दोषापत्तिरस्त्येव गोपीष्विति चेन्न। कुमारीणां स्वव्रतबलेन परमेश्वरे पतित्वस्थापनात्। ऊढानामपि भक्तियुतांतःकरणतीव्रसंवेगशरीरेण भगवत्समागमस्य कृतत्वात्। यथाच शास्त्रम् "नासूयन् खलु कृष्णाय मोहितास्तस्य मायया। मन्यमानाः स्वपार्श्वस्थान् स्वान् स्वान् दारान् व्रजौकसः" (भागवत स्कं १० अ,)। आत्मप्रेमैव गोपीनां श्रीकृष्णे स्थितमित्युपपादितमधस्तात्। नौकाक्रीडादावपि स्पष्टं प्रतीतं भगवदर्थे गोपीनां प्रेम। मंदारमरंदचंप्वामुत्तमनायिकालक्षणे एवंविधं प्रतिपादितम् "उत्तमा हितकर्त्री स्यादहितं कुर्वति प्रिये। कान्तं कृतागसमपि प्रियं सदकरोत्प्रिया"। उत्तररामचरितेऽपि "अकिंचिदपि कुर्वाणः सौख्यैर्दुःखान्यपोहति। तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः"। भगवतापि स्वीकृतमेवंविधं गोपीनां प्रेम। "न पारयेऽहं निरवद्यसंयुजां स्वसाधुकृत्यं विबुधायुषाऽपि वः। या माऽभजन् दुर्जरगेहशृंखलाःसंवृश्च तद्वः प्रतियातु साधुना" इति। (भागवत स्कं. १० अ. ३२ श्लो. २२)। अत एवंविधप्रेमाभावे साहित्यशास्त्रीयमुत्तमनायिकालक्षणमेव व्यर्थं स्यात्। अन्यत्र तददर्शनात्। यत्तु कासांचित् लोके उत्तमानायिकावदाचरणं तत्तु पतिमीश्वरं ज्ञात्वा धर्मदृष्ट्यैवान्यथा मानलीलाद्यनुपपत्तिः। न हि परकीया नायिकोत्तमा

भवति जीवविषये । भगवद्विषये तु परकीया नायिकाऽप्युत्तमा भवतीति सर्वं समंजसमैतिह्याधिकरणम् ।

### भक्तिश्रेष्ठत्वाधिकरणम्

सा तु कर्मज्ञानयोगेभ्योऽप्यधिकतरा ॥२॥

अ. मा. भक्तिः परेभ्योऽप्यधिका न वा नो शुद्धिर्धियः केवलकर्मणैव ।
योगेन याति स्थिरतां तथाहि ज्ञानाद्विमुक्तिर्भवति स्वतंत्रात् ॥
कर्मेशार्पितमेव यच्छति मनःशुद्धिं न तत्केवलम् ।
योगः स्थैर्यमपि प्रभोर्न करुणापेक्षां विना यच्छति ॥
विज्ञानं परमप्यहो न लभते निर्गर्वतां यां विना
प्रारब्धाभिभवो ययाधिकतमा तेभ्यस्ततः स्यादियम् ॥

या त्वस्मिन् परमप्रेमरूपेत्यारभ्यैतावत्प्रतिपादिता पराभक्तिः सैव कर्मज्ञानयोगेभ्योऽप्यधिकतरा भवति । गौण्या समाधिसिद्धिरिति शांडिल्य-सूत्रेण गौण्या योगसाधनत्वोक्तेः । तथेश्वरप्रणिधानाद्वेत्यादि सूत्रजातं प्रणीतं योगसूत्रकृद्भिः । अतः कर्मज्ञानयोगेषु भक्तेरपेक्षा दृश्यते । न हि भक्तौ कर्मज्ञानापेक्षा । ननु जीवस्य सुखदुःखयोः कर्मैव कारणम् । तत्र को वेश्वरः परिकल्प्यते । उच्यते श्रुतिरेव कर्मसाक्षिणं परमेश्वरं वदति । "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतांतरात्मेति । "एष ह्येव साधुकर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत एष ह्येवासाधु कर्म कारयति तं यमधो निनीषतीत्यादौ" कर्माध्यक्षस्य परमेश्वरस्य निरूपणात् । ननु तदपि फलदातैव परमेश्वरः । यो यथा करोति तंप्रति तथा फलं ददाति । ततोऽपि शुचिकर्मण्यर्थादेव परमेश्वरकरुणापेक्षा न वर्तते । अशुचिकर्मप्रहरणं शुभकर्मवर्धनं च श्रेयसे भूयात् । यतः पदार्थानां त्रैगुण्यात्सर्वथा शुद्धं कर्म न भवत्येव । ततः परमेश्वरप्रसादं विनाऽत्यल्पेन कर्मणा न श्रेय इति चेन्न । शुद्धाशुद्धविवेके शास्त्रस्य बलवत्वा-

न्निरपेक्षोरेवः शास्त्रम् । तत्रच्छुद्धमित्युपदिशति तच्छुद्धं यदशुद्धमित्युपदिशति तदशुद्धम् । नहि तत्र परमेश्वरापेक्षा विद्यते । नैतत्सारम् । कर्मकर्तुः कर्मकारयितृत्वं फलदातृत्वं चोभयमपि भगवतः श्रवणादित्युक्तम् । एष ह्येव साधु कर्मेत्यादि तच्छ्रवणम् । नहि जडं कर्म स्वफलेन जीवं युनक्ति । चेतनाधिष्ठातारं विनाऽचेतनप्रवृत्त्यदर्शनात् । नापि जीवोऽतिस्वतंत्रः सन् पापफलं भुंक्ते स्वतंत्रस्य सर्वसामर्थ्यात् दुःखभोगाऽशक्यत्वात् । जीवः सुखं ज्ञात्वैव पापे प्रवर्तते । स यदि स्वतंत्रश्चेत्तदा कथं पापफलं दुःखं भुंजीत । तस्मात्परमेश्वर एव पूर्वप्रयत्नमपेक्ष्येदानीं कारयति । पूर्वतरप्रयत्नमपेक्ष्य पूर्वं कारयति । संसारस्यानादित्वात्कृतप्रयत्नापेक्षत्वमपि घटते परमेश्वरस्य । अज्ञो जंतुरहमेव करोमीति मत्वा मोहेन बद्धो वासनाविष्टो नानायोनिषु व्रजति । ज्ञानी तावत्सर्वकर्ता परमेश्वर इति ज्ञात्वा भगवति सर्ववृत्तिसमर्पणेन साक्षी भूत्वा तिष्ठति । स च कर्मभिर्न लिप्यते । यथाहुः प्रियपादाः "न मां कर्माणि लिंपंति न मे कर्मफलेस्पृहा । इति मां योऽभिजानाति कर्मभिर्न स बध्यते" । नन्वेवं सति परमेश्वरो विहितकारिणमप्यनर्थेन निषिद्धकारिणमप्यर्थेन संसृजेत् । ततो वेदस्य प्रामाण्यमस्तमियादिति चेन्न । परमेश्वरस्य साधारणकारणत्वात् । यथा बीजेष्वसाधारणकारणेषु साधारणः पर्जन्यो वृक्षोत्पादनादिभिरुपकारको भवति बीजानां तुषस्तु सहकारी भवति तथा जीवक्लेशसहकारिकर्माशयबीजानां परमेश्वर एव फलदाने ह्युपकारको भवति । अत्र जीवः कर्ता भोक्ता च । कर्म कार्यं भोग्यम् । परमेश्वरः कर्मकारयिता भोजयिता चेति स्थितिः । "भोक्ता भोग्यं प्रेरितारं चेति श्रुतेः । जाग्रच्छ्रुतिरपि भवति "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यंत्रारूढानि मायया" । अयं भावः । कारयितृत्वादिगुणानां परमेश्वरेऽविद्यारोपितत्वाद्यावज्जीवोऽविद्यामनुसरति तावत्ते गुणा अपि । अविद्यानिवृत्तावभिभूयंते । कथं तर्ह्यन्यस्य संसारप्रवृत्तिरिति चेदुत्तरमेव नास्ति । अस्मत्पक्षे संसारप्रवृत्तिः पृच्छकस्य

नवैवाज्ञानेन संसारदृष्ट्यापत्तेः । अनेकजीववादे तु यावदन्यस्याविद्या तावदीश्वरानिवृत्तिर्नास्तीत्युत्तरम् । यथाहि कश्चित्तृषितः स्वप्रयत्नेन जलं गृण्हाति । वृक्षबीजानि तु स्वेन जलेनापूर्यंते । तद्वत् कश्चिन्मुमुक्षुरभिव्यक्तचेतनः स्वानुकूल्येन परमेश्वरे महावाक्यजनितां वृत्तिं स्थापयति । अन्येच परमेश्वरं मायिकगुणैरापूर्यंते । तत्र च यः परमेश्वरं स्वानुकूल्येन मनुते तस्य प्रयत्नं परमेश्वरो न निहंति । स्वानुकूल्यसंपादने तदंशत्वेन जीवस्यापि स्वातंत्र्यात् । यथाहुः प्रियचरणाः "यो मां पश्यति सर्वत्र सर्वंच मयि पश्यति । तस्याहं न प्रणश्यामि स च मे न प्रणश्यति" । अत्रेदमाकूतम् । यथा च प्राणस्य गमनागमनमंतःकरणप्रेरितमपि विशेषावधानं विनाऽनुमोदनेनैवांतःकरणं प्राणं प्रेरयति । स्वानुकूल्याभिमुखीभूतांस्त्वनुग्रहरूपविशेषावधानेन स्वे महिम्नि स्थापयति । एतदेवाह भगवान् "तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् । ददामि बुद्धियोगं तं येन मामुपयांति ते" । एवमनुमोदनरूपानुग्रहरूपा द्विविधाऽपि लीलैवेति प्रतिपादितं भक्तिलक्षणाधिकरणे । ननु तर्हि "यथाकारी यथाचारी साधुकारी साधु भवति पापकारी पापी भवति पुण्यः पुण्येन कर्मणा पापः पापेन कर्मणा" "ये यथा मां प्रपद्यंते तांस्तथैव भजाम्यहम्" । "न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः । न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते" इत्यादिश्रुतिस्मृतिविरोधः स्यात् । जीवस्य सर्वथेश्वरायत्तत्वे ब्रह्मवधादावपि स्वतंत्रत्वाभावेनापराधो न स्यात् । अतः पापपुण्यं विना सुखदुःखप्रदातृत्वे परमेश्वरस्य नैर्घृण्यवैषम्ये स्याताम् । उच्यते । एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत एष उ एवासाधु कर्म कारयति तं यमधो निनीषति । ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यंत्रारूढाणि मायया । अज्ञो जंतुरनीशोऽयमात्मनः सुखदुःखयोः । ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा । जानामि धर्मं न च मे प्रवृत्तिर्जानाम्यधर्मं न च मे निवृत्तिः । केनापि देवेन हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमी"त्यादिश्रुतिस्मृति-

विरोधस्तत्र मते किं न स्यात् । मैवं तव दर्शितवाक्यानां व्यवहारपरत्वात् । यथा च स्वप्ने दारुमयं गजं धावंतं दृष्ट्वा जाताविवेकिनः एवं दृष्टित्रयमुत्पद्यते । कार्यभूतो गजो धावति । कारणभूतो दारुर्धावंतमनुमोदते । वस्तुतस्तु न धावाति नचानुमोदते तद्वत् कार्योपाधिरयं जीवः कारणोपाधिरीश्वर इत्यादिश्रुतिसिद्धः कार्यभूतो जीवः करोति । करोत्येव जीव इत्यादि भाष्योक्तेः । कारणं परमेश्वरस्त्वनुमोदते । कार्योपाधिजीवकृतक्रतुफलदर्शनात् । "उपद्रष्टाऽनुमंता च भर्ता भोक्ता महेश्वरः । परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः पर" इति जाग्रच्छ्रुतेश्च । शुद्धं चैतन्यं तु न करोति न चानुमोदते "न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः । न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते" "नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः । अज्ञानेनावृतं ज्ञानं तेन मुह्यंति जंतवः" इति श्रुतिशतेभ्यः । इति चेत्सत्यम् । श्रुतियुक्ती त्वयैवोद्धृतेऽनुभवं तूदाहरामः । दृष्टिसृष्टिवादे सर्वमेतत् प्रतीतिजन्यं कर्तृकर्मकरणात्मकमिति मंतव्यम् । अत्राभिमानेनैव जंतुर्बद्ध्यते । किन्नाम सुखंदुःखमास्मिन् संसारे । शृणु सुखं नाम सुखित्वाहंकारप्रतीतिः । दुःखं नाम दुःखित्वाभिमानप्रतीतिः । सुखित्वमनुकूलवेदनावच्छिन्नत्वम् । दुःखित्वं प्रतिकूलवेदनावच्छिन्नत्वम् । अनुकूलत्वं रागोपष्टम्भ्यत्वम् । प्रतिकूलत्वं द्वेषोपष्टम्भ्यत्वम् । स्वस्माद्भिन्नं सुखमिति भ्रांत्यां प्रीतिः रागः । दुःखभ्रांत्यामप्रीतिर्द्वेषः । अविद्यैव रागद्वेषयोः कारणम् । तत्राहंता जीवत्वम् । सर्वदा बहिर्मुखधावनं वासना । वासनाविजृंभणे सत्तास्फूर्त्याद्याश्रयप्रदानं भगवदनुमोदनम् । इत्यनया सामग्र्या यावदविद्याऽनादिसंसारनिष्पत्तिः । अत्र सर्वत्रास्तिभातिप्रियत्वभानेऽप्यविद्याकृतसंकोचेन जीवः स्वत एव बध्यते । विद्यया तु ब्रह्मदर्शनात् स्वत एव मुच्यते । "अज्ञस्तु बध्यते येन ज्ञाता तेनैव मुच्यते" इत्यादिस्मृतिभ्यः । अत्र दृष्टान्तः । स्वदेहनिर्मितावसमर्थोऽप्ययं जीवः कारणब्रह्मपरमेश्वरनिर्मितं देहमहमिति मनुते । ईश्वरनिर्मितां स्त्रीं वा ममेति मनुते । देहस्त्रीसुखेन तत् दुःखेन च स्वं सुखिनं दुःखिनमिति

मनुते । एवं निद्रावच्छिन्नसाक्ष्यनुमोदनेन स्वप्ननिर्मितिरिवाविद्योपहितकारण-परमेश्वरेण जगन्निर्मितिः । न सा सुखाय दुःखाय च भवति । सुखदुःखे त्वाभिमानिकप्रतीतिमात्रे । अभिमानप्रतीतिं विना तदुद्भवादर्शनात् । एव-मेकजीववादेऽपि भगवदनुमोदनमविरुद्धम् । प्रतिबिंबापेक्षिकबिंबत्वारोपाव-च्छिन्नबिंबभूतचैतन्यस्य परमेश्वरांगीकारात् । अतो यावदहंकारप्रत्ययस्ताव-दात्मनि कर्तृत्वभ्रांतिः । परमेश्वरे कारयितृत्वभ्रांतिः । द्विविधाऽपि भ्रांतिः सिद्धैव । भ्रांत्या भ्रांत्यनिवृत्तेः प्रतीयमानत्वात् । ननु समसत्तायामग्निजल-विरोधवदुभयोरपि विरोधः किं न स्यादिति चेन्न । कर्तृत्वानुमोदनेन कारयितृत्वोपपत्त्यावानुकूल्योपलंभात् । अत आत्मनि कर्तृत्वभ्रांत्यां जीवस्य ज्ञानप्रयत्नोऽपि सिद्धः । "तमेतमविद्याख्यमात्मानात्मनोरितरेतराध्यासं पुरस्कृत्य सर्वे प्रमाणप्रमेयव्यवहारा लौकिका वैदिकाश्च प्रवृत्ता इति भाष्योक्तेः । एवं प्रतीत्यैव परमेश्वरस्य कारयितृत्वं फलदातृत्वं च सिद्धम् । उभयोरपि प्रतीतिसिद्धत्वाज्जीवः स्वमुक्तौ यतेत । भोगे च परमेश्वराधीनो भवेत् । यथोक्तं भारते "अप्रयत्नगताः सेव्या गृहस्थैर्विषयाः सदा । प्रयत्नेनोपगंतव्यः स्वधर्म इति मे मतिः" । एवमेकस्य पुरुषस्योभयविधवर्तनं भगवद्भक्तिं विना न संभवति । स्वप्रयत्नेन साक्षीभूत्वा निर्गुणपरमेश्वरैक्यं प्राप्य सगुणपरमेश्वरे वृत्तिसमर्पणेन व्युत्थानेऽपि परमेश्वराकारवृत्तेरविनाभावाद्भोगानामर्थादेव परायत्तत्वे सिद्धे तत्तद्भोगस्य परमेश्वरप्रसादत्वेन इष्टपरमानंदजनकत्वं सिद्ध्यति । अतो ज्ञानिनोऽपि व्युत्थाने परमेश्वरः सर्वकर्ता सर्वकारयिता चेति बोधः श्रेयान् । तत्र प्रारब्धबलेन त्वंपदानुसंधानाभावेऽनायासेन तत्पदानुसंधानोपलंभात् । व्युत्थाने त्वंपदानुसंधानेन प्रारब्धजनितायामिच्छायां सत्यां किंचित्समाधिः किंचित् व्युत्थानमित्युभयत्राप्यनवस्थितत्वात् व्यवहारलोपप्रसंगो दुःखप्राप्तिश्च । यथा च स्मृतिः "यस्य मोक्षेऽभिमानोऽस्ति देहेऽपि ममता तथा । न स योगी न वा भोगी केवलं दुःखभागसौ" । तत्पदानुसंधानं तु विषयोपहित-

चेतनभगवदाकारवृत्तित्वेनार्थादेव भवति तस्मात्सर्वकर्ता परमेश्वर इति ज्ञानिनां सुखायैव बुद्धिः। सुलभत्वेन विषयार्पणं तु साकारब्रह्मण्युपपद्यते। अतः साकारभगवत्प्रेमैवाधिकतरमिति ब्रूमः। किंतु अज्ञानिनो जाड्यदोषादिनिवृत्त्यर्थं प्रसादमपेक्षमाणस्य परमेश्वरस्य कारयितृत्वं फलदातृत्वमिति ज्ञानं हितायेति वक्तव्यम्। स्वं परमेश्वराधीनं मन्यमानोऽपि स्वाहंकारेण प्रवृत्तिशून्यश्चेत् व्रजत्येव परां गतिमज्ञोऽपि। जीवस्वातंत्र्यवादस्तु स्वाहंकारेण विषयभोक्तृत्वप्रतीतिमतामेवोपदिशति शास्त्रम्। अथवा जीवस्य स्वतंत्रप्रयत्नवादेऽपि परमेश्वरप्रसादेनाचिरादेव विघ्नबाहुल्यनिवृत्तौ सौकर्येण फलावाप्तेरस्ति कर्मणि परमेश्वरस्य तद्भक्तेश्चापेक्षा। कर्मणि परमेश्वरभक्तिः कर्मार्पणरूपैव। सैव निरूपिता भगवता "यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्। यत्तपस्यसि कौंतेय तत्कुरुष्व मदर्पणमिति"। चतुर्विधा किल भगवद्भक्तिः। सर्वकर्मार्पणरूपा प्रथमा। द्वितीया सर्वकर्मार्पणरूपाऽपि भगवद्ध्यानरूपा। तृतीया ज्ञाते तत्वे सर्वकर्मार्पणरूपा। चतुर्थी ज्ञातेऽपि परे ब्रह्मण्यनध्यस्तविवर्तस्य संयोगेऽपि वियोगोपलालनेन तद्विस्मरणे परमव्याकुलतारूपेण वा प्रेम्णा प्रेरितवृत्तिःसन् भगवदालिंगनाद्यर्थमेव सर्वकर्मसमर्पणरूपा। तत्राद्यायाः कर्मण्यपेक्षास्ति। द्वितीयायाः योगे। तृतीयाया व्यतिरेकज्ञानवतां व्युत्थाने। चतुर्थ्यास्तु गोपीवज्ज्ञानवतां प्रेमवतां च। एवमस्ति कर्मणि भक्त्यपेक्षा। न तावद्भक्तौ कर्मापेक्षा दृश्यते। अजामिलगणिकादीनामतिपापवतामपि विना कर्म भगवन्नामस्मरणेनैव गतिदर्शनात्। ननु "तदंधं तमः प्रविशंति येऽविद्यामुपासते। ततो भूय इव ते तम य उ विद्यायां रताः। विद्यां चाविद्यां च यस्तद्वेदोभयं सह। अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते" इतीशावास्यमंत्रभाष्ये कर्मोपासनासमुच्चयदर्शनात् भक्तावपि कर्मापेक्षावश्यं वक्तव्येति चेन्न। देवतात्मभावप्रापकस्य देवताज्ञानस्यैव तत्र समुच्चयोक्तेः। भगवदुपासनायां तु कर्मापेक्षाराहित्यं प्रतिपादयति कलिसंतरणोपनिषत्। "यद्दिव्यनामस्मरतां संसारो गोष्पदायते। स्वानन्य-

भक्तिर्भवति तद्रामपदमाश्रये। हरिःॐ द्वापरान्ते नारदो ब्रह्माणं जगाम। कथं भगवन् गां पर्यटन् कलिं संतरेयमिति। सहोवाच ब्रह्मा साधु पृष्टोऽस्मि। सर्वश्रुतिरहस्यं गोप्यं च तच्छृणु। येन कलिसंसारं तरिष्यसि। भगवत आदिपुरुषस्य नारायणस्य नामोच्चारणमात्रेण निर्धूतकलिर्भवति। नारदः पुनः पप्रच्छ तन्नाम किमिति। सहोवाच हिरण्यगर्भः "हरे राम हरे राम राम रामं हरे हरे। हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे"। इति षोडशकं नाम्नां कलिकल्मषनाशनम्। नातः परतरोपायः सर्ववेदेषु दृश्यते। इति षोडशकलस्य जीवस्यावरणविनाशनम्। ततः प्रकाशते परंब्रह्म मेघापाये रविरश्मिमंडलीवेति। पुनर्नारदः पप्रच्छ। भगवन् कोऽस्य विधिरिति। तं होवाच नास्य विधिरिति। सर्वदा शुचिरशुचिर्वा पठन् ब्राह्मणः सलोकतां समीपतां सरूपतां सायुज्यतामेति। यदास्य षोडशिकस्य सार्धत्रिकोटीर्जपति तदा ब्रह्महत्यां तरति वीरहत्याम्। स्वर्णस्तेयात्पूतो भवति। पितृदेवमनुष्याणामपकारात्पूतो भवति। सर्वधर्मपरित्यागपापात् सद्यः शुचितामाप्नुयात्। सद्यो मुच्यते सद्यो मुच्यत इत्युपनिषत्। "शिवो भूत्वा शिवं यजेत्" "यं सर्वे देवा नमंति मुमुक्षवो ब्रह्मवादिनश्चेत्या" दिश्रुतिष्वपि कर्मत्यागिनां मुमुक्षूणां भगवदुपास्तिः श्रूयते। ततोऽपि न भगवदुपासनायां कर्मापेक्षाऽवगम्यते। न च साकारब्रह्मोपासना हिरण्यगर्भोपासनेति वाच्यम्। यामंगीकृत्याव्याकृतोपासनासमुच्चयोंऽगीकर्तव्य इति भाष्याधारेण वक्तुं शक्यते। हिरण्यगर्भाद्ब्रह्मणोऽपि श्रीकृष्णोपनिषदि श्रीकृष्णमूर्तेर्वरिष्ठत्वोक्तेः। यथा "यष्टिका कमलासनः"। कमलासनः हिरण्यगर्भावच्छिन्नं चैतन्यं ब्रह्मा यदि तस्य भगवतो यष्टिकाऽभूत् किमुत जीवचैतन्यस्य हिरण्यगर्भस्य तत्साम्येन वर्णनम्। एवं कैवल्योपनिषद्यप्युपासनायां न कर्मापेक्षेति। "अंत्याश्रमस्थःसकलेंद्रियाणि निरुध्य भक्त्या स्वगुरुं प्रणम्ये" त्यनेन प्रकृत्य "उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकंठं प्रशान्तम्। ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्"

इति संन्यासिनामपि साकाररुद्रमूर्त्युपासनं प्रतिपादयति श्रुतिः। अत उपासनायामेव यदि न कर्मापेक्षा किमुत भक्तौ नेति वाच्यम्। उपासनाभक्ति भेदोऽपि प्रपंचितो लघुभागवतामृते। "तथान्या त्वाङ्गकरणस्थानीयोपासनाखिला। भक्तिस्तु चेतःस्थानीया तत्तत्सर्वार्थलाभतः" इति। दर्शितोऽयं भेदोऽस्माभिरपि स्वमंतव्यांशसिद्धान्ततुषारादिग्रंथेषु। अतः कर्मणोऽधिकतरा भक्तिरिति सिद्धम्। शास्त्रं च भवति "नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरंजनम्। कुतः पुनः शश्वदभद्रमीश्वरे न चार्पितं कर्म यदप्यकारणम्"। स्यादेतत्कर्मणो भक्तेर्वरिष्ठत्वम्। योगान्नाधिकतरा भक्तिः। ईश्वरप्रणिधानाद्वेति सूत्रैः समाधिपादे प्रणिधानस्य योगपर्यावसायित्वोक्तेः। साधनपादे तु भगवत्प्रणिधानस्य नियमांगत्वोक्तेश्च। उच्यते। बहुप्रकारेण प्रतिपादिता भक्तिः पुनर्द्विप्रकारा वर्ण्यते। शंकासमाधानहेतोः। द्विविधा भक्तिः गौणी परेति भेदात्। तत्र गौणी द्विधा। केवलकर्मार्पणरूपा सध्यानकर्मार्पणरूपेति। परा त्वेकविधैतावत्प्रतिपादिता। तत्र प्रथमया गौण्या नियमः सिध्यति। द्वितीयया समाधिः सिध्यति "गौण्या तु समाधिसिद्धिरिति शांडिल्यसूत्रात्। वा शब्दोऽप्यर्थे इति व्याख्यानकृद्वचनेनेश्वरप्रणिधानाद्वेत्यस्य सूत्रस्य सर्वयोगापेक्षया भगवद्भक्तेर्वरिष्ठत्वपरत्वम्। भाष्यकृद्भिरपि विभूतिपादे "ईश्वरप्रसादाज्जितोत्तरभूमिकस्य नाधरभूमिषु पराचित्तज्ञानादिषु संयमो युक्त इत्युक्तं भक्तेर्वरिष्ठत्वम्। यत्तु योगेन प्रारब्धं जेतुं शक्यमिति वदंति तदपीश्वरप्रसादादेव। तत्प्रसादं विना तन्नियममुल्लंघयितुमशक्यत्वात्। ज्ञानोत्पत्तावपि प्रारब्धशेषो भाविप्रातिबंध इत्येकेन वामदेवस्य त्रिभिर्जन्मभिर्भरतस्येत्यादिवाक्ये बहवः संगिरंते। सोऽपि भगवत्प्रसादान्निवर्तते। मानमत्र त्रिपुरारहस्यवाक्यम् "ज्ञात्वा सर्वात्मना तस्य योगक्षेमवहो भवेत्। अप्रतीक्ष्य कर्मपाकं नियतिं स्वां विधूय च"। अस्यार्थः– तत्स्वीयामिति। ज्ञात्वा सर्वात्मनाऽनध्यस्तविवर्तमनोवागादिभिः। योगक्षेमवहः अप्राप्तस्य प्राप्तिर्योगः प्राप्तस्य रक्षणं क्षेमः। कर्मपाकं संचितपाकावधिम्। अप्रतीक्ष्यापि

स्वेनैव प्रसादेन न्यूनं पूरयित्वा फले योजयति । स्मृतिश्च भवति । " यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु । न्यूनं संपूर्णतां याति सद्यो वंदे तमच्युतम् " । नियतिः भगवत्संकल्पशक्तिः ।

नन्वेवं भगवति नैर्घृण्यवैषम्ये स्याताम् । न प्राणिकर्मापेक्षां विना तन्निवारयितुमशक्यत्वात् । सत्यम् । विषमफलदाने हि नैर्घृण्यवैषम्यप्राप्तिर्भगवतो भवति । ज्ञानं तु सममेव फलम् । तत्र यततां समफलप्रदानेन न भगवान् विषमो भवति । नापि कर्मपाकमप्रतीक्ष्य शिवज्ञानप्रदानेन निर्घृणो भवति । प्रत्युत ज्ञाने यततां स्वतंत्रोऽपि भगवान् मिथ्याकर्मपाकं प्रतीक्ष्यमाण एव निर्घृणः स्यात् । तथा तस्य दयालुत्वप्रतिपादकशास्त्रव्याकोपःस्यात् तव मते । भगवद्दयालुत्वप्रतिपादकं शास्त्रं चैवम् । " अहो बकीयं स्तनकालकूटं जिघांसयाऽपाययदप्यसाध्वी । लेभे गतिं धात्र्युचितां ततोऽन्यं कं वा दयालुं शरणं व्रजेम " । ननु तर्हि विषयफलप्रदाने कर्मपाकं प्रतीक्ष्यत्येवेति वक्तव्यम् । बाढं वक्तव्यम् । सकामानां कर्मपाकं प्रतीक्ष्यैव यथाकालं फलं प्रयच्छति भगवानिति तत्रैवोक्तम् । "सर्वं जानाति तत्काले फलं दद्यान्न सत्वरम् । आर्तमर्थार्थिनं देवस्तदर्थेनाभियोजितुम्" । अस्यार्थः- यतः सर्वमुपासकहृद्गतमपि स्वभावत एव जानाति । अतस्तत्काले उपासनारंभकाल एव आर्तार्थार्थिनोर्नैवं सत्वरं फलं प्रयच्छति किंतु परिपाकानंतरमित्याह । आर्तमिति । तदर्थेन कामितार्थेन । यत्तु भारते भगवदेकशरणानां काम्यमप्यचिरेण सिध्यतीत्युक्तं तद्भगवदुपास्तिरहितसकामापेक्षयेति बोध्यम् । न निष्कामजिज्ञासापेक्षयेत्यविरोधः । एवं हरिण्याविष्टचेतसो भरतस्य विषयावेशादेव जन्मत्रयापेक्षेति ज्ञेयम् । तस्मात्प्रयत्नवादांगीकारेऽपि सर्वविघ्ननिराकरणार्थं ज्ञानजनकः परमेश्वरप्रसादः संपादनीयः । यथा चाह मधुसूदनाचार्यो गूढार्थदीपिकोपोद्घाते " पूर्वभूमौ कृतां भक्तिमुत्तरां भूमिमानयेत् । अन्यथा विघ्नबाहुल्यात् फलसिद्धिः सुदुर्लभा" । पूर्वभूमिर्मुमुक्षुदशा । उत्तराभूमिर्ज्ञानदशा । तत्रोत्तरभूमावपि भक्तिर्वासनाक्षयरक्षणायादरणीयाऽन्यथा जीवन्मुक्तिफलसिद्धिः सुदुर्लभेत्यर्थः ।

तथा चोक्तं मार्कंडेयपुराणे "ज्ञानिनामपि चेतांसि देवी भगवती हि सा। बलादाकृष्य मोहाय महामाया प्रयच्छति।" ज्ञानिनां भक्तिरहितानां मंदज्ञानिनामित्यर्थः। प्रारब्धावष्टब्धविक्षेपशक्त्युपलक्षितत्वान्महामाया। इयमेव नियतिरिती वक्ष्ये। ननु "तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः। कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन" तपआदि सर्वेषां साधनानां योगे पर्यवसानोक्तेर्न भक्तेः सर्वाधिकतरत्वमिति चेन्न। "योगिनामपि सर्वेषां मद्गतेनांतरात्मना। श्रद्धावान् भजते यो मां स मे युक्ततमो मत" इत्यग्रिमश्लोके योगादपि भक्तेः श्रेष्ठत्वोपपादनात्। अतोऽस्ति योगादपि भक्तिरधिकतरा। अस्त्वेवं; न ज्ञानादधिकतरा भक्तिर्भवितुमर्हति। "यावन्न पश्येदखिलं मदात्मकं तावन्मदाराधनतत्परो भवेदि"ति श्रीरामगीतायां भगवदुक्तेरिति चेन्न। "ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति। समः सर्वेषु भूतेषु मद्भक्तिं लभते परामित्य"न्यभगवदुक्तिविरोधात्। ननु "तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासत" इति तलवकारश्रुतिरप्युपास्यतोऽन्यद्ब्रह्म स्पष्टं वक्ति। सत्यम्। द्विविधो हि ब्रह्मणो विग्रहः। ध्यानगृहीतो लीलागृहीतश्च। तत्र ध्यानमपि द्विविधम्। आरोपचिंतनरूपं सजातीयप्रवाहचिंतनरूपं च। तत्राद्येनोपासना सिध्यत्यारोपदर्शनात्। यथा हि प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेत्यादौ स्पष्टम्। द्वितीयं ध्यानमपि द्विविधं निराकारसाकारभेदात्। तत्राद्यं निदिध्यासनरूपं द्वितीयं भक्त्यभ्यासरूपं च। तस्मिन् भक्त्यभ्यासध्याने यो विग्रह आविर्भवति स लीलाविग्रहस्य वस्त्राच्छादनमिव शुद्धान्तःकरणरूपाऽतिशयप्रेमवृत्तिस्तं ध्यानजन्यमपि विग्रहं भित्वा लीलाविग्रहं परमेश्वरमनध्यस्तविवर्तं प्रकाशयति। "भगवान् परमानंदस्वरूपः स्वयमेव हि। मनोगतस्तदाकारः किमन्यदवशिष्यते" इति मधुसूदनोक्तिप्रामाण्यात्। सैव भक्तिः। एतदुक्तं भक्तिरसायने मधुसूदनाचार्यैः "द्रुतस्य भगवद्धर्मात् धारावाहिकतां गता। सर्वेशे मनसो वृत्तिर्भक्तिरित्यभिधीयते"। तस्मात्तलवकारश्रुतिरारोपितोपास्यादन्यत्परं

ब्रह्मेत्युपदिशति न त्वनध्यस्तविवर्तं लीलाविग्रहं परमेश्वरं प्रतिषेधतीति वक्तव्यम् । " यं सर्वे देवा नमंति मुमुक्षवो ब्रह्मवादिनश्चेत्यन्यश्रुत्यनवकाशभयात् त्वयोदाहृतरामगीतावचनमपि ज्ञानात्प्रागुपासनाबोधकमिति जानीहि " ननु ज्ञाते शुद्धे परे तत्वे सच्चिदानंदलक्षणे " इत्यादिवाक्यानां का गतिरित्युच्यते । आत्मनि कर्तृत्वबुद्धिमारोप्य मयेदं संपाद्यमिदं त्याज्यमिति विधिनिषेधरूपं किंचिदपि कर्तव्यं ज्ञानिनः नास्तीति बोधयति स्मृतिः । मनोनाशवासनाक्षयतत्वज्ञानरक्षणाभ्यासं तु न प्रतिषेधति । ज्ञानोत्तरवासनाक्षयाद्यभ्यासबोधकानि वाक्यानि बहून्युद्धृतानि जीवन्मुक्तिविवेके विद्यारण्यस्वामिभिः ।

तातचरणा अपि ज्ञानिनं प्रति कामादिदोषा अवश्यमेव ग्रतीत्याहुः । "तरी हे कामक्रोध पाही । जयाते कृपेची सांठवण नाही । हे कृतांताच्या ठायीं । मानिजती ॥ २४० ॥ हे ज्ञाननिधीचे भुजंग । विषयदरीचे वाघ । भजनमार्गीचे मांग । मारक जे ॥ २४१ ॥ हे देहदुर्गीचे धोंड । इंद्रियग्रामीचे कोंड । यांचे व्यामोहादिक बंड । जगावरी ॥ २४२ ॥ हे रजोगुण मानसाचे । समूळ आसुरीयेचे । धायपण ययाचे । अविद्या केले ॥ २४३ ॥ हे रजाचे कीर जाइले । तमासी पढियंते भले । तेणें निजपद या दिधले । प्रमादमोहा ॥ २४४ ॥ हे मृत्यूच्या नगरीं । मानिजती निकियापरीं । जे जीविताचे वैरी । म्हणोनिया ॥ २४५ ॥ जयासी भुकेलिया आमिषा । हे विश्व न पुरेचि घासा । कुळवाडी याचिया आशा । चाळित असे ॥२४६॥ कौतुकें कवळिता मुठीं । जिये चवदा भुवने येकुटी । तिये भ्रांति ही धाकुटी । वाल्हीदुल्ही ॥ २४७ ॥ जे लोकत्रयाचे भातुके । खेळताचि खाय कवतुके । तिच्या दासीपणाचेनि विके । तृष्णा जिये ॥ २४८ ॥ हे असो मोहे मानिजे । याते अहंकारे घेपे दीजे । जेणें जग आपुलिया भोजे । नाचावित असे ॥२४९॥ जेणें सत्याचा भोकसा काढिला । मग असत्यदरकुटा भरला । तो दंभ रुढाविला । जगीं इहीं ॥२५०॥ साध्वी शांति नागविली ।

मग माया मागा शृंगारिली। तिये करवीं विटाळविली। साधुवृंदे ॥२५१॥ इहीं विवेकाची त्राय फोडिली। वैराग्याची साल काढिली। जितया मान मोडिली। उपशमाची ॥२५२॥ इहीं संतोषवन खांडिले। धैर्यदुर्ग पाडिले। आनंदरोप सांडिले। उपटूनिया ॥२५३॥ इहीं बोधाचीं रोपें लुंचिलीं। सुखाची लिपीहि पुसली। जिव्हारीं आगी सूदली। तापत्रयाची ॥ २५४ ॥ हे आंगा तव घडले। जीवींच आथी जडले। परी नातुडती गंवसले। ब्रह्मादिकां ॥२५५॥ हे चैतन्याचे शेजारीं। वसती ज्ञानाच्या एकाहारीं। म्हणोनी प्रवर्तती महामारीं। सांवरतीना ॥ २५६ ॥ हे जळेविण बुडविती। आगीविण जाळिती। न बोलता कवळिती। प्राणियाते ॥ २५७ ॥ हे शस्त्रेविण साधिति। दोरेविण बांधिती। ज्ञानियासी तरी वधिती। पैज घेऊनी ॥२५८॥" तस्माज्ज्ञानानंतरमपि विषयदोषदर्शनेन वासनाक्षयाद्यभ्यासः कर्तव्य इति तत्रैवोक्तमस्मदनुग्रहार्थं करुणासागरैः। "म्हणोनी इंद्रिये एके। जाणतोनि पुरुखे। लाळाची ना कौतुके। आदि करूनी ॥ २०२ ॥ हा गा सर्पेसी खेळो येईल। कीं व्याघ्रसंसर्ग सिद्धि जाईल। सांगे हालाहल जिरेल। सेविलिया काई ॥ २०३ ॥ देखे खेळता अग्नि लागला। मग तो न सावरे जैसा उधवला। तैसा इंद्रिया लळा दिधला। भला नोहे ॥२०४॥ एरवीं तरी अर्जुना। या शरीरा पराधीना। कां नानाभोगरचना। मेळवावी ॥ २०५ ॥ आपण सायासें करूनी बहुतें। सकळहि समृद्धि जाते। उदो अस्त या देहाते। प्रतिपाळावे कां ॥ २०६ ॥ सर्वस्वे शिणोनी येथें। आर्जवावी संपत्ति जाते। तेणें स्वधर्म सांडुनि देहाते। पोखावे काई ॥२०७॥ मग हे तव पांचमेळावा। शेखी अनुसरले पंचत्वा। ते वेळीं केला कें गिवसावा। शीण आपुला ॥२०८॥ म्हणोनी देहभरण। ते जाणे उघडी नागवण। यालागी येथ अंतःकरण। देयावेना ॥२०९॥" एवं केवलज्ञानिनामपि दृष्टसुखार्थं स्वप्रयत्नेन विषयदोषदर्शनादिभ्यः वासनाक्षयाद्यभ्यासः प्रदर्शितः। भक्तिमतां ज्ञानिनां तु विषयदोषदर्शनं विना

विषयवद्भासमानलीलावर्णनेनैवानायासेन वासनाक्षयाद्यभ्यासः सिध्यतीति पुनरप्याहुरंतःकरणतिमिरदिवाकरचरणाः । “ जे शुकादिक दादुले । विषय जिणावया निघाले । ते विषयाचि वाखाणिता जाहले । भाट जयाचे । ” ननु “ तस्य तावदेव चिरम् ” “ प्रारब्धकर्मणां भोगादेव क्षयः ” “ सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि । प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ” प्रकृतिः पूर्वकृतधर्माधर्मसंस्कारः प्रारब्धलक्षण इति श्रुतिस्मृतिभगवदुक्तितद्भाष्यटीकादिभ्यो ज्ञानानंतरं प्रारब्धभोगावश्यकत्वात् “ ग्रंथिभेदेऽपि संभाव्या इच्छा प्रारब्धदोषत ” इतीच्छादीनां प्रारब्धेनैव ज्ञानिनि संभवात् “ प्रारब्धं नो नाशमीयान्नियतिर्नान्यथा भवेदित्यागमाच्च वासनाक्षयाद्यभ्यासो व्यर्थ इति चेत्सत्यम् । भक्तिरहितानां ज्ञानिनां प्रारब्धकर्मोल्लंघयितुमशक्यत्वात् । भक्तिसहितानां ज्ञानिनां भगवत्प्रसादादेव इष्टपरमानंद प्राप्तिरिति । न तत्र प्रारब्धाद्यपेक्षेति प्रतिपादयति स्म भगवती हेमलेखा त्रिपुरारहस्ये सप्तमाध्याये “ प्रारब्धं नियतिर्वापि महेशविमुखे भवेत् । एतन्मृकंडुतनयेऽत्यंत ईश्वरतत्परे ” । अस्यार्थः— ननु प्रारब्धनियत्योरप्युल्लंघने प्रारब्धं नो नाशमीयात् । नियतिर्नान्यथा भवेदित्यागमविरोध इति चेदाह । प्रारब्धमिति । महेशविमुखे एव प्रारब्धनियत्योर्माहात्म्यमित्यागमतात्पर्यमिति भावः । नैतदागमैकसिद्धं किंत्वैतिह्यसिद्धमपीत्याह । एतदिति । अतः पूर्वोदाहृतभगवद्वाक्यस्याप्ययमर्थोऽभिगंतव्यः । भूतान्येव प्रकृतिं यान्ति तत्र मम वान्यस्य निग्रहः किं करिष्यति । स्वस्य निग्रहः स्वेनैव कर्तव्य इति भावः । तत्रैवोक्तं भगवता पुनः “ इंद्रियस्येंद्रियस्यार्थे रागद्वेषौ व्यवस्थितौ । तयोर्न वशमागच्छेत्तौ ह्यस्य परिपंथिनौ ” । पुरुषयत्नरहितानामेव प्रारब्धनियती अनुल्लंघनीये इत्युक्तं पुनस्त्रिपुरारहस्ये । “ यद्यप्यनुल्लंघनीये प्रारब्धनियती खलु । तथाप्यपौरुषाणां तत्प्रारब्धमनपोहनम् ” कोऽसौ पुरुषयत्न इत्याशंक्य प्राणायामादियोगलक्षणः प्रारब्धं जेतुं समर्थः । तमाह हेमलेखा “ अत एव प्राणायामैः प्रारब्धं

परिजीयते। न तान् दृष्टेषु दुःखेषु प्रारब्धं योजयेत् फलम्" ननु तर्हि वैराग्याद्यभ्यासपूर्वकवृत्तिनिरोधेन दृष्टं सुखं संपादनीयं स्वप्रयत्नबलादित्यागतम्। तेन पूर्वोपपादितपरमेश्वरसहायमेव विनिर्गतम्। कुतस्तर्हि भक्तेरपेक्षा दृष्टपरमानंदलाभायेति चेच्छृणु। ज्ञानानंतरं प्रारब्धावष्टब्धाविक्षेपशक्त्यवस्थानेन यावद्विदेहकैवल्यं भगवन्नियतिरपि दुःखे फले योजयति। यथा चाधिकारिका वसिष्ठादयो योगिनोऽपि शतपुत्रमरणादिदुःखशोकेनाभिभूता इति स्मरंति। तथा केवलज्ञानिनां वैराग्याद्यभ्यासरूपनिरोधप्रयत्नेन प्रारब्धजयेऽप्यनुल्लंघनीया नियतिर्योजयत्येव दृष्टदुःखादिफले भक्तिरहितं ज्ञानिनं प्रति। अत एव वासिष्ठे प्रयत्नेन दैवं जेतुं शक्यत इति वसिष्ठेन रामं प्रत्युक्तं मुमुक्षुप्रकरणे। "सर्वमेवेहहि सदा संसारे रघुनंदन। सम्यक्प्रयुक्तात्सर्वेण पौरुषात्समवाप्यते" अतः पुरुषयत्नेन यतितव्यं यथा तथा। पुंसा तंत्रेण सद्योगायेनाश्वद्यतनो जयेत्। तावत्तावत्प्रयत्नेन यतितव्यं सुपौरुषम्। प्राक्तनं पौरुषं यावदशुभं शाम्याति स्वयम्"। पुनर्निर्वाणप्रकरणे तु तपश्चरंतं व्याधं प्रति केनचिद्दाविणाऽस्मिन् जन्मनि ते ज्ञानं न भविष्याति। त्वं परस्मिन् जन्मनि भविता राजा। भवितव्यं भवत्येवेत्युक्तम्। यन्मुमुक्षुप्रकरणे दैवनिराकरणेन ज्योतिषादिदैववादिनां मतं निराकृतं तत्तु निर्वाणप्रकरणे प्रमाणतया गृहीतम्। तथाप्यनयोः परस्परविरुद्धवाक्ययोरयमाशयः। दैवं हि फलोन्मुखं कर्म। तद्योगरूपेण प्रयत्नेन जेतुं शक्यते। एवमस्य भूयादिति सर्गादावीक्षणरूपा भगवत्संकल्परूपिणी शक्तिर्नियतिः सा यदपि प्राणिकर्मसापेक्षा तथापि प्रत्येकव्यष्टिकर्मापेक्षया समष्टिरूपत्वाद्भगवत्संकल्परूत्वाच्चैकव्यष्टिजीवप्रयत्नेन न लंघयितुं शक्या। जडप्रारब्धापेक्षया चेतनाश्रयाया भगवन्नियत्याः बलवत्वात्। एतदेव पुनरप्याह भगवती हेमलेखा। "नियतिः स्यादीशशक्तिः संकल्पैकस्वरूपिणी। सत्यसंकल्प एवेशोऽनुल्लंघ्या ह्यत एव सा। अयमाशयः—द्विविधं हि प्राणिकर्म। जन्मांतरमपेक्ष्य फलदायकं कल्पांतरमपेक्ष्य फलदायकं चेति भेदात्। तत्र चाद्यं प्रारब्धसंज्ञम्। द्वितीयं भगवत्संकल्पावष्टब्ध

नियतिसंज्ञम् । अत एवोक्तं त्रिपुरारहस्यटीकायाम् । नियतिः प्रारब्धस्योपलक्षकमिति । तयोः समष्टिव्यष्टिवत् तादात्म्याभिप्रायेण । अयोगिनां ज्ञानिनां तु द्वेऽपि कर्मणी अनुल्लंघनीये । योगिनां ज्ञानिनां तु नियत्यनुकूलेन प्रयत्नेन प्रारब्धजयो भवति । नियतिप्रतिकूलो योगिनां प्रयत्नश्चेत् बहवो विघ्नास्तं प्रयत्नमभिभवंति । तस्मादीश्वरप्रसाद एव प्रयत्नवद्भिरप्रयत्नवद्भिश्च सर्वैः संपाद्यः । दयालुना परमेश्वरेण जगद्विषमव्यवस्थाकारिण्या अपि नियतेः सर्वसमफलमुक्तिप्रदानेऽनाधिकृतत्वात् । यद्यपि जीवन्मुक्तानामभ्यासतारतम्यात् दृष्टसुखतारतम्यं वेदान्तिनो वदंति तथापि तस्य वासनाजन्यत्वाभावे सममुक्तावन्तर्भूतत्वात् तत्प्रदानेऽपि नियतिं नांगीकरोति भगवान् । भगवत्संकल्परूपा वास्तु नियतिस्तथापि तेनैवोपसंहर्तुं शक्यते । तस्य स्वतंत्रत्वात् । मुक्तेश्च समत्वात्तत्प्रदाने न नैर्घृण्यं वैषम्यं च भवति । ननु तर्हि सर्वेषां स दयालुः विना प्रयत्नं कैवल्यं किमर्थं न प्रयच्छतीति चेदाकर्णय । न हि कैवल्यं नाम अन्नप्रदानवद्देयमस्ति । किंतु स्वाज्ञानप्रहाणेन स्वस्यैव ब्रह्मभावापत्तिरिति । अतो जीवस्य श्रवणादिप्रयत्नस्तत्रापेक्षत एव । परमेश्वरो दयालुरपि न मोहवशः । अथवा दत्तमपि कैवल्यं परमेश्वरेण जीव एव विषयवासनावशान्न गृण्हाति । अतः किंचिदभिमुखीभूतं जीवं निवृत्तचांचल्यं दुग्धार्थिनं बालकमिव मातृवत्परमेश्वरो दुग्धवत् कैवल्यं यच्छति । किंवा स्वप्नेऽकुंठितः स्वसंकल्पः साक्षिणि कुंठितो भवति तद्वत्सर्वस्रष्टावकुंठिताऽपि भगवत्संकल्पशक्तिर्नियतिः प्रतिबिंबापेक्षिकबिंबत्वारोपावच्छिन्नबिंबभूते शुद्धे वा भगवद्रूपे साक्षिणि कुंठितैव भवति । नियतेराश्रितस्वभावत्वाद्भगवतश्च तदाश्रयात् । अतो भगवत्परायणस्यापि हृदये भगवदाविर्भावात्तत्रापि नियतिः कुंठितैव भवति । "कुंठिता साऽपि भवति परमेशपरायणे । अकुंठिताऽपि भवति यतः सा तादृशी भवेत्" इति त्रिपुरारहस्ये हेमलेखोक्तिः । व्याख्यातश्चायं श्लोकः श्रीनिवासबुधैरेवम् । "सापि अनुल्लंघ्या नियतिरपि । नन्वनुल्लंघ्यत्वं कुंठितत्वमित्युभयं विरुद्धमिति चेदाह । अकुंठितेति । यतः

सा नियतिः तादृशी परमेश्वरपरायणे कुंठितस्वभावैव । अयं भावः— प्रारब्धं हि फलोन्मुखं कर्म । तच्च योगिना जीयते इति । तथैव तन्नियत्याऽपि नियतं परिकल्प्यते । प्रकृते निष्कामोपासकोऽपि कर्मयोगित्वेन योगी भवेदित्यनेनापि प्रारब्धं जीयते । तथा च प्रारब्धमयोगिन एवानुल्लंघ्यम् । नियतिश्च भगवत्संकल्परूपा सा सर्वथानुल्लंघ्यस्वभावैव । तथापि भगवत्परायणे सा कुंठिता भवतीति । तत्तस्याः स्वभाव एवेति । "तस्मात्कुतर्कं संत्यज्य महेशं शरणी कुरु । अहेतुकतया स त्वां नियोजयति श्रेयसि" । अस्यार्थः— यस्माद्भगवत्परे प्रारब्धनियत्योरप्यनंतरायत्वं तस्मादहेतुकतया निष्कामत्वेन इति स्वारस्यम्" । अभिमानश्चेन्मर्कटन्यायेन प्रयत्नसाफल्यार्थं दीनता चेन्मार्जारन्यायेन सहजभगवदनुग्रहार्थं च परमेश्वरमेव शरणं गच्छेदिति तात्पर्यम् । हृदयप्रियचरणा अपि "क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् । अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते" इति निर्गुणज्ञानवतां कष्टतरतां प्रकृत्य "ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः । अनन्येनैव योगेन मां ध्यायंत उपासते । तेषामहं समुद्धर्ता मृत्युसंसारसागरात् । भवामि न चिरात्पार्थ मय्यावेशितचेतसाम्" इति स्वभक्तानां सर्वसौकर्यमाहुः । सौकर्यं नाम निरोधश्रमाभावः प्रवृत्तवृत्तिभिरेव भगवत्प्राप्तिरिति । भगवद्वचनपि "न मय्यावेशितधियां कामः कामाय कल्पते । भर्जिताः क्वथिता धानाः प्रायो बीजाय नेष्यते" । वक्ष्यत्याचार्योऽपि "कामक्रोधाभिमानादिकं तस्मिन्नेव करणीयम्" । अत इदमाकूतम् । ज्ञानिनां योगप्रयत्नवतां प्रारब्धजयेऽपि प्रतिकूलनियतेः प्राबल्याद्भगवद्भक्तिं विना न भवति दृष्टसुखप्राप्तिः । "युंजानानामभक्तानां प्राणायामादिभिर्मनः । अक्षीणवासनं राजन् दृश्यते पुनरुत्थितमिति" मुचकुंदं प्रति भगवद्वचनात् । तस्मादस्ति ज्ञानेऽपि भक्त्यपेक्षा ।

फलरूपत्वात् ॥२६॥

ननु "असेवयाऽयं प्रकृतेर्गुणानां ज्ञानेन वैराग्यविजृंभितेन । योगेन मय्यर्पितया च भक्त्या मां प्रत्यगात्मानमिहावरुंधे" इत्यत्र भगवद्भक्तेः

विवेकादिभिः समुच्चयप्रतिपादनान्न ज्ञानकर्मभ्यो भक्तेरधिकतरत्वमिति चेन्न; फलरूपत्वात्। इतश्च पुनर्भक्तेरधिकतरत्वं गम्यते फलरूपा हि सा न साधनरूपा। ननु "भक्तिर्जनित्री ज्ञानस्य भक्तिर्मोक्षप्रदायिनी"त्यादौ ज्ञानसाधनत्वेन भक्तेः स्मरणात् कथं फलरूपत्वमवगम्यते। उच्यते। भवताऽपि कथं भक्तेः ज्ञानसाधनत्वमवगम्यते। प्रकारेण स्वरूपेण वा। आद्ये इष्टापत्तिः। अन्त्ये दोषापत्तिः। भगवति परमप्रेमैव भक्तेः स्वरूपम्। तद्यदि ज्ञानसाधनं तदा स्वात्मप्रेमाऽपि ज्ञानसाधनं भवतु। तथात्वे आनंदस्वरूपस्य चित्साधनत्वापत्तिः। न वयं द्वैतीव भगवतः जीवभिन्नत्वं ब्रूमः येन 'न वा अरे देवानां कामाय देवाःप्रिया भवंती"त्यादिश्रौतप्रतिषेधः प्राप्नुयात्। अहंकाररहितस्य स्वात्मप्रेम्णः भगवत्यनध्यस्तविवर्ते एकीभूतस्यैवास्माभिर्भक्तित्वेन स्वीकारात्। नापि भक्तिः क्रिया मानसकर्मवत् किंतु यथा ज्ञानं प्रकाशकं तथा प्रेम सुखरूपमतोऽसाध्यमेव। तस्माज्ज्ञानसाधनं भक्तिरस्तीति वदतामविद्याविलसितमेव। यत्कुत्रचिद्भक्तेः ज्ञानफलमित्युक्तं तदपि न कार्यकारणतयेति बोध्यम्। किंत्वाऽनुषंगिकतयैवानंदलाभेऽवश्यं चिल्लाभदर्शनात्। शास्त्रमपि भक्त्यानुषंगिकं ज्ञानमुत्पद्यते इति वक्ति। "वासुदेवे भगवति भक्तियोगः प्रयोजितः। जनयत्याशु वैराग्यं ज्ञानं यत्तदहैतुकम्"। अहैतुकमानुषंगिकम्। अस्तु वा गौण्याः फलं ज्ञानं दुर्जनतोषन्यायात्। पराभक्तेस्तु ज्ञानं फलमित्याक्षेप्तुमपि न शक्यते। समुच्चयश्रवणात्। यथाहि तत्वज्ञानमनोनाशवासनाक्षयाणां समुच्चयो जीवन्मुक्त्यर्थं गृण्हंति वेदान्तिनस्तथा तत्वज्ञानविरागाणामपि दृष्टसौख्यार्थं परमप्रेमप्रयोजनेन वा समुच्चयं गृण्हीमो वयं मधुराद्वैतिनः। शास्त्रं च भवति। "भक्तिः परेशानुभवो विरक्तिरन्यत्र चैषत्रिक एककालः। प्रपद्यमानस्य यथाश्नतः स्युस्तुष्टिः पुष्टिः क्षुदपायोऽनुघासम्"। "इत्यच्युतांघ्रिं भजतोऽनुवृत्त्या भक्तिर्विरक्तिर्भगवत्प्रबोधः। भवंति वै भागवतस्य राजन् ततः परां शान्तिमुपैति साक्षात्"। अत्र परां शांतिमिति शब्देन ज्ञानस्य फलं मुक्तिरित्युक्तम्। "ज्ञानादेव तु कैवल्यमिति"

श्रुतेः। नहि ज्ञानं फले सहायमपेक्षते दृष्टफलजनकत्वात्। दृष्टसुखप्राप्तिरानुषंगिकी भक्तेः सामर्थ्याद्भवति। यदपि जीवन्मुक्तिसुखार्थं वेदान्तश्रवणमेव कर्तव्यम् "आसुप्तेरामृतेः कालं नयेद्वेदान्तचिंतयेति" श्रुतेस्तदपि भोजनादिसमये बाधितविषयस्फूर्तेः पुनर्दुःखसंभवात् भगवति विषयार्पणेन चानायासेनैव तदनुसंधानलाभः। यदपि भोगकालेऽपि ब्रह्मानुसंधानं शक्यं तथापि नामरूपपरित्यागे विषयदोषदर्शनेनेंद्रियानिरोधेन किंचिद्दुःखप्रत्ययो भवत्येव। भगवति तत्समर्पणेन तु न भवति किंचिदपि दुःखप्रत्ययः। ननु भक्तानामाधिकारिकप्रारब्धं भवतीत्युपपादितं गूढार्थदीपिकायां मधुसूदनाचार्यैः। वसिष्ठादयश्चाधिकारिका एव। परं च तेषामपि शतपुत्रमरणादिदुःखप्राप्तिर्दर्शितैव। सत्यम्। किंतु ममैते पुत्रा इति किंचिन्ममताध्यासस्तत्राधिगंतव्यः। भक्तानां तु भगवानेव पुत्रादिस्तस्य नित्यत्वात्तन्मरणदुःखादिकमपि न स्यात्। गूढार्थदीपिकायामाधिकारिकप्रारब्धमुपासकानां भवतीत्युक्तम्। अत उपासकफलदृष्टान्तेन न भक्ताः शंकनीया भवंति। भक्ता अप्याधिकारिकाश्चेत् लोकोपदेशार्थमेव तेषां सर्वमाचरणं भवति। जीवन्मुक्तानामाधिकारिकाणामपि यत्र कुत्रापि ममताध्यासश्चेत्तर्ह्यवश्यकमेवासौ शोकप्रद इति शतपुत्रमरणशोकक्रुद्धिर्वसिष्ठैः प्रदर्शितम्। तस्माद्यथा सगुणोपासनाफलेन मुक्तस्य सगुणेश्वरभावापत्तिराक्षेप्तुं न शक्यते तथोपासकदृष्टान्तेन भक्तिरप्याक्षेप्तुं न शक्यते। तस्याः सच्चिदानंदरूपत्वात्। उक्तं च मधुसूदनस्वामिभिर्भक्तिरसायने "नवरसमिलितं वा केवलं वा पुमर्थं परममिह मुकुंदे भक्तियोगं वदंति। निरुपमसुखसंविद्रूपमस्पृष्टदुःखं तमिह सकलतुष्ट्यै शास्त्रदृष्ट्या व्यनज्मि"। तस्मात्फलरूपैव भक्तिः। यथा विदेहमुक्तावपि सत्यसंकल्पादिमता परमेश्वरेणसहाभेदो भवति। अत एव मुक्तानामुपासना प्रोक्ता शांतिपर्वणि। यदपि विद्वान् नामरूपे विहाय स तं परं पुरुषमुपैति दिव्यमिति न मुक्तानां भगवत्पृथगुपासनमुचितं तदपि गुरुत्वस्मृत्या सांप्रदायिकपरंपरास्मृतिवत्तेषामप्युपासनं स्यात्। वस्तुतस्त्वीश्वरादपृथग्भूतानां तेषां भगवदुपासनेनैवोपासना भवति। यद्यपि

सत्यसंकल्पादयोऽविद्यापेक्षिकास्तदपि ब्रह्मविद्ययैवेश्वरे ते समारोपिताः। यावदनाद्यनंतसंसारस्तिष्ठति तावदेकस्मिन् मुक्तेऽप्यपरब्रह्माविद्यापेक्षयेश्वरे ते गुणास्तिष्ठंति। तद्वत्संबंधोऽपि पराऽपेक्षया तिष्ठत्येव भगवतीति भगवतैवोक्तम्। "पिताहमस्य जगतो माता धाता पितामहः। वेद्यं पवित्रमोंकारऋक्सामयजुरेव च। गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत्"। पराविद्यापेक्षयैव ब्रह्मणि तटस्थलक्षणं ज्ञानबोधकं संबंधश्च भक्तिबोधकः श्लोकेऽस्मिन् दर्शयति भगवान्। जगज्जन्मादिमत्वं च तटस्थलक्षणं तत्र स्वस्मिन् जगज्जन्मादिकारणत्वमाह पिताहमस्येति। त्वं यदि जगत्पिता तर्हि भवतु निमित्तकारणम्। उपादानकारणं तु सांख्यपरिकल्पितप्रधानवत् त्वत्तोऽन्यदेव स्यान्नेत्याह। माताधातेति। माता जन्मावच्छिन्नोपादानकारणम्। धाता स्थित्यवच्छिन्नोपादानकारणम्। तर्हि त्वं हिरण्यगर्भ एवासि। तस्यापि जगन्मातृत्वपितृत्वश्रवणादिति चेदाह। पितामह इति। पितामहः जगत्पितुर्हिरण्यगर्भादपि ज्यायान् यः परमेश्वरः सोऽहमेव। एवमुत्पत्तिस्थितिकारणत्वं स्वस्मिन्नुक्त्वा लयकारणत्वमाह गतिरिति। गतिः संप्रतिष्ठास्थानमहमेवेति। एतैः पदैः "यतो वा इमानि भूतानि जायंते येन जातानि जीवंति यं प्रयंत्यभिसंविशंति" इत्यस्या भृगुवल्लीश्रुतेरर्थः प्रदर्शितः। भक्त्यर्थं संबंधं दर्शयति भर्तेति। भर्ता माधुर्यप्रियोऽहमेव। सर्वसंबंधी मनोरथानहमेवैकः पूरयितेत्याह प्रभुरिति। अगस्तिसंहितायामप्युक्तम्। "लोके हि दृश्यते साक्षात् संबंधस्य प्रगल्भता। किं पुनर्जानकीजानौ सर्वभावप्रपूरके।" स्वस्य त्वंपदेनसह ऐक्यमाह साक्षीति। विदेहमुक्तावपि "एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायण" इति सूत्रोपपादिता सगुणेश्वरभावापत्तिमाह निवास इति। निवासो नितरां वासोऽहमेव। एवं त्वं चेत्तर्ह्यतिकाठिण्येन लभ्योऽसि प्रारब्धादिविघ्नबाहुल्यदर्शनान्नेत्याह। शरणमिति। विदेह मुक्तावपि संबंधदर्शयन्नाह। सुहृदिति। अत्र च भवति स्कांदप्रमाणम्। "रहस्यं त्विदमेतस्य प्रकृतेः परमुच्यते। प्रकृत्या

खेलतस्तस्य लीलाऽन्यैरनुभूयते । महावैष्णवखंड अ. १ श्लो. २४ )
अस्यार्थः–अनघ्यस्तविवर्तमेतस्य रहस्यं तत्प्रकृतेः परम् । प्रतिबिंबापेक्षिकबिंबभूतत्वात् । स यदा जीवकर्मानुसारेण जगत्कर्तृत्वादिलीलामाश्रयते तदैव जीवास्तल्लीलामनुभवंति । मुख्यां लीलां तु स एव भगवान् जानाति तद्भक्तो वा । द्विविधामपि लीलामाह " लीलैवं द्विविधा तस्य वास्तवी व्यावहारिकी । वास्तवी तत्स्वसंवेद्या जीवानां व्यावहारिकी " । वास्तवी अनध्यस्तविवर्तत्वेन अनुग्रहरूपा । व्यावहारिकी कर्मफलप्रदानादिरूपा । आद्या स्वसंवेद्या द्वितीया तु जीवानां गोचरा । आवयोर्गोचरेयं तु तल्लीला व्यावहारिकीति तत्रैवोक्तम् । तत्राद्यैव लीला भक्तिवर्धिनी । " म्हणोनी तिहीं जें प्रेम धरिलें । तेचि आमुचे देणें उपायिलें । परी आम्ही देयावें तेहि केलें । तिहीं म्हणिये " ॥ इत्यादि तातचरणवचनात् ।

अपूर्णम्



॥ श्री ज्ञानेश्वर माऊली समर्थ ॥

श्री गुरवे नमः

श्रीरामगुरोश्चरणसेवायाम्

# बालवासिष्ठम्

## प्रथमं प्रकरणम्

उमा माता पिता शंभुर्गुरुर्ज्ञानेश्वरो महान् ।
पतिः कृष्णो राधिकाद्या भगिन्यो गोपिका मम ॥ १ ॥
पञ्चायतनमित्येतद् हृद्यास्थाप्य प्रपूज्य च ।
वसिष्ठादीन् गुरून्नत्वा मधुरं किंचिदुच्यते ॥ २ ॥

" ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः" "ब्रह्मैवाविद्यया संसरति" इत्यत्र साऽविद्याऽनादिः । ज्ञाननाश्या । नह्यविद्याया उत्पत्तिर्ज्ञातुं शक्यते । अविद्यादशायामविद्याग्रस्तत्वादविद्यानाशेऽविद्याभावात् । सैव चित्तत्वं प्राप्ता सती जगद्विजृंभिणीभवति ॥ "नह्यस्त्यविद्या मनसोऽतिरिक्ता मनो ह्यविद्या भवबंधहेतुः" इति विवेकचूडामणावाचार्योक्तेः । अतः पिंडविवक्षायां देहो मन आत्मा । ब्रह्मांडविवक्षायां दृश्यमविद्या ब्रह्म चेति पदार्थत्रितयं ब्रह्मज्ञानार्थं गृह्यते । तत्र देहादिदृश्यस्य च परिणामित्वाज्जडत्वात्तुच्छत्वान्न विचारो युक्तः । न वा आत्मनो ब्रह्मणो वा । तस्य च सर्वविचारफलत्वात् । तस्मादादौ मायारूपं चित्तमेव विचारणीय मुभयभागित्वात् । तच्चित्तमेवाशुद्धं दृश्यरूपेण परिणमति । अंतःमुखं शुद्ध-मात्मगोचरं विद्यारूपेण परिणमति । तत्र प्रथमं बंधाय द्वितीयं मोक्षायच भवति । "मन एव मनुष्याणां कारणं बंधमोक्षयो" रित्यादिश्रुतेः । 'तस्मिन्विनष्टे सकलं विनष्टं विजृंभितेऽस्मिन् सकलं विजृंभितमि'त्याचार्योक्तेश्च । अतः प्रथमस्य चेतसः क्षपणाय द्वितीयस्य वर्धनाय च वासिष्ठानु-

---

टीप:– उभयचेतनाधर्मो जडधर्मश्च

सारेणादावुपायाः परियुज्यन्ते । चित्तं मायारूपं यदा प्रसीदति तदा दुःखशोकादिना संततया तत्परिमार्ष्टुमिच्छति । इतीदं चित्तचेष्टनं गुरुं विनैव भवति । स वैराग्यप्रकरणस्य विषयः । तदा सर्वविषयाणां त्याग एव युक्त इति प्रतिभाति । किंतु विषयाणां दुःखप्रतीतेस्तेषां त्यागान्मनसो धैर्यशून्यता उपजायते । यदि सर्वेषां विषयाणां प्रयतने दुःखमेव किं तर्हि करणेनेत्येवं मनः शोकसम्मग्नं भवति । तदा नवात्मज्ञानं न वा विषयभोग इत्युभयतोऽपि च्युतिर्दृश्यते । तेन चालस्यादिसामग्र्या तमो वर्धते । प्रारब्धादौच निश्चयो भवति । एवं विरक्तत्वेऽपि वैकल्यविनाशाय ब्रह्मज्ञाने प्रयत्नवर्धनाय च गुरोर्मुखान्मुमुक्षुव्यवहारप्रकरणस्य समारंभः । अस्मिन् प्रयत्नबुद्ध्या धैर्यं वर्धते । पूर्वप्राप्ता विरक्तिरेवोपरतिरूपेण परिणमति । इत्यत्र पुनः गुरोः सेवया †प्रपत्तित्रयं प्राप्तौ परिप्रश्ने "न ते दुःखरूपः शत्रुः वस्तुतः कुत्राप्यस्ति किंतु तव चेतस्येव तद्विजृंभति । तस्य क्षयाच्च क्षयं यातीति गुरोरुत्तरम् । संक्षेपप्रकरणम् । तस्य च यथार्थज्ञानाय वृत्त्युपाधिकचैतन्यं दृष्टिरूपं सृष्टिर्भवति । तस्य स्थिरत्वेन च तिष्ठति । उपशमेन क्षीयते । विनाशेन सर्वथा निर्यातीति सर्वेषां प्रकरणानां निष्कर्षः । इत्येवं संक्षेपेणावधारणाद्विस्तरेणाग्रे प्रतिपाद्यते ॥ हरिः ॐ तत्सत् ॥ श्रीरामगुरोश्चरणसेवायां संक्षेपप्रकरणं प्रथमम् ॥

॥ श्रीरामगुरवे नमः ॥

## द्वितीयं प्रकरणम्

किं चित्तं कथं तद्द्विविधं किमशुद्धचित्तस्य शुद्धचित्तस्य च लक्षणं द्वयोरपि नाशसाधनानि मोक्षश्च सर्वमेतद् व्याख्येयम् ॥ क्लेशहानाय व्याख्यानद्वारोपचीयते ॥ तत्र प्रचयगमनाभ्यां शिष्यस्य ब्रह्मज्ञानावस्थितौ विश्वानुग्रहसाहाय्यं मंगलमाचरति ॥ दिक्कालादीति । देशकालवस्तुपरिच्छेदरहितः

† प्रपत्तित्रय–प्राणेपात, परिप्रश्न, सेवा.

परमात्मा तस्मै नमः ॥ ननु अस्मिन् शास्त्रे कोऽयं परमात्माशब्देनोच्यते । ब्रह्म जीवः सृष्टिर्वा । आद्ये शुद्धत्वात्तत्र नमस्कारासंभवः । द्वितीये अविद्यावद्धत्वात् तृतीये जडत्वादपिच नात्र सत्तात्रयवादवत् कोऽपि ईश्वरः स्वीकृतं इति- चेत्सत्यम् । ब्रह्मभूतत्वादत्र नमस्कारयोग्यो गुरुरेव । न सत्तात्रयवादिनिमित्तको हीशः गुरोरपि बोधनिमित्तक आत्माकारवृत्तेः स्वीकारात् । यद्यपि ' उपदेशक्रमोराम ' इत्यादिवक्ष्यमाणवचनैर्मुमुक्षुदशायां गुरोः कादाचित्क्यावश्यकता । सिद्धदशायां तु नास्तिगुरोरपेक्षेति अग्रिमग्रंथादाक्षि- प्यते तदपि अस्मिन्नेव शास्त्रे वसिष्ठरामयोः परस्परसंवाद- स्वीकारात् प्राणायामादिषु च गुरोरपेक्षाऽत्यंतबोधनात् तातवचनाच्चास्ति दृष्टिसृष्टिवादेऽपि गुरोरपेक्षा । तातमतं तु सर्वतत्वविदविलक्षणमेव वर्तते । सर्वेऽपि तत्ववादिनः ब्रह्मज्ञानप्राप्त्यनंतरं तन्नाशे गुरुरपि समर्थो न भवतीति प्रवदन्ति । तातास्तु ब्रह्मज्ञानानंतरमपि गुरोरपेक्षास्तीति अमृतानुभवे वदान्ति । तत्रेदं वचनं । यस्य गुरोः कृपावशात् जीवोऽपि ब्रह्म भवति हस्तगतं ब्रह्मापि यदौदासिन्याद् दूरं गच्छति । हस्तगतमपरोक्षीकृतमपि । ओवीः । यस्य श्रीगुरोः कृपा जीवम् । प्रापयति ब्रह्मभावम् । अपरोक्षब्रह्माप्येवम् । यदौदासित्यादपयाति । ( जयाचेनि सावायें । जीवु ब्रह्म उपरु लाहे । ब्रह्महीं हातातील जाये । उदासें जेणें ॥१६॥ अमृतानुभव प्र. २ ) इति द्वितीयाध्याये तृतीयाध्याये च तद्विवृण्वन्ति ओवीः— भेदजालं निरस्तम् । विभाति यदद्वैतम् । वागृणं तत्समस्तम् । स्वनिष्ठाभूतं विशेषात् ॥१॥ तदेतच्छेषं ऋणं वाचायाः । न निस्तराति ज्ञातितया । तग्दुरुपदयोः पतित्वा मया । निस्तारितम् ॥२॥ ( तैसें ग्रासूनि दुसरें । स्वरूपीं स्वरूपाकारें । आपुलेपणें उरे । बोधू जो कां ॥२१॥ तें ऋणशेष वाचा इया । न फेडवेचि मरोनिया । तें पाया पडोनी मियां । सोडविलें ॥२२॥ अमृतानुभव प्रकरण ३) कथं ब्रह्मज्ञानानंतरं ज्ञानस्य नाशः । गुरोरौदासिन्यादित्याह । किं तत् ब्रह्मज्ञानम् । ब्रह्मरूपम् । इत्यत्राद्वैतवि- नाशेऽपि ब्रह्मस्वरूपेण यो बोधो वर्तते स वागृणं सत्वबलाद्बध्वाऽविद्याम-

प्याक्षिप्तुं शक्नोति । तद्गणनाशे गुरुभक्तिरेव वरीयसीति मया नमस्काराद्गणं निष्कासितम् । वचनात्संगच्छते । अतः सद्गुरुरेवास्मिन् शास्त्रे परमात्मा । परलोकदोषदर्शनायाप्सरसगाथामगायत: देवदूतः । तत्र वाल्मिकिभरद्वाजयोः संवादो वर्तते । भगवता वाल्मिकिना श्रीवसिष्ठरामसंवादरूपेणायं ग्रंथो भरद्वाजायोपदिष्टः ।

**वाल्मिकिरुवाच** – कस्मिंश्चित्समये श्रीरामस्तीर्थाटनानंतरं विरक्तो बभूव । सर्वेभ्यो विषयेभ्यो विरहितं रामं दृष्ट्वा राजा दशरथो दुःखमवाप । तदैव यज्ञरक्षणार्थं श्रीरामं याचितुं भगवान् कौशिकमुनिः समागतः । तदा श्रीरामोऽद्य खानपानादिकं वर्जयित्वा हा हतोऽस्मीत्यादिविरक्तिप्रपूरितः उद्गायतीति राज्ञो वाक्यमाकलय्य तं सभायामानेतुमाज्ञापितवान् । तदा तथैव राज्ञा कृतम् । श्रीरामोऽप्यागत्य वसिष्ठविश्वामित्रौ नत्वा दशरथादींश्चाभिवाद्य सन्मुखो बद्धांजलिरतिष्ठत् । भो रघुकुलवरिष्ठ वसिष्ठादयश्चात्र महान्तस्त्वत्संशयं निवारयितुं समर्थाः । अतः शंकां परित्यज्य यत्ते मनसि वर्तते तद्यथावद् ब्रूहीति रामं प्रति कौशिकः प्रोवाच । श्रीराम उवाच । भो भोऽविद्यातमोनिवारणप्रभाकराः आज्ञां शिरसिकृत्वा बालवाक्यैरुच्यते तत्क्षम्यताम् । सर्वेषामेव जीवानां सुखेच्छा बलीयसी । तदपि न विषयेभ्यः कोऽपि सुखी दृश्यते । प्रत्युत दुःखिन एव सर्वे भोगिनः । गर्भे विण्मूत्रपूयपंके नितरां जाठरानलः क्वथयति । तद्दुःखं यमलोकादप्यधिकतरं न केनापि वक्तुं शक्यते । बाल्ये मललुलितवपुषस्तन्यपिपासयाचेन्द्रियाणामशक्तेर्जंतुतोदनाच्च दुःखातिरेकः । एतद्गर्भबाल्यदुःखं पारतंत्र्यादस्तु । किंतु यौवनेऽपि अस्थिमांसवसामृण्मयीं पुत्तलिकां जुगुप्सितामपि स्वदेवतामिव मन्यमानो भ्रमाद्रतिं पोषयति । परममलदुःसौरभंचाधररसं सुधामिव भजते । अपरतंत्रधीरपि स्त्र्यादिपारतंत्र्येण चेष्टितुमुत्सहते । पितरावपि परित्यज्य कामिन्यधिदेवतायोनिकुंडे स्वावदानाय वित्तं यज्ञसाहित्यमासादयति । तदपि मेलनरक्षणव्ययेऽतीवदुःखदायिन्येतस्मिन्नेवसमये शुक्रपशुहिंसया निरूढाणां मूत्रबीजानां पुत्राणां चिंतामाक्षिप्य

पारतंत्र्यमधिकमधिकृत्याभिमानपुरःसरो बालइव मललुलितवपुर्जरठो भूत्वा स्वेनैव कर्मणा निबद्धो भगवता यमराजेन समाहूतः शरीरं संत्यजति। किंचिद्वैदिककर्मणा चोदितः सुकृती चेत्स्वर्गेऽप्सरोभोगादिकं यौवनसमं दुःखं भुंक्ते। पापेनाधिकृतश्चेद्गर्भबाल्यसमं दुःखं ततोऽप्यधिकं वा नरके। तदपि कदैतन्नरकदुःखं विहाय स्त्रीपुत्रादिमयं सुग्रासमन्नमिन्द्रियसुखैर्भोजयिष्ये इति वांच्छां मूढो न त्यजति। एवमेव सर्वे प्राणिनः पतनशीला अपि दुःखेनारोहणशीला अपि दुःखिनोऽस्मिन्संसारे दृश्यन्ते। ये तु मौढ्याद्भोगेभ्यः सुखं मन्यन्ते तेभ्यः प्रष्टव्यम्। किं प्रत्येकेन भोगेन सुखमुत संयोगात्। आद्येऽपि किं भोगस्वभावो सुखं तत्संस्पर्शजं सुखं वा। नाद्यः। अधिकान्न-सेवनेऽजीर्णादिसंभवात्। मैथुनाधिक्ये क्षयादिरोगसंभवात्। यस्य यः स्वभावस्सोऽधिकाग्नेरधिकदाहकतेव तदधिकेनाधिको विभाति। तथा न सुखं विषयेभ्योऽतो न स्वभावः! नापि द्वितीयः। एकस्य संस्पर्शे तदैवान्य-स्यापीच्छादर्शनात्। मैथुनसमये कुसुमेच्छा मधुर भोजने च लवणेच्छा प्रसिद्धा सर्वेषु। न द्वितीयः। भोजनमलविसर्गजलपानमैथुनादीनामेकस्मिन् समये कर्तुमशक्यत्वात्। शक्येऽपि विषुचिकादौ भोजनप्रदानादीनामिव बीभत्सदर्शनादिदुःखापत्तेः। ननु कुतस्तदपि विषयलुब्धास्तृप्यन्ते विनैव कं। न। यत्क्षुत्तृट्कामादिजन्यमत्यंतं मनश्चाञ्चल्यं खानपानमैथुनादिभिः किंचित्तदीयप्रतीकारे मनस्थैर्यमाप्नोति। तेनैव विषयेषु मूढः सुखं मन्यते। वस्तुतस्तु चित्तसमाधानमेव सुखं। तच्च तृष्णाराहित्यादुपलभ्यते। तृष्णा देहाहंकारेणच वर्धते। देहाहंकारश्चाज्ञानात्। तस्माद् ज्ञानमेव सर्वदुःखानां कारणम्। तस्य सकार्यनिवृत्तिर्येन तद् ज्ञानमेवास्य नान्यादिति निश्चयः। कर्मोपासनयोरपि विषयविषयीभावेन द्वैतम्। द्वैते च विषयभोगदर्शनादुपर्युक्त-दुःखानां समापत्तिः। 'स एव मृत्योर्मृत्युमाप्नोति य इह नानेव पश्यति,' 'द्वितीयाद्वै भयं भवति' इत्यादिश्रुतेश्च। 'भयं द्वितीयाभिनिवेशितस्यादि' त्यादिस्मृतेश्च। परिशेषाद् ज्ञानमेवाज्ञाननिवर्तकम्। 'ज्ञानादेवतु कैवल्यम्'

'अज्ञानमेवास्य हि मूलकारणम् । तद्धानमेवात्र विधौ विधीयते ॥ विद्यैव तन्नाशविधा पटीयसी । न कर्म तज्जं सविरोधमीरितम् ॥ रामगीता' इत्यादि-श्रुतिस्मृतिशतेभ्यःस्यादेतत् । भक्तिरप्यज्ञाननिवृत्तिकरा । 'तस्याभिध्याना-द्योजनात्तत्वभावाद् भूयश्चान्ते विश्वमायानिवृत्तिः । श्वेताश्वतर' । 'भयं द्वितीयाभिनिवेशितस्यादीशादपेतस्य विपर्ययो स्मृतिः । तन्माययाऽतो बुध आभजेत्तं भक्त्यैकयेशं गुरुदेवतात्मा ॥ भागवत" इत्यादिश्रुतिस्मृतिभ्यः । किं तर्हि ज्ञाननिर्वर्त्यमज्ञानमुत भक्तिनिर्वर्त्यमिति महान् संशयः । पुनरपि 'कर्मणा जायते जंतुः कर्मणैव विलीयते' 'चरमे जन्मनि ज्ञानं प्राप्यते' 'ग्रंथिभेदेऽपि संभाव्या इच्छा प्रारब्धदोषतः' 'बुद्ध्वापि पापबाहुल्याद-संतोषो यथा तवे' त्यादिवाक्येभ्यः प्रारब्धभावनापि संशयसंगेन दुःखं दृढीकरोति ॥ श्लोकः ॥ ज्ञानस्य निश्चयो नास्ति भक्तौ द्वैतं प्रदृश्यते। प्रारब्धश्चेद्हतोस्म्यद्य किं कर्तव्यं मया प्रभो ॥

॥ हरिः ॐ तत्सत् ॥ श्रीरामगुरोश्चरणरजःसेवायां श्रीरामप्रश्ने वैराग्यं नाम द्वितीयं प्रकरणम् ॥

॥ श्रीज्ञानेश्वर माउली समर्थ ॥

## प्रथमः सर्गः

उमा माता पिता शंभुर्गुरुर्ज्ञानेश्वरो महान् । पतिः कृष्णो राधिकाद्या भगिन्यो गोपिका मम। पंचायतनमित्येतद्धृदि स्थाप्य प्रपूज्य च । वसिष्ठा-दीन् गुरुन्नत्वा मधुरं किंचिदुच्यते ॥ दोहा ॥ गिरिजेश्वरपदपंकजे। वंदे सुकृतनिकाय ॥ बंधविमुक्तः स्यामहं। एकब्रह्म निचाय्य ॥ १ ॥ श्लोकः ॥ ज्ञानेश्वरकृपामूर्तिर्भगवान् भक्तवत्सलः । दिशतु ब्रह्ममार्गं नो मातृवत्करुणाव-शात् ॥ १ ॥ गद्यम् ॥ यद्येतत्सीतावल्लभभाषणं श्रुत्वाऽऽश्वासनार्थं भगवान् कौशिकः प्राह । भो भो जनतिमिरविनिर्दलनवंशचूडामणे मा भैष्ट । त्वं श्रीद्वैपायननंदनवद्विदितवेद्योऽसि । तद्वदेव विश्रान्तिहेतुस्ते गुरु-

वाक्यापेक्षापि वर्तते । भगवन्कोऽयं श्रीद्वैपायननंदनः । कथं तस्य विदितवेद्यत्वेऽपि गुरोर्वाक्यापेक्षा । इति श्रीरामवचनमालोच्य पुनराह भगवान् विश्वामित्रः । 'यं प्रव्रजन्तमनुपेतमपेतकृत्यं द्वैपायनो विरहकातर आजुहाव । पुत्रेति तन्मयतया तरवोऽभिनेदुस्तं सर्वभूतहृदयं मुनिमानतोऽस्मि' ॥ श्रीपराशरसुतो द्वैपायनो व्यासस्तस्य सूनुरयं शुकाख्यः । स तु महायोगी मतिमान् । दुःखद्वंद्वविश्रंसनं संसरणमालोच्य ततो विरक्तः स्वयमेव परमार्थतः सत्तत्वं विनिश्चितवान् । पुनस्तद्विज्ञानार्थमेव पुनस्तपस्तेपे । ननु संसारस्याज्ञानकृतत्वाद् ब्रह्मणश्चाज्ञानावृतत्वादविद्यानाशस्य ब्रह्मज्ञानाधीनत्वाद् ब्रह्मज्ञानस्यापि महावाक्यजन्यत्वान् महावाक्यार्थस्यापि युक्तितो गुरूक्तिपाठवाधीनत्वान्नहि गुरोर्मुखाद्वाक्यश्रवणं विना ब्रह्मज्ञानं कस्यापि स्वातंत्र्येण भवितुं शक्यत इतिचेत्सत्यम् । किंतु दुःखरूपस्य जगतः कार्यरूपत्वात् कारणमपेक्षते । सर्वत्र नियतिदर्शनात् तदपि चेतनमेव भवितुमर्हति । अचेतनस्य स्वतः प्रवृत्त्यसामर्थ्यात् । इत्यनुमानेन बुद्धिकृतदेवतातोषाद्विघ्नविनिवृत्तेः प्रज्ञाबलाच्छब्दार्थतया कलयितुं शक्यते विचक्षणेन । तद्वन्महात्मना शुकेनापीति न विरुध्यते । तथापि प्रागज्ञानस्मरणेन स्वस्मिन् बुद्ध्यपराधशंकयास्मादपि किमधिकमस्तीति विज्ञातुमसौ भगवन्तं बादरायणं पितरमुपससाद । तस्य प्रणमतो विनयान्वितस्य प्रश्नमाकलय्य यत्पुरा तेन ज्ञातमासीत्तदेवाह भगवान् द्वैपायनः । तत्तदाप्ययं बुद्ध्यपराधं न जहौ । तेनैव हत इवैवं चिंतितवान् । यत्तु मया पुरा ज्ञातमासीत्तस्मादधिकं ज्ञानं पितरि न वर्तते । यतस्तेन पुरैव समाधानं न जातं तत्किं पुनः पितृकथनेनेति मत्वा तूष्णीं बभूव । तमन्यत्र गन्तुमिच्छावन्तं भगवान् प्राह । न हि तात, तव समाधानकरणसामर्थ्यं मयि वर्तते । मत्तोऽधिकः कोऽपि क्षत्रियकुलावतंसो विश्रुतकीर्तिर्जनको नाम । तं विचार्य यथाचित्तं विचरस्व । इत्याज्ञापितः प्रणम्य तदैव जनकमंदिरं संप्राप्तः । अहं द्वैपायननंदनशुकोऽस्मीति जनकाय कथ्यतामित्यादिष्टैर्द्वारपालैस्तथैव कृतम् । तदा विज्ञायांतः

प्रमाणेनास्त्विति द्वारपालान् प्रति जनकेनोक्तम्। एवं कतिचिद्दिनानि तिष्ठन् शुको जनकाज्ञयैव द्वारपालैर्द्वितीयं द्वारं नीतः। तत्रापि कतिचिद्दिनपर्यन्तं तिष्ठतो जनकेन पृष्टा वार्ता। द्वारपालः प्राह। भगवन्। अयं सर्वविषयपरित्यागी सर्वथापि यत्नवान्नैकविषयदृष्टिरस्ति। तदा भूपालादिष्टो द्वारपालस्तं मंदिरमानीतवान्। तं दृष्ट्वा किमिच्छसीति जनकेन पृष्टः प्राक् पितृसमीपस्थं प्रश्नमुक्तवान् बादरायणिः। तदा नृपतिनापि तदेव पित्रुक्तज्ञानं पुनरादिष्टम्। तच्छ्रुत्वा परमश्रान्तोऽसौ यत्नेन हतप्रज्ञापराधः एवं विचारितवान्। किमेतद्यन्मया ज्ञातं तदेव पित्रा प्रोक्तमनेन जनकेनापि तदेव। किं तदेव सत्यं स्यात्। तस्यैवं विचारं दृष्ट्वा 'यत्स्वेन विज्ञातं तदेव गुरुणोपदिष्टं चेदतः परः को निश्चयोऽस्ति। तात यतो व्यासनंदनोऽपि मम शिष्यत्वकरणे समागतस्तदाहं व्यासादप्यधिकोऽस्मि। त्वं तु सर्वविषयविनिवृत्तो विदितवेद्यो राज्यपंकमग्नान्मत्तोऽप्यधिकोऽसी' ति जनकः प्रोवाच। तदा शुकोऽपि परमसमाधानमाप्तवान्। मम यथावन्निश्चयो जातस्तथैव कृपयोक्तमित्युक्त्वा पित्रादिसत्समागमेनं यथाचित्तं चारितवान्। पश्चात्सर्ववासनाविनिर्मुक्तो विदेहकैवल्यं प्राप्तवान्। हे रघुकुलश्रेष्ठ। विदितवेद्यस्य शुकस्य प्रज्ञापराधविनिवारणाय यथाऽपेक्षाऽभवत्तथा त्वय्यपि वर्तते। पश्चाद्भगवान् कौशिको वासिष्ठमुनिमेवमुक्तवान्। भो भो वेदान्तसिद्धान्तपारगाः। रामोऽयं सर्वविषयविनिवृत्तो ब्रह्मसुखाधिकारी वर्तते।

'स्वात्मतत्वाभिगमनं प्रायशो भवति नृणाम्। मुने! विषयवैरस्यं कदर्थादुपजायते' ॥ १ ॥ शब्दार्थमात्रादात्मज्ञानं प्रायशो नृणां दृश्यते। तथाप्यमृते मुखममन्यमानस्य तक्रमिच्छतुरिव तेषां विषयेषु समासक्तिर्दृश्यते। 'सांसारिकक्रियासक्तं ब्रह्मज्ञोऽस्मीति वादिनम्। कर्मब्रह्मोभयोर्भ्रष्टं तं त्यजेदंत्यजं यथा ॥ २ ॥ रागो लिंगमबोधस्य चित्तव्यायामभूमिषु। पटुर्भोगहतस्तत्वं नाप्नुयाज्जन्मकोटिभिः ॥ ३ ॥ न ज्ञानं स्थिरतामेति वैराग्यरहितं मुने। जडे लौल्यवतामस्मिन् कथं स्याच्चेतने गतिः ॥ ४ ॥ रामोऽयं न तथा विप्र

सर्वत्यागपरायणः । अनुक्तोऽपि हि भोग्येषु न चेतस्थापयिष्यति ॥ ५ ॥ लब्धोऽप्ययमलब्धो वा महत्पुण्यवशादिह । प्रत्यक्षं विषये दुःखबुद्ध्या वैराग्यमाप्तवान् ॥६॥ अधिमात्रमुमुक्षार्तो महादुःखीव दृश्यते । एष आश्वास्यतां शीघ्रं भो भो ब्रह्मर्षिसत्तमाः ॥ ७ ॥ आवयोर्वैरनाशार्थं पुरा यद्ब्रह्मणोदितम् । ज्ञानं तदेव रामाय कथयस्व दयानिधे ॥ ८ ॥ परमाविद्यकं कर्म तथैवेयमुपासना । अतो ज्ञानं विना नास्ति भवदुःखस्य भेषजम् ॥९॥ ॥ हरिः ॐ तत्सत् ॥ श्रीरामगुरोश्चरणरजःसेवायां मुमुक्षुव्यवहारप्रकरणे कौशिकवाक्ये प्रथमः सर्गः ।

॥ श्रीज्ञानेश्वर माउली समर्थ ॥

## द्वितीयः सर्गः

॥ वसिष्ठ उवाच ॥ श्रीरामाय वदिष्यामि विज्ञानं ब्रह्मणोदितम् । मुने ! कोऽपि समर्थो न भवद्वचनलंघने ॥ १ ॥ तात रघुकुलश्रेष्ठ ! यत्ते मनसि वर्तते । सर्वं विज्ञातमस्माभिः प्रवक्ष्यामो यथाधिया ॥२॥ ॥ श्रीराम उवाच ॥ मामार्तं बालकं दृष्ट्वा स्नेहस्नुतपयोधरा । मातुरिवापवर्गं मे कथयंतीति निश्चयः ॥ ३ ॥ मातुरग्रे यथा बालस्तद्वत्पृच्छामि भूसुर । स्वामिंश्छेत्ता संशयस्य त्वत्तोऽन्यो नैव विद्यते ॥ ४ ॥ कथमप्राप्तनिर्वाणः पितायं बादरायणः । पुत्रः शुको वृद्धविद्यः प्राप्तो निर्वाणतां कथम् ॥ ५ ॥ ॥ श्रीगुरुरुवाच ॥ परब्रह्मण्यधिष्ठाने मायया गुणयुक्तया । कल्पितं सकलं विश्वमसज्जलतरंगवत् ॥ ६ ॥ तस्मिन्सच्चित्सौख्यसिंधौ मिथ्यामायावशात्सदा । जाताः स्थिता भविष्यान्ति तात ब्रह्मांडकोटयः ॥ ७ ॥ भ्रमाद्रज्जौ यथा सर्पः शुक्तिकारजतं यथा । कथाभानं च स्वप्ने च तथेदं विद्धि राघव ॥ ८ ॥ ॥ गद्यः ॥ एवं व्यासा अप्यनेका जाताः स्थिता भविष्यन्ति च । तद्वच्छुका अपि । यस्मिन् देशे यो देहं परित्यजति स तस्मिन्नेव देशे वासनावशात् स्वस्थपरलोकं पश्यति । एतदग्रे कथयिष्यामः । अस्माभिस्तु द्वात्रिंशद्ग्या-

साकृतयो दृष्टाः । तत्र काश्चित्समाः काश्चिदर्धसमाः काश्चिद्विलक्षणाश्च । काश्चिद्विदेहकैवल्यं प्राप्ताः काश्चिद् ब्रह्मसूत्रादिनिर्मात्र्यः । एवमपांतरतमवरस्यापि समन्वितिः । तद्वच्छुकस्यापि संभवाद् भारतगतविदेहमुक्तवचनस्य कलौ परीक्षितभागवतवचनयोः समन्वयः ।

तेषां ब्रह्मैकत्वेऽपि द्वितीयलीलादिवत् एकाहंकारसंभवात् । तस्मिन् वंध्यासंसक्तियोगान्न बंधनमपि । अत्रैतद्रहस्यम् । कार्यात्मनाकारविशीर्णेऽपि हिरण्यगर्भस्य स्वज्ञानान्मिथ्याशरीरवद्यावदधिकारं लैंगं तिष्ठति । न तत्र प्रारब्धस्यापि शंका । जगदुपकरणादिवासनाकर्मजन्यप्रारब्धसंभवात् । तल्लैंगमेव वंध्यासंसक्तिश्रुतं जगदुपकारादिकं करोति । तथापि तच्छिष्यभावनयैव प्रतीयते । बाह्यजनानां समाधानार्थं प्रारब्धस्वीकारात् । आभासस्यापि ब्रह्मत्वादाकृतिविनाशे विदेहकैवल्यं सिद्धमेव । तथापि तद्विषयिणी भावना न व्यभिचरति । अकर्तुरीश्वरस्य कर्तुरीश्वरवत् । स्यादेतत् । एवमपि नास्ति । यत् पितुरादौ पुत्रप्रारब्धं न क्षीयते । यदा यस्य प्रारब्धं क्षीणं तदैव स विदेहकैवल्यमाप्नोति । अयमेव व्यासः स्वस्य दशमोऽवतारः । एवं वाल्मिकी जातःस्थितो भविष्यति । अहमप्येवम् । कदाचिद्वयं सर्वे समानाकारसमानज्ञानिनोऽभवाम । कदाचिदसमानाकारसमानज्ञानिनः । एवमग्रेऽपि स्थितिः । व्यासोऽप्यग्रेऽवताराष्टकं धृत्वा भारतादीतिहासं कृत्वा स्वाधिकारेण हिरण्यगर्भो भूत्वा प्रारब्धक्षयाद्विदेहकैवल्यं गमिष्यतीति दिक् । एवं यथावदुत्तरं दत्तं पुनरिच्छां सुखेनैव दर्शयस्व ॥ ॥ ॐ तत्सत् ॥ श्रीरामगुरोश्चरणरजःसेवायां मुमुक्षुव्यवहारप्रकरणे भूयोभूयः सर्गकथने द्वितीयः सर्गः ॥

॥ श्री ज्ञानेश्वर माउली समर्थ ॥

## तृतीयः सर्गः

॥ श्रीराम उवाच ॥ भगवन् न जानीमो वयं, कोऽस्मिन् दुःखे नः क्षपयति । स्वेच्छां विनैव यदि कोऽपि दुःखे क्षपयिता, तर्हि किं स्यादस्माकं

सर्वथाऽपि इच्छया प्रयत्नेन वा । केचिद्वदंति, परमेश्वर एव सुखदुःखदाता, केचित्स्वभावः । स्वभावो नाम पदार्थप्रतिनियता शक्तिः । केचिद्यदृच्छा, केचिद्दैवं, केचित्कालः । तत्रैवमेव चेत्, कथमस्माभिः प्रयत्नसफलीभावनाशा कर्तव्या ॥ श्रीगुरुरुवाच ॥ शृणु वत्स ! अयमप्रयत्नकारिणामालस्यवादिनां सर्व एवं भ्रम एव । अथायं ते परमेश्वरो यदि सुखदुःखे क्षपयति, कुतः, स्वेच्छया, परेच्छया, कर्मानुसारेण वा । नाद्यः स्वेच्छयैव सुखदुःखयोः क्षपयितुस्तस्य नैर्घृण्यवैषम्यसंभवात् । तथात्वे जीवत्वापत्तेः । जीवोऽपि स्वकामप्रतिबंधनं विना कदाप्यकं न द्विष्यति । अतस्ततोऽप्यसौ नीचः स्यात् । न च मृत्पुत्तलिकोत्पादनहननादिवत् मिथ्यावस्तुनः सुखदुःखयोः क्षपणे लीलैवेति वाच्यम् । शुद्धे ब्रह्मणि कर्तृत्वाभावात् । कर्तृभावेवतस्तस्यास्मदादिसत्ताकत्वात्स्वकल्याणायैवास्मान्निगृह्णीतत्वादेवमपि चेदुन्मत्तवत्स्यात् । अस्त्वेवम् । सर्वसमर्थोऽयं कृपयैव मोचयिष्यतीत्यपि न वक्तव्यम् । कृपावतो भिन्नविषयत्वात् । सर्वमेतदैश्वर्यं परमेश्वरः कृपयैव प्रदास्यतीति चेत् । स्वस्मात् भिन्नीकृत्याऽकृत्वैव वा । आद्ये, द्वैतदोषादात्यंतिकदुःखनाशो न स्यात् । 'द्वितीयाद्वै भयं भवती' ति श्रुतेः; परेशस्याप्यव्यापकत्वापत्तेश्च । श्रीमद्भगवत्पूज्यपादाचार्यैरपि तैत्तिरीयोपनिषदीयशिक्षाभाष्ये श्रवणादिसाधनं विना ईश्वरप्रसादादपि न ज्ञानं जायत इदमुक्तम् । तथाच भाष्ये "पृथगुपनिषच्छ्रवणादियत्नोऽनर्थक इति चेन्न, नियमाभावात् । न हि प्रतिबंधक्षयादेव विद्योत्पद्यते । नत्वीश्वरप्रसादतपोध्यानाद्यनुष्ठानादिति नियमोऽस्ति । अहिंसाब्रह्मचर्यादीनां च विद्यां प्रत्युपकारकत्वात्साक्षादेवच कारणत्वाच्छ्रवणमनननिदिध्यासनादीनाम्" ॥ अस्यायं भावः ॥ यो यस्मिन्यत्नः कर्तव्यस्तेनैव यत्नेन तत् सिध्यति नान्येन यत्नेन, न वाऽलस्यवादीनामीश्वरप्रसादेन । एवं गीताभाष्येऽप्याचार्योक्तिः । "प्रकृतिं यान्त्यनुगच्छान्ति भूतानि प्राणिनो निग्रहो निषेधरूपः किं करिष्यति मम चान्यस्य वा" । अस्यानंदगिरीटीकाप्येवम् । 'प्रकृतेर्भगवता तत्तुल्येन वा केनचिन्निग्रहमाशं-

क्यावतारितचतुर्थपादस्यार्थापेक्षितं पूरयति मम चेति'। एतयो-र्भाष्यटीकयोरिदं तात्पर्यम्। भगवान् वदति "यदि जीव एव स्वां प्रकृति-मनुसरति तर्हि मम निग्रहस्तत्र किं करिष्यति, यतो जीवकर्मानुसारेणैवाहं निग्राहकोऽनुग्राहकः"। वस्तुतो नित्यतृप्तिमत इच्छाभावात्। एवमीश्वर-कृपापेक्षया गुरुकृपाधिकतरा, तयैव प्रयत्नानपेक्ष्यं कार्यं स्यादित्येतदपि परिहृतं विद्यारण्यस्वामिभिः। 'ब्रह्मसाक्षात्कृतिस्त्वेव विचारेण विना नृणाम्। आप्तोपदेशमात्रेण न संभवति कुत्रचिदि' ति। पञ्चदश्यां युक्त्या तु पूर्व-दोषापत्तिश्च बोध्या। सिद्धमेवं भिन्नीकृत्य परेशः कृपया न सर्वं कर्तुं शक्नोतीति। नापि द्वितीयः। एकस्मिन्नेव दातृदेययोः कर्तृकर्मणोरदर्शनात्। तस्मान्नस्वयं परमात्मा किमपि करोति। न परेच्छयापि, तस्य स्वतंत्रत्वाभ्यु-पगमात्। परेच्छातंत्रश्चेदसौ जीवः स्यात्। जीवत्वे स्वयमेव सुखदुःखयोः पततु। तृतीयश्चेदिष्टापत्तिः। एवमेव। कर्मानुसारेणैव परमात्मा सुखदुःखयोः क्षपयति। तथापि कथमेतत्। स्वयमेव कर्म कृत्वा क्षपयत्युत जीवकृतकर्मा-नुसारेणैव क्षपयति। नाद्यः पूर्वदोषसमुच्चयापत्तेः। अन्त्ये सिद्धमेतत्। जीवो यथा यथा यत्नं करोति तथा तथा परमेश्वरः फलं ददाति। ननु 'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्यो उन्नीनीषत' इति श्रुतेरीश्वरस्य कारयितृत्वे जीवस्यात्यंतपारतंत्र्यादीशेच्छावाद उद्धर्तव्य इति चेन्न। 'न तस्य कार्यं करणं च विद्यते' 'न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः। न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते'। स्वस्य भावो भवनं यत्र वासनायाः स्थितिरित्यर्थः। इति श्रुतिस्मृतिशतेभ्यः। 'कृतप्रयत्नापेक्षस्तु विहितप्रतिषि-द्धाऽवैय्यर्थ्यादिभ्य' इति न्यायाच्च। तु शब्दश्चोदितदोषव्यावर्तनार्थः। कृतो यः प्रयत्नोजीवस्य धर्माधर्मलक्षणस्तदपेक्ष एवैनमीश्वरः कारयति। अतश्चैते चोदिता दोषा न प्रसज्यन्ते। जीवकृत धर्माधर्मवैषम्यापेक्ष एव तत्तत्फलानि विषमं विभजेत्पर्जन्यवदीश्वरो निमित्तत्वमात्रेण। यथा लोके नानाविधानां गुच्छगुल्मादीनां व्रीहियवादीनां चासाधारणेभ्यः स्वस्वबीजेभ्यो जायमानानां

साधारणं निमित्तं भवति पर्जन्यः । न ह्यसति पर्जन्ये रसपुष्पफलपलाशादि-वैषम्यं तेषां जायते । नाप्यसत्सु स्वस्वबीजेषु । एवं जीवकृतप्रयत्नापेक्ष ईश्वरस्तेषां शुभाशुभं विदध्यादिति श्लिष्यते । ननु कृतप्रयत्नापेक्षत्वमेव जीवस्य परायत्ते कर्तृत्वे नोपपद्यते । नैष दोषः । परायत्तेऽपि हि कर्तृत्वे करोत्येव जीवः । कुर्वन्तं हि तमीश्वरः कारयति जीवप्रयत्नेऽनुमोदनमेव कारयितृत्वम् 'उपद्रष्टानुमंता च' 'यो यो यां यां तनुं भक्तः श्रद्धयार्चितु-मिच्छति । तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम्' ॥ इति भगवद्व-चनात् । ननु, अनुमोदकत्वेऽपि मित्रवत् सहायमितिचेच्छृणु । नहीच्छापूर्वकं परमेश्वरस्यानुमोदकत्वं यथा घटः स्वस्थित्यपेक्षायै व्यापकस्याकाशस्यानुमोदनं गृह्णाति । तर्हि न स्याद्योग्यकर्मफलव्यवस्थेतिचेन्न । अनुमोदकस्येशितुश्चे-तनत्वात् । अपिच पूर्वप्रयत्नमपेक्ष्येदानीं कारयति पूर्वतरंच प्रयत्नमपेक्ष्य पूर्वमकारयदित्यनादित्वात्संसारस्य पूर्वपूर्वोत्तरबीजपुष्टिप्रदानेनोत्तरोत्तरवृक्षपु-ष्टिप्रदानवदित्यनवद्यम् । कथं पुनरवगम्यते कृतप्रयत्नापेक्ष ईश्वर इति । विहितप्रतिषिद्धाऽवैयर्थ्यादिभ्य इत्याह । एवं हि 'स्वर्गकामो यजेत' 'ब्राह्मणो न हंतव्यः' इत्येवं जातीयकस्य विहितस्य प्रतिषिद्धस्य चावैयर्थ्यं भवति । अन्यथा तदनर्थकं स्यात् । ईश्वर एव विधिप्रतिषेधयोर्नियुज्येत । अत्यन्तपरतंत्रत्वाज्जीवस्य । तथा विहितकारिणमप्यनर्थेन संसृजेत्, प्रतिषिद्ध-कारिणमप्यर्थेन । ततश्च प्रामाण्यं वेदस्यास्तमियात् । ईश्वरस्य चात्यन्तान-पेक्षत्वे लौकिकस्यापि पुरुषकारस्य वैयर्थ्यं । तथा देशकालनिमित्तानां पूर्वोक्त-दोषप्रसंगश्चेत्येवं जातीयकं दोषजातमादिग्रहणेन दर्शयति । ननु जीवप्रयत्ना-पेक्षत्वे परमेश्वरस्य त्रिकालज्ञानं व्यर्थं स्यात् । तदैवेश्वरज्ञानं सार्थं यदा भविष्यत्येवायं कर्तेति । ज्ञानानुसारेण जीवकर्तृत्वे पारतंत्र्यं स्वीक्रियत इति चेत्, कथं परमेश्वरज्ञानस्य सार्थकत्वं त्वयापेक्षते । सत्यत्वेन मिथ्यात्वेन वा । आद्ये कस्य । जगतो ब्रह्मणो वा । नाद्यः । जगतः सत्यत्वस्वीकारे यो जाग्रत्स्वप्नसुषुप्तिषु परस्परजगद्बाधो दृश्यते, यश्च कल्पितत्वे प्रथमव्यक्तिध्वंसो

दृश्यते, यौ पुनराविर्भावौ तिरोभावौ दृश्येते, तेषां व्यवस्थैव न स्यात्। पुनश्च केन प्रकारेण जगतो ज्ञानं संभवति। प्रमारूपेण वा स्मृतिरूपेण वा प्रत्यभिज्ञारूपेण वा। नाद्यः; प्रमाणामुत्पत्तिदर्शनादुत्पन्नस्य प्रागभावप्रतियोगित्वात्। सत्यस्योभावः स्वीकर्तुं न शक्यते। कालत्रयाबाध्यत्वाभ्युपगमात्। भावकार्यस्यानित्यत्वात्। न द्वितीयः। स्मृतिकाले पदार्थस्यासत्वात्। परमेश्वरस्य सर्वत्र व्यापकत्वात् स्मृतिव्यतिरिक्तदेशाभावादन्यत्रपदार्थसत्वमप्यस्त्वित्यपास्तम्। न तृतीयः। प्रत्यभिज्ञायां पूर्वोत्तरविशिष्टयोः स्मृतिप्रत्यक्षविषययोर्वस्तुनोर्मध्ये ज्ञानलैन्यदर्शनात्। तत्स्वीकारे परेशस्य जीवत्वापत्तेः। ननु, अखंडैकरसत्वेन परमेश्वरस्य जगतो ज्ञानमिति चेत्प्रकाशं विनान्यथा कल्पयितुमशक्यत्वात्। प्रकाश एव तदस्तु। न हि प्रकाशः प्रकाश्यविषये चालको भवति। यथा दीप एकसमयावच्छेदेन स्वर्णं चोरं च प्रकाशयति किंतु न तं प्रवर्तयति निवर्तयति वा तथापि चोरस्यागमनहेतुत्वं प्रकाशे मूढा यथारोपयन्ति तथा परेशप्रकाशोऽपि न प्रकाश्यं प्रवर्तयति निवर्तयति वा। मूढा एव तस्मिन् सर्वमारोपयन्ति। एवं तर्हि प्रकाश एव हन्तव्य इति चेन्न। यथा प्रकाशं विना चोरप्रवृत्तिर्निवृत्तिर्वा न संभवति तद्वन्न संभवति चेतनं विना जीवस्य तत्कल्पितस्य जगतो वा यथावच्चेष्टनम्। जीवस्य चेतनेन सर्वं भवत्विति न। तस्य पारतंत्र्यत्वादाविद्याप्रातिबिंबत्वाद्वृत्त्यारूढत्वाच्च। एवं द्वितीय इष्टापत्तिः। मिथ्याज्ञानस्य भ्रमरूपत्वाद्भ्रमस्येश्वराधिष्ठानप्रकाश्यत्वेऽपि तदनुमोदनपूर्वकस्यानादिवासनाबद्धस्य जीवस्यैव चालकत्वसंभवात्। यथा मृगजलं सूर्यप्रकाश्यमपि जलत्वं न जहाति तद्वत्परायत्तोऽप्ययं न जहाति स्वकर्तृत्वं जीवः। यथा पर्जन्याधीनमपि बीजं स्वशक्तिं न जहाति। कं प्रति तन्मिथ्याज्ञानं फलति। ईश्वरं प्रत्युत जीवं प्रति। नाद्यः। ईश्वरस्य प्रयोजनाभावात्। अन्त्ये जीवारोपितमेव परमेश्वरे मिथ्याज्ञानमस्तु। तेन तज्जीवप्रयत्नानुसारेणैव फलतु। अयं भावः। यथा मृगजलं मृग एव सत्यं मनुते तद्वदीश्वरज्ञानमपि सार्थमिति जीव एवापेक्षत इति। मिथ्यैवमेव भवत्विति

तान्निश्चयवानपेक्षते । अतः जीव एव मिथ्याज्ञानं सत्यत्वेन गृहीत्वा तास्मिन्नियमादिकं शंकते । शशशृंगज्ञाने को मूढो व्यवस्थामपेक्षते को वा रज्जुसर्पज्ञाने मातृपित्रादिसामग्रीव्यवस्थामाक्षिपति । भ्रमस्य व्यवस्था भ्रमेणैव भवतु । तद्वद्यावदपवर्गं कर्तृत्वाध्यासाज्जीवप्रयत्नेनैव व्यवस्था भवतु । 'यः परमे व्योम्नि' 'सोऽस्यांगं वेद यदि वा न वेद' इति श्रुतेः । एवं तर्हि वेदज्ञानमप्यनिश्चितमोक्षजनकं स्यादितिचेन्न । अबाधितविषयतया व्यावृत्तेः । एतद्युक्त्या प्रोक्तं यथामति । वस्तुतस्तु अविद्याया अनुभवगम्यत्वादनुभवेन कृतप्रश्नोत्तरव्यवस्था वर्तते । अस्मद् दृष्टिसृष्टिवादे प्रतिबिंबापेक्षिकबिंबत्वारोपावच्छिन्ने बिंबभूते परमात्मनि यज्जीवेनारोपिता एव सर्वकर्तृत्वादयो धर्मा अतस्तत्प्रयत्नेनैव तंप्रत्यर्थयन्तु ।

॥ हरिः ॐ तत्सत् ॥ श्रीरामगुरोश्चरणरजःसेवायां मुमुक्षुव्यवहारप्रकरणे परमेश्वरेऽपि प्रयत्नापेक्षावर्णनं नाम तृतीयः सर्गः ।

॥ श्रीज्ञानेश्वर माउली समर्थ ॥

## चतुर्थः सर्गः

वसिष्ठ उवाच । कोऽयं स्वभावः । धर्मरूपो धर्मिरूपो वा । केनापि स्वभावोऽयं धर्मित्वेन न कल्पितः । धर्मस्य तु धर्मिण आश्रयं विना विज्ञानं न जायते । धर्मिरूप एव स्वभावश्चेत् तस्य पदार्थमात्रत्वात् पदार्थानां सावयवत्वे कार्यत्वात् कारणाक्षेपोत्तरं तेन न संभवति । अथवा एक एव पदार्थो जगद्रूपेणाविर्भूत उतानेके पदार्थाः । आद्ये कथं स्वभावग्रहणम् । प्रवृत्तिरूपेण निवृत्तिरूपेण वा । नाद्यः । मरणादिदर्शनात् । नाप्यन्त्यः । जन्मादिदर्शनात् । नोभयरूपोऽपि । एकस्मिन्नेव वस्तुनि विरुद्धधर्मयोरसंभवात् । नापि गमनागमनवद्विचारकारित्वं स्वीक्रियते । स्वभावस्य जडत्वात् । विचारवच्चेतनाश्रयाभ्युपगमे इष्टापत्तेश्च । द्वितीये तेषामनेकपदार्थानामणुपरिमितिरंगीक्रियत उत मध्यमपरिमितिर्महत्परिमितिर्वा । आद्ये, कथ

मणुरूपं सावयवं निरवयवं वा। नाद्य आनवस्थ्यात्। तथा चेदस्तु पर्वतानामप्यणुत्वम्। नापि तेषां संयोगो भवितुं शक्यः। मध्ये प्रदेशसंभवात् कार्यस्यासत्वापत्तेः। अन्यथा संयोगस्यैवाणुमात्रत्वं स्यात्। तल्लक्षणाभावात्। कार्यासत्वमप्यंगीकरोति चेत् सावयवत्वेनाणुग्रहणे तेषामवयवानां मध्ये देशसंभवात् संयोग एवाणूनामप्यसत्वं स्यात्। परमाणूनां यथाकथंचित् कार्यभेदः साध्यते इति चेन्न, कार्यकारणयोः समानापत्तेः। कार्यानंतरं पुनरुपलंभ एव तेषां नित्यत्वे हेतुरिति चेन्न, तज्ज्ञानस्यापि तत्कालिनत्वात्तद्वत्। ज्ञेयत्वव्याप्त्या तेषां ज्ञानोपजीवित्वाद् व्याहतिः। नापि द्वितीयः। निरवयवेभ्योऽणुभ्यो सावयवस्य जगतोऽसंभवात्। निरवयवो नामावयवाभावः। कोऽसावयवाभावः। प्रागभावप्रध्वंसाभावोऽत्यन्ताभावोऽन्यान्याभावो वा। नाद्यः। अधिकरणाश्रितत्वात्। नाप्याकाशमधिकरणं कल्प्यते। निरवयवत्वसामानाधिकरण्येन निश्चेतुमशक्यत्वात्। न कल्पितमधिकरणं वाच्यं कल्पितस्यावस्तुत्वात्। नापि द्वितीयः। कार्यानंतरोपलंभात्। नापि तृतीयः। अत्यन्ताभावस्य सुलभत्वात्सर्वत्रसर्वसंभवापत्तेः। न जगतोऽवयवात्यन्ताभावः स्वीक्रियते। आकाशेऽप्युपलंभात्। न चतुर्थः। अन्योन्याभावस्याकाशकालयोः सत्वात्तयोरप्युपादानत्वम्। एवं न द्वितीयोऽपि, मध्यमपरिणामवतो विनाशित्वात्। न तृतीयः। संयोगसंभवाभावात्। यथा निरवयवे ब्रह्मणि विवर्तत्वेन कार्यं स्वीकृतं तथास्माभिरप्यणुभ्यः स्वीक्रियत इति चेन्न, तेषां जडत्वात्। नेश्वराधिष्ठितत्वं वक्तव्यम्। निरवयवसामान्यात्। नाप्यनुमानादणुत्वसिद्धिः। अनुमानस्य प्रत्यक्षोपजीवित्वात् प्रत्यक्षस्य च सावयवत्वान्नहि सावयवत्वेन निरवयवत्वमनुमीयते, धूमेन जलानुमानवद्धेतुविरोधात्। अणव एव चेतन इति चेत् कथंतेऽनेकाभिप्राय एकाभिप्रायो वा। नाद्यः कार्योत्पत्तेरशक्यत्वात्। अन्त्योऽपि हेयः। एकाभिप्राययुक्तानामचेतनवतामस्वातंत्र्यात्। चेतनं पारतंत्र्यं चेत् पूर्वदोषाः समायान्ति। ज्ञानपूर्वको यत्नश्च सिद्ध्यति। संहत्यभ्युपगमेऽपि परार्थत्वाज्जयति यत्न एव। धर्मरूपः

स्वभावश्चेत् कथं धर्म्याश्रितः स्वतंत्रो वा। नाद्यः पूर्वोक्तदोषात्। नाप्यन्त्यः कल्पितत्वाजडत्वाच्च। चेतनत्वमभ्युपगम्यते चेदस्माकमत्यंतेष्टापत्तेः। नापि जडेन चेतनं जेतुं शक्यतेऽसामर्थ्यात्। जडे सामर्थ्यमभ्युपगच्छासि चेद्धतोऽसि नाममात्रविवादात्। चेतनानां कलह इति चेन्न। एकत्वेऽसंभवादनेकत्वे जात्यासहायकत्वात्। जडाधीनमेव चेतनं दृश्यत इति चेच्चेतनाधीनमेव जडमिति किन्न मन्यसे। स्पष्टज्ञानाधीनत्वदर्शनेऽपि लोके तथैव दृष्टमिति न वाच्यम्। ऐतीह्यमहात्मसु विपर्ययदर्शनात्। तैरपि न सर्वथा त्यागः कृत इति चेच्छृणु। लोकदौर्बल्यहननेन प्राबल्यप्रसारान्महात्मनामेव वारिष्ठ्यम्। यथायं स्वभावो हतस्तद्वद्यदृच्छापि हन्तव्या। यदृच्छावादिनो विना कारणं हि जगन्मन्यन्ते। तदसत्। यत्र तर्काद्विपरीतं कार्यं दृश्यते। तत्राज्ञातं सामान्यं कारणमवश्यमनुमेयम्। आकस्मिककार्यांगीकारे मैथुनं विना पुत्रोत्पत्तिर्भोजनं विना तृप्तिश्च स्यात्। कस्माद्विरुद्धात् किं विरुद्धमपि भवतु सर्वत्राकस्मिकनियमाभावात्। एवं स्वभावनिराकरणेन भूतप्रकृत्यादिवादिनां प्राचीनानां केषांचिदर्वाचीनानां च जडवादो निराकृतः। अतो रघुनंदन। सर्वमेतदालस्यवादिनां कौटिल्यं परित्यज्य प्रयत्नमेवानुव्रजस्व।

। हरिः ॐ तत्सत्। श्रीरामगुरोश्चरणरजःसेवायां मुमुक्षुव्यवहारप्रकरणे स्वभावयदृच्छानिराकरणपूर्वकपौरुष्योपदेशो नाम चतुर्थः सर्गः

॥ श्री ज्ञानेश्वर माउली समर्थ ॥

## पंचमः सर्गः

वासिष्ठ उवाच। मूढाः कालं प्रशंसन्ति केचिदालस्यबुद्धयः।
बालांस्तान्परित्यज्य यत्नैकशरणोभव ॥ " यच्चैव भगवान् कालो विद्यते दुरतिक्रमः। दैवज्ञाध्यवसायाद्धि ऋतौ गर्भस्य दर्शनात्। आयुषो नियतत्वाच्च कृतादियुगशक्तितः। कर्मणः कालसापेक्ष्यात् कालो बलवतां बली। सा रम्या नगरी महान् स नृपतिः सामन्तचक्रं च तत्। पार्श्वे तस्य च सा

विदग्धपरिषत् ताश्चंद्रबिंबानना:। उन्मत्त: स च राजपुत्रनिवहस्ते बंदिनस्ता: कथा: । सर्वे यस्य वशादगात्स्मृतिपथं कालाय तस्मै नम: ॥ ” नैतत्साधु। कोऽयं काल:। किमस्य लक्षणम्। अतीतादिव्यवहारहेतुत्वं न घटते। व्याख्यायामेव व्याख्यापत्ते:। परमेश्वरस्य जगद्विषयकमिथ्याज्ञानेऽपि एकरसज्ञानत्वादतीताद्यपेक्षा जीवज्ञान एव दृश्यते। कालसिद्धिर्नभवति। नापि ज्ञानरूपे ब्रह्मणि त्रिकालाबाध्यत्वात्। ज्ञानादीश्वरज्ञाननाशे कालसत्वमनुमीयत इति मा शंक्यम्। तत्र कालस्यापि नाशात्। नाप्यन्यथाख्यात्या परमात्मन:कारणता देशकालयो: प्रतीयतेऽतस्तस्य सत्वमभ्युपेयम्। जीवज्ञान एव तत्प्रतीते:। यदीश्वरज्ञानं सिद्धं नास्ति तस्य लक्षणमेव न घटते। जीवकल्पितत्वादस्त्वस्यलक्षणमिति चेद्येन कल्पितं तत्तेन हातुं शक्यते। अथ प्रमाणादपि निश्चयो नास्ति। न तत्र प्रत्यक्षप्रमाणं संभवति। शब्दस्पर्शरूपरसगंधवत्वाभावात्। नाप्यनुमानम्। कार्यत: कालसिद्धि: कालत: कार्यसिद्धिरित्यन्योन्याश्रयत्वात्। एवं लक्षणप्रमाणाभ्यां दुर्बलीकृतस्य तस्याभ्युपगमेऽपि किमसौ जडश्चेतनो वा। नाद्य:। पूर्वोक्तदोषापत्ते:। द्वितीयेऽपि ईश्वरभिन्नतयानुपलब्धेर्मिथ्यापत्तेश्च । ‘ कालोऽस्मि लोकक्षयकृत्प्रवृद्ध: ’ इति जागृच्छ्रुतेश्च। कालस्य दुरतिक्रमत्वं तु भवादृशामेव प्रतीयते नास्माकं। सर्वथा मिथ्यावस्तुनो ज्ञानेनोल्लंघनसंभवात्। अधिष्ठानस्य नित्यमलिप्तत्वाच्च। अन्यदृशापि यावत्स्वप्नस्तावदेव स्वप्नकाल:। जागृतावपि सुखिनां कालस्य लघुत्वभानतो दुखिनां दीर्घत्वभानतश्च तस्य प्रातीतिकमेव सत्वं स्वीकर्तुं शक्यते। प्रातीतिकस्य दुरतिक्रमत्वं भ्रान्तानाम्। नापि दैवज्ञानुमत कालाभ्युपगमेन प्रयत्नस्य हानं शक्यम्। ज्योतिषशास्त्र एव ग्रहशांत्यादिप्रयत्नेन ग्रहपीडादिविनाशकथनात्। नापि ऋतुकाल एव गर्भस्य स्थितिरिति नियमोऽस्ति। ऋतुकालस्य मासमात्रसंप्रतिपत्तावपि रजसोदर्शनात्। यदा रजो दृश्यते तदैवासौ ऋतुकालश्चेत् कस्याश्चित् पक्षे ऋतुकाल: कस्याश्चिन्मासे ऋतुकाल इत्यनियमाद्रज:शुद्धिरेव तत्र गर्भे प्रधानम्। ऋतुकालात्

प्रागपि कासांचिद्गर्भदर्शनात् । महाभारतेऽपि कौमारदशायां कुन्त्याः कर्णजन्म प्रसिद्धम् । योगिसंकल्पेन कालहननदर्शनात् प्रयत्नमृदुतीव्रतयैव कालस्यानुमानं स्यात् । तयोः संबंधभानेऽपि कालस्य जडत्वात्प्रयत्नोपजीवित्वं सिद्धम् । न नियतायुर्वादेन कालबलसिद्धिः । प्राणायामरसायनादिभिरायुषो वृद्धिदर्शनादपथ्यसेवनेन क्षयदर्शनाच्च । चरकेऽप्युक्तम् । "यदि हि नियतकालप्रमाणमायुः सर्वं स्यात्, तदायुष्कामाणां न मन्त्रौषधिमणिमंगलबल्युपहारहोमनियमप्रायश्चित्तोपवासस्वस्त्ययनप्रणिपातगमनाद्याः क्रिया इष्टयश्च प्रयोज्येरन् । नोद्भ्रान्तचण्डचपलगोगजोष्ट्रखरतुरगमहिषादयः पवनादयश्च दुष्टाः परिहार्याः स्युः । न प्रपातगिरिविषमदुर्गाम्बुवेगाः । तथा न प्रमत्तोन्मत्तोद्भ्रान्तचण्डचपलमोहलोभाकुलमतयो नारयो न प्रवृद्धोऽग्निर्नच विविधविषाश्रयाः सरीसृपोरगादयः । न साहसं नादेशकालचर्या न नरेन्द्रप्रकोप इति । एवमादयो हि भावा नाभावकराः स्युः, आयुषः सर्वस्य नियतकालप्रमाणत्वात् । न चानभ्यस्ताकालमरणभयनिवारकाणामकालमरणभयमागच्छेत् प्राणिनाम् । व्यर्थाश्चारंभकथाप्रयोगबुद्धयः स्युर्महर्षीणां रसायनाधिकारे । नापीन्द्रो नियतायुषं (षकं) शत्रुं वज्रेणाभि हन्यात् । नाश्विनावार्तं भेषजेनोपपादयेताम् । न महर्षयो यथेष्टमायुस्तपसा प्राप्नुयुः । न च विदितवेदितव्या महर्षय ससुरेशाः सम्यक् पश्येयुरुपदिशेयुराचरेयुर्वा । अपि च सर्वचक्षुषामेतत् परं यदैन्द्रं चक्षुः, इदं चाप्यस्माकं तेन प्रत्यक्षम् । यथा पुरुषसहस्राणामुत्थायोत्थायाहवं कुर्वतामकुर्वतां चातुल्या युष्ट्वम्, तथा जातमात्राणामप्रतीकारात् प्रतीकाराच्च, अविषविषप्राशिनां चाप्यतुल्यायुष्ट्वमेव, नच तुल्यो योगक्षेम उदपानघटानां चित्रघटानां चोत्सीदताम् । तस्माद्धितोपचारमूलं जीवितम् । अतो विपर्ययान्मृत्युः" ॥ (विमानस्थान अध्याय ३–४१) नापि कृतत्रेतद्वापारकलियुगैः कालबलं महीतुं शक्यते मानुषैरेव स्वाचरणेन तात्रस्थित्यानयनात् । "प्रागपि चाधर्माद्दते नाशुभोत्पत्तिरन्यतोऽभूत् । आदिकाले ह्यदितिसुतसमौजसोऽतिविमल-

विपुलप्रभावाः प्रत्यक्षदेवदेवर्षिधर्मयज्ञविधिविधानाः शैलसारसंहतस्थिरशरीराः प्रसन्नवर्णेन्द्रियाः पवनसमबलजवपराक्रमाश्चारुस्फिचोऽभिरूढप्रमाणाकृतिप्रसादोपचयवन्तः सत्यार्जवानृशंस्यदानदमनियमतपउपवासब्रह्मचर्यव्रतपरा व्यपगतभयरागद्वेषमोहलोभक्रोधशोकमानरोगनिद्रातन्द्राश्रमक्लमालस्यपरिग्रहाश्च पुरुषा बभूवुरमितायुषः। तेषामुदारसत्वगुणकर्मणामचिन्त्यरसवीर्यविपाकप्रभावगुणसमुदितानि प्रादुर्बभूवुः शस्यानि सर्वगुणसमुदितत्वात् पृथिव्यादीनां कृतयुगस्यादौ। भ्रश्यति तु कृतयुगे केषांचिदत्यादानात् सांपन्निकानां सत्वानां शरीरगौरवमासीत्, शरीरगौरवाच्छ्रमः, श्रमादालस्यम्, आलस्यात् संचयः, संचयात् परिग्रहः, परिग्रहाल्लोभः प्रादुरासीत् कृते ॥२८॥ ततस्त्रेतायां लोभादभिद्रोहः, अभिद्रोहादनृतवचनम्, अनृतवचनात् कामक्रोधमानद्वेषपारुष्याभिघातभयतापशोकचिन्तोद्वेगादयः प्रवृत्ताः। ततस्त्रेतायां धर्मपादोऽन्तर्धानमगमत्। तस्यान्तर्धानात् युगवर्षप्रमाणस्य पादह्रासः, पृथिव्यादेश्च गुणपादप्रणाशोऽभूत्। तत्प्रणाशकृतश्च शस्यानां स्नेहवैमल्यरसवीर्यविपाकप्रभावगुणपादभ्रंशः। ततस्तानि प्रजाशरीराणि हीयमाणगुणपादैराहारविहारैर्यथापूर्वमुपष्टभ्यमानान्यग्निमारुतपरीतानि प्राग्व्याधिभिर्ज्वरादिभिराक्रान्तानि। अतः प्राणिनो ह्रासमवापुरायुषः क्रमश इति" ॥ २९ ॥ (विमानस्थान अध्याय ३) एवं श्रीमन्महाभारतेऽपि राज्ञः युगप्रवर्तकत्वात् कालबलीवादः खण्डितः। यथा "कालो वा कारणं राज्ञो राजा वा कालकारणम्। इति ते संशयो माभूत् राजा कालस्य कारणम् ॥ ७९ ॥ दंडनीत्या यदा राजा सम्यक् कार्त्स्न्येन वर्तते। तदा कृतयुगं नाम कालसृष्टं प्रवर्तते ॥ ८० ॥ ततः कृतयुगे धर्मो नाधर्मो विद्यते क्वचित्। सर्वेषामेव वर्णानां नाधर्मे रमते मनः ॥ ८१ ॥ योगक्षेमाः प्रवर्तन्ते प्रजानां नात्र संशयः। वैदिकानि च सर्वाणि भवंत्यपि गुणान्युत ॥ ८२ ॥ ऋतवश्च सुखाः सर्वे भवंत्युत निरामयाः। प्रसीदन्ति नराणांच स्वरवर्णमनांसिच ॥ ८३ ॥ व्याधयो न भवन्त्यत्र नाल्पायुर्दृश्यते नरः। विधवा न भवन्त्यत्र कृपणो न तु

जायते ॥ ८४ ॥ अकृष्टपच्या पृथिवी भवन्त्यौषधयस्तथा। त्वक्पत्रफलमूलानि वीर्यवन्ति भवन्तिच ॥ ८५ ॥ नाधर्मो विद्यते तत्र धर्म एव तु केवलम् । इति कार्तयुगानेतान् धर्मान् विद्धि युधिष्ठिर ॥ ८६ ॥ दंडनीत्यां सदा राजा त्रीनंशाननुवर्तते । चतुर्थमंशमुत्सृज्य तदा त्रेता प्रवर्तते ॥८७॥ (टीका— "स्वाम्ये स्वास्थ्ये तन्निमित्तं तस्मात् क्षेमाख्यादसंकरात्") अशुभस्य चतुर्थांशस्त्रीनंशाननुवर्तते । कृष्टपच्यैव पृथिवी भवन्त्यौषधयस्तथा ॥८८॥ अर्धं त्यक्त्वा यदा राजा नीत्यर्थमनुवर्तते । ततस्तु द्वापरं नाम स कालः संप्रवर्तते ॥८९॥ अशुभस्य यदा त्वर्धे द्वावंशावनुवर्तते । कृष्टपच्यैव पृथिवी भवत्यर्धफला तथा ॥९०॥ ( टीका- अशुभस्य अधर्मस्य । ) दंडनीतिं परित्यज्य यदा कार्त्स्न्येन भूमिपः । प्रजाः क्लिश्नात्ययोगेन प्रवर्तेत तदा कलिः ॥ ९१ ॥ कलावधर्मभूयिष्ठे धर्मो भवति न क्वचित् । सर्वेषामेव वर्णानां स्वधर्माच्च्यवते मनः ॥ ९२ ॥ शूद्रा भैक्षेण जीवन्ति ब्राह्मणाः परिचर्यया । योगक्षेमस्य नाशश्च वर्तते वर्णसंकरः ॥ ९३ ॥ वैदिकानि च कर्माणि भवन्ति विगुणान्युत । ऋतवो न सुखाः सर्वे भवन्त्यामयिनस्तथा ॥९४॥ ह्रसंति च मनुष्याणां स्वरवर्णमनांस्युत । व्याधयश्च भवन्त्यत्र म्रियन्ते च गतायुषः ॥९५॥ विधवाश्च भवन्त्यत्र नृशंसा जायते प्रजा । क्वचिद्वर्षति पर्जन्यः क्वचित्सस्यं प्ररोहति ॥९६॥ रसाः सर्वे क्षयं यान्ति यदा नेच्छति भूमिपः । प्रजाः संरक्षितुं सम्यग्दंडनीतिसमाहितः ॥९७॥ (टीका- योगेन अनुपायेन । ) राजा कृतयुगस्रष्टा त्रेताया द्वापरस्य च । युगस्य च चतुर्थस्य राजा भवति कारणम् ॥९८॥ कृतस्य करणाद्राजा स्वर्गमत्यन्तमश्नुते । त्रेतायाः करणाद्राजा स्वर्गं नात्यन्तमश्नुते" ॥९९॥ प्रवर्तनाद्वापरस्य यथाभागमपाश्नुते । कलेः प्रवर्तनाद्राजा पापमत्यंतमश्नुते ॥१००॥ ततो वसति दुष्कर्मा नरके शाश्वतीः समाः । प्रजानां कल्मषे मग्नोऽकीर्तिं पापं च विंदति ॥१०१॥ ननु 'सकालेनेह महता योगो नष्टः परंतप' इति भगवतैव कालमहतिरुक्तेति न शंकनीयम् । अस्मिन्नेवाध्याये 'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत

अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्" "परित्राणाय साधूनां विनाशाय च दुष्कृताम्। धर्मसंस्थापनार्थाय संभवामि युगे युगे" इत्यवतरणेन धर्मस्य स्थापनकथनात् छलदशायां साधूनां धर्माच्च्यवनप्रयत्न एवावतारे हेतुः। तस्मात् 'सकालेनेह महता योगो नष्टः परंतप' इति वाक्यं वाचारंभणसमाधानार्थमेव तातसंमतिरेव साध्वी। वस्तुतस्तु "स कालेन गौण कालसहितेन महता मानुष दुष्प्रयत्नेनेति। अयं दुष्प्रयत्नस्तु संसारासक्त्या योगविचार एव हंतव्य इति बुद्धिः। एवमेव कलौ भविष्यतीति पुराणेषु कथनादपि कालत्वं नानुमीयते जनानामधर्मेण तत्रानुमानात्। कदाचिज्जनधर्मेण भविष्यं मिथ्यापि स्यात् 'कलावपि कृताचार' इति भृशुंडोक्तेः। एकजातिवत्यपि काले सुखदुःखत्वं धर्माधर्मानुसारेणैव सुखदुःखदातृत्वं मूढा आरोपयन्ति। अतो न कर्म कालसापेक्षम्। यद्यपि व्यवहारदशायां कालकर्मणोः सत्वमभ्युपेयमावश्यकत्वात्तथापि कर्मणश्चेतनाधीनतया व्यतः कालस्य दौर्बल्यमस्त्येव।

अतोऽनिशं प्रयत्नेन कालं जित्वा महामते। इष्टं शान्तिमयं शुद्धं लभस्व परमं सुखम्॥ । हरि ॐ तत्सत्॥ श्रीरामगुरोश्चरणरजःसेवायां मुमुक्षुव्यवहारप्रकरणे कालखण्डनपूर्वकपौरुषोपदेशो नाम पंचमः सर्गः॥

## ॥ श्री ज्ञानेश्वर माउली समर्थ ॥

## षष्ठः सर्गः

॥ श्रीरामउवाच ॥ नात्र खेदः प्रकर्तव्यः कैवल्यार्थं महामुने। वदन्ति मुनयः सर्वे दैवं हि फलसाधनम् ॥१॥ दुःखमायाति दैवेन दैवेन हि सुखं पुनः। यत्नचिन्तां परित्यज्य दैवमेव समाश्रयेत् ॥ २ ॥ अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्। नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ॥ ३ ॥ यदभावी न तद्भावी भावी चेन्न तदन्यथा। इति चिंताविषघ्नोऽयं बोधो भ्रमनिवर्तकः ॥ ४ ॥ ॥ 'अगदः किन्नपीयते' ॥ (पाठांतर) अवश्यंभा-

विभावानां प्रतीकारो भवेद्यदि । तदा दुःखैर्न युज्येरन् हरिश्चन्द्रनलादयः ॥ ५ ॥ दैवं फलति सर्वत्र न विद्या न च पौरुषम् । समुद्रमथनाल्लेभे हरिर्लक्ष्मीं हरो विषम् ॥ ६ ॥ एवं श्रुतेरभिप्रायो मुक्तौ विघ्नन्ति देवताः । भीष्मादयोऽसुराविष्टाः क्रूरास्युरिति भारते ॥ ७ ॥ ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे । विष्णुर्येन दशावतारगहने क्षिप्तो महान्संकटे । रुद्रो येन कपालपाणिपुटके भिक्षाटनं कारितः । सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे ॥ ८ ॥ न हि दैवान्मृतो ब्रह्मन् पुनर्जीवति कश्चन । एतदर्थं तितीक्षैव 'प्राह देवोऽर्जुनं प्रति ॥ ९ ॥ मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः । आगमापायिनोऽनित्यास्तां स्तितिक्षस्व भारत ॥१०॥ जायते धीमतां पुण्याज्ज्ञानं चरमजन्मनि । तस्माद्दैवबलं श्रेष्ठं नृणां प्रयतनं वृथा ॥ ११ ॥ हा हतोऽस्मि दयासिन्धो श्रुत्वैतद्रामभापणम् । मा भैष्टेति गिराश्वास्य पुनराहर्षिसत्तमः ॥ १२ ॥

किमेतद्दैवम् । ईश्वरेण रचितं वा देवताचेष्टितं वा पूर्वजन्मजनितं कर्म वा । नाद्यः । पूर्वोक्तसमस्तदोषापत्तेः । न द्वितीयः । देवतानां सात्विकत्वात् । कारणं विनैव कस्योपरि दुःखक्षरणे तासां नास्ति प्रयोजनम् । नापि तृतीयः । पूर्वकृतमपरकृतेन हातुं शक्यत्वात् । यन्मुनिभिरुक्तं 'दैवं हि फलसाधनं' तेषामभिप्रायोऽपि न दैववादनिरूपणविषये किन्तु मिथ्याभूते मास्तु जीवानामासक्तिरिति ज्ञापनार्थः । तच्चोक्तं महाभारते "अप्रयत्नागताः सेव्या गृहस्थैर्विषयाः सदा । प्रयत्नेनोपगम्यश्च स्वधर्म इति मे मतिः" ॥ यदि तेषां त्वदुक्तोऽभिप्रायः कल्प्यते चेत्, पृच्छामः किं संचितं कर्म दैवशब्देनोच्यते, आहोस्विदागामि, प्रारब्धं वा । नाद्यः, संचितस्य ज्ञानेन विरोधिकर्मणाच्च विनाशो भवति । यथा पापकर्मणां प्रायश्चित्तेन विनिवृत्तिः, एवं पूर्वजन्मपापकर्मणामपि भगवन्नामगंगास्नानादिसाधारणप्रायश्चित्तैर्विनिवृत्तिः स्यात् । ज्ञानेन सञ्चितनिवृत्तिस्तु सर्वैः स्वीकृता । एवमागामीन्यपि ज्ञानेन कर्तृबुद्धिप्रणाशे न श्लिष्यन्ति, 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यप-

देशादि' इति न्यायात्। यद्यस्य विनाशकं तत्तेनानभिभूयते। यथा तमोविनाशकः प्रभाकरो न तमसा कदाचिदप्यभिभूयते। तस्मात्संचिदागामिविनाशकस्य ज्ञानस्य संचिदागामिभ्यामभिभवो न कल्पयितुं शक्यः। न च प्रबलदुर्बलभावं पुरस्कृत्य नाश्यनाशकत्वदर्शनात् संचिदागामिप्राबल्ये ज्ञानस्य च दौर्बल्ये कस्मिंश्चित्समये ताभ्यां ज्ञानविनाशो भवेदिति वाच्यम्। वस्तुतंत्रापेक्षया कर्तृतंत्रस्य प्राबल्यासंभवात्। नापि ज्ञानध्वंसः कल्पयितुं शक्यते। अभावस्याधिकरणप्रतियोगिसापेक्षत्वादाधिकरणप्रतियोगिनो साक्षिभास्यत्वात्। स्वस्याभावाभ्युपगमे आत्माश्रयादयो दोषाः स्युः। ननु यथा ज्ञानानंतरमपि जगद्दर्शनं बाधितानुवृत्त्या भवति तथा संचिदागामिनोरपि संस्पर्शः स्यादिति मा शंक्यमनैकत्यात्। दाहानंतरमपि निकटांशिन एव आभासो दृश्यते, यथा दग्धेऽपि पटे तदवभासो दृश्यते। नेतरे पदार्थाः। तेषामग्निसंस्पर्शमात्रेणैवांशाविभागदर्शनात्। तद्वज्ज्ञानेन संचिदागामिनौ नश्यतः। प्रारब्धं दग्धपटावभासवत् तिष्ठति। नापि 'सुहृदः साधुकृत्यान् द्विषंतः पापकृत्यान्' इति श्रुत्या कं प्रत्यपि भोगसंभावनोक्तेः संचिदागामिनोर्नाशो न स्यादिति वाच्यम्। स्तुतिनिंदादिस्वप्रयत्नेनैव ज्ञानिनः सुकृतं दुष्कृतंच ते गृह्णन्ति। तदपि तेषां स्तुतिनिंदादिप्रयत्नेन तत्सदृशतमफलदायकं कर्म उत्पद्यते इति श्रुतेरभिप्रायः। अन्यथा कर्मफलव्यतिकरः स्यात्। यथा केनचित् शूद्रेण कृतं सेवाजनितं पुण्यं तस्य ब्रह्मज्ञानानंतरं कस्मिंश्चित् स्तोतरि ब्राह्मणे गच्छति चेत्, तेन कर्मणा कथं तद्ब्राह्मणं प्रति फलं भवति। अथवैवमपि श्रुतेरभिप्रायः स्यात्। उपरि निर्दिष्टे सूत्रे संचितस्यैव विनाश उक्तः। आगामिनस्त्वश्लेषो न नाशः। अतः स्तोतॄणां निंदकानां च न हि ज्ञानिनः पापं पुण्यं वा मिलति किंत्वागामिकर्मणामेव पुण्यं पापं स्तोतॄणां निंदकानां च मिलति। तस्मान्नहि ज्ञानात् प्रबलं संचितम्। तद्वत् ज्ञानसाधनं प्रत्यपि संचितं प्रतिबंधयितुं न शक्नोति तस्य फलोन्मुखत्वाभावात्। नहि गर्भस्थबालः कामपि स्वयंवरस्थां-

कन्यां परिणयति। अस्त्वेवम्। यत् प्रारब्धं तिष्ठति तदेव दैवं स्यादिति चेत् किं तत् प्रारब्धं। जडचेतनं वा। आद्ये चेतनाधीनत्वाच्चेतनतीव्रप्रयत्नेनैव तज्जयसंभवात्। स्वकृतमपीश्वरेण नियतं न पुनः स्वेन प्रयत्नेन हातुं शक्यमिति चेन्न। यथा कोऽपि राजा न्यायेन प्रतिशासनसमये 'यद्यसौ अनुतप्तः किमप्युत्तमं कार्यं करिष्य' तीति तुष्टः सन् दंडं न यच्छति चेद्दोषो न स्यात्। यथा परमेश्वरे न्यायो जीवेनारोपितस्तथा दयापि आरोपिता किं न स्यात्। नहि परमेश्वरे न्यायाग्रह एव कल्पयितुं शक्यः। दयान्याययोर्द्वयोरप्यारोपितत्वात्। तीव्रस्यादौ फलप्रदानेन हि पापफलदानसमये न्यायः पुण्यफलदानसमये दयाच सिद्धयति। एवं दयान्याययोरैक्यं स्यात्। तेन प्रयत्नेन प्रारब्धमपि जेतुं शक्यते। यथा पूर्वदिने जातस्य रोगस्योत्तरदिने गृहीतभेषजेन विनिवृत्तिः। किंतु पूर्वोत्तरकर्मणोः नित्ययुद्धे यत्प्रबलं तस्यैव जयो विधेयः। यच्चोक्तं ज्ञानिनां प्रारब्धमवश्यमेव भोक्तव्यं तदपि जनानां समाधानार्थमेव। वस्तुतस्तु न तं प्रति प्रारब्धमित्याचार्योक्तेः। "तत्वज्ञानोदयादूर्ध्वं प्रारब्धं नैव विद्यते। देहादीनामसत्वात्तु यथा स्वप्नो विबोधतः॥ कर्म जन्मान्तरीयं यत् प्रारब्धमिति कीर्तितम्। तत्तु जन्मान्तराभावात् पुंसो नैवास्ति कर्हिचित्॥ देहस्यापि प्रपंचत्वात्प्रारब्धावस्थितिः कुतः। अज्ञानिजनबोधार्थं प्रारब्धं वक्ति वै श्रुतिः॥" "उपाधितादात्म्यविहीनकेवलब्रह्मात्मनैवात्मनि तिष्ठतो मुनेः। प्रारब्धसद्भावकथा न युक्ता स्वप्नार्थसंबंधकथेव जाग्रतः"॥ (विवेकचूडामणिः) 'तस्य तावदेव चिरमि' ति श्रवणं स्पष्टं तथापि जीवन्मुक्तिदशायां यत्नाविधाने कर्तृबुद्ध्युत्थानं मा भवतु किंचित्कालपर्यन्तं भवतु वा भोग एव इति उपेक्षाभिप्रायपरमेव। मुमुक्षुदशायां तु यत्न एव कर्तव्यः। सिद्धदशायामपि दृष्टसौख्यार्थं विरक्त्युपरत्यादियत्नो विधीयते। तथाच श्रुतिः 'आसुप्तेरामृतेः कालं नयेद्वेदांतचिंतया' अस्याभिप्रायोऽप्येवं दर्शितो विद्यारण्यस्वामिभिः "दद्यान्नावसरः किंचित्कामादीनां मनागपि" तस्माद्यत्नेन प्रारब्धं जेतुं

शक्यते इति सिद्धम् । ये तु 'यत्नचिंतां परित्यज्य दैवमेव समाश्रयेत्' इति वदन्ति तान् पृच्छामः । किं दैवफलभोगसमये हस्तपादादिसंचलनप्रयत्नः कर्तव्यो न वा । आद्ये इष्टापत्तिः, दैवस्य यत्नोपजीव्यत्वात् । अन्त्यमंगीकरोपि चेत्, ग्रासचर्वणादिक्रियां विनैव दैवदत्तेनान्नेनोदरभरणं स्यात् । किमर्थं दैवं प्रबलमिति जल्पसे । तस्य फलोन्मुखरूपत्वादीश्वराधिष्ठितत्वाद्वा । कथं दैवं फलं ददाति, जीवात्पृथक् स्थित्वा, उत जीवरूपं भूत्वा, अथवा फलरूपपरिणतेः । आद्ये जीवभिन्नत्वे जडत्वात् पूर्वोक्तदोषापत्तेः । न द्वितीयः । स्वेनैव स्वानिष्टफलभोगाद्यसंभवात् । नापि तृतीयः । फलरूपमेव दैवं चेत् घटादिवत् कार्यरूपं स्यात् । न हि घटादिकार्यस्य जीर्णपर्यन्तं ध्वंसो भवतीति नियमोऽस्ति । दंडमुद्गरादि प्रहारे तथा दर्शनात् । तद्वत् फलरूपेण परिणतस्य कर्मणोऽपि भोगेनैव क्षयो भवतीति न योजनीयम् । मध्येऽपि महता प्रयत्नेन तद्ध्वंससंभवात् । न द्वितीयः, दैववत् प्रयत्नस्यापि ईश्वराधिष्ठितत्वात् । दुःखं सुखं च दैवेन यद्यायाति चेत्, कथम् । दैवेन सुखदुःखयोर्योगो भवति, उत भोगो भवति । आद्ये किं देहेन सह योगः, अंतःकरणेन सह, आत्मना सह वा । न प्रथमः, दृश्यरूपस्य देहस्यादृष्टयोः सुखदुःखयोश्च संयोगासंभवात् । न चाकाशकालसर्वपदार्थसंयोगवद् दृश्यादृश्ययोः संयोगो वाच्यः । आकाशकालवद्दैवविभुत्वे कर्मफलव्यतिकरप्रसंगात् । नापि चरमः । आत्मनोऽसंगत्वात् । मध्यमे सुखदुःखाकारवृत्तेरुपादानत्वात्, कारणानुस्यूतत्वान्न हि कार्यं कारणं प्रति विकलीकर्तुं शक्नोति । सुखदुःखसाधनसंयोग एव योग इति चेन्न । मनोऽनैकाग्रे सुखदुःखसाधनभूते विषयसंयोगेऽपि तददर्शनात् । द्वितीये हर्षशोकाभ्यां रहितस्य मुक्तस्यापि भोगः संभवेत् । यत्तु शास्त्रे 'अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्', 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि' इत्युक्तं तदकृताभ्यागमकृतप्रणाशदोषनिवारणार्थमेव । यत्नेनाप्रतिहतं कर्म भोगं विना न क्षीयते । न हि यदृच्छया कालेनेश्वरेच्छया वा तस्य नाशो

भवति। ननु 'कर्मणा कर्मनिर्हारो न ह्यात्यंतिक इष्यते' इति भगवद्वचना-न्नयत्नरूपेण कर्मणा कर्मनिर्हारःस्यादिति चेत्। भोगेनापि सर्वथा कर्मनिर्हारो न भवति। प्रारब्धफलभोगेऽपि भोगार्थयत्नेन पुनरागामिसंभवात्। कर्तृत्वबुद्धिं विना प्रारब्धभोगार्थं यो यत्नः स नागामिरूपेण परिणमते, इति चेत्। कथं कर्तृत्वहानिर्जायते। आलस्यादुत ज्ञानात्। नाद्यः। आलस्यवतामपि उन्मत्त इव कर्मदर्शनात्, निद्रायामपि वासनाबलात् स्वप्ने कर्तृत्वदर्शनात्। द्वितीये, साधनचतुष्टयादिरूप एव प्रयत्नो ज्ञानार्थे अंगीकर्तव्यस्तस्यापि दैवाधीनत्वात् त्वन्मते भोगेनापि कर्मनिर्हारो न स्यात्। वस्तुतस्तु 'कर्मणा कर्मनिर्हार' इति यत् भागवते प्रोक्तं तन्नामस्मरणादिभगवद्भक्तिरूपयत्नपरम्। अन्यथा तस्मिन्नेवाध्याये कथितेनाजामिलोपाख्यानेन पूर्वोत्तर विरोधात्। यत् 'यद-भावी न तद् भावी भावी चेन्न तदन्यथा' इति वदंति तान् पृच्छामः। कथमेतदधिगतम्। स्वज्ञानेन बहुलोकदुःखानुमानाद्वा। आद्ये, कथं स्वज्ञानं संगृह्यते। जीवसर्वज्ञत्वादुतेश्वरानुग्रहात्। नाद्यः, जीव एव सर्वज्ञश्चेत् कथमसौ भाविकर्मभिः परतंत्रो भवितुमर्हति। एवमेवचेदीश्वरोऽपि भाविकर्मभिः परतंत्रो भवतु। न द्वितीयः, ईश्वरानुग्रहाज्जीवस्य सर्वज्ञत्वं कथमभ्युपगम्यते। श्रुत्या युक्त्यानुभवेन वा। हिरण्यगर्भादीनामपि श्रुतौ क्षुत्पिपासादिदर्शनादसर्वज्ञत्वं, तलवकारेऽपि इन्द्रवाय्वादीनामसर्वज्ञत्वं श्रवणात्। न हि ईश्वरोपासकानामपि हिरण्यगर्भात् परं स्थानं श्रुतिर्ददाति। नापि ब्रह्मलोकादूर्ध्वं विष्णुशिवस्थानं विष्णुशिवोपासकाः प्राप्नुवन्तीति पुराणवचनशतेभ्यः श्रुतिर्बाध्यत इति वाच्यम्। हिरण्यगर्भलोक एव सत्वोत्कर्षात् तेषामुपास्यलोकप्रतीतेः। पुराणानां श्रुतिबाधनसामर्थ्याभावात्। एवमेव समन्वयः स्यात्। न्यायोऽप्यस्ति "जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च"। 'ये सगुणब्रह्मोपासनात्सहैव मनसेश्वरसायुज्यं व्रजन्ति। किं तेषां निरवग्रहमैश्वर्यं भवत्याहोस्वित्सावग्रहमिति संशयः। किं तावत्प्राप्तम्। निरंकुशमेवैषामैश्वर्यं भवितुमर्हति। "आप्नोति स्वाराज्यम्" (तै. १।६।२) "सर्वेऽस्मै देवा बलिमावहन्ति" (तै. १।५।३)

"तेषां सर्वेषु लोकेषु कामचारो भवति" (छा. ७।२५।२, ८।१।६) इत्यादिश्रुतिभ्य इति। एवं प्राप्ते पठति 'जगद्व्यापारवर्जमि' ति। जगदुत्पत्त्यादिव्यापारं वर्जयित्वान्यदणिमाद्यात्मकमैश्वर्यं मुक्तानां भवितुमर्हति, जगद्व्यापारस्तु नित्यसिद्धस्यैवेश्वरस्य। कुतः, तस्य तत्र प्रकृतत्वादसंनिहितत्वाच्चेतरेषाम्। पर एव हीश्वरो जगद्व्यापारेऽधिकृतः। तमेव प्रकृत्योत्पत्त्याद्युपदेशात्। नित्यशब्दनिबंधनत्वाच्च। तदन्वेषणविजिज्ञासनपूर्वकं त्वितरेषामणिमाद्यैश्वर्यं श्रूयते। तेनासंनिहितास्ते जगद्व्यापारे। समनस्कत्वादेव चैतेषामनैकमत्ये कस्यचित् स्थित्यभिप्रायः, कस्यचित् संहाराभिप्राय इत्येवं विरोधोऽपि कदाचित्स्यात्। अथ कस्यचित् संकल्पमन्वन्यस्य संकल्प इत्यविरोधः समर्थ्येत, ततः परमेश्वराकूततन्त्रत्वमेवेतरेषामिति व्यवतिष्ठते। (ब्रह्मसूत्रशाङ्करभाष्य अ. ४ पा. ४ सू. १७) न हि द्वितीयः, कर्मण एवेश्वरानुग्रहसिद्धेरीश्वरापेक्षया कर्मणां चाल्पत्वात्कस्यापि ज्ञानस्य फलमीश्वरवत् सर्वज्ञत्वं न स्यात्, ईश्वरकृपया बहूषु सर्वज्ञेष्वपि सर्वेषां भिन्नाभिप्राये एकस्मिन्नेव काले उत्पत्तिलयप्रसंगात्। एकाभिप्राये सर्वेषां पारतंत्र्यादल्पत्वम्। न तृतीयः, अज्ञानदशायां सर्वेषामननुभवाद् ब्रह्मदशायां च सर्वाविद्याबाधादनुभवेनापि सर्वज्ञत्वं स्वीकर्तुं न शक्यते। सर्वज्ञं विना 'यदभावी न तद्भावी भावी चेन्न तदन्यथा' इति सिद्धांतस्थापने न भवत्यधिकारः। ईश्वरेणैवेतत् कथितमिति चेन्नैकांतिकाभावात्। श्रुतिषु प्रयत्नप्रशंसापि दृश्यते। प्रयत्नस्य चेतनाश्रितत्वाजडाश्रितत्वाद्दैवात् प्रयत्नविधायका श्रुतिरेव बलीयसी। न दैवस्य देवता स्मृति सिद्धत्वाच्चेतनाश्रितत्वं देवतानां च मनुष्याद्यधिकबलवत्वाद्बलीयस्त्वं वाच्यम्। देवतानां सात्त्विकत्वात्। सात्विका हि क्षमाप्रधानाः। यदि कोऽप्यन्यायं करोति तदा शिक्षार्थप्रवृत्ताः सात्विका एवं समिच्छन्ति। अयं यद्यग्रेऽनुतप्तो दुष्कर्म न करिष्यति चेत् समीचीनं स्यात्। अतो न सात्विकाः कस्यचित् पुण्यप्रयत्नं घातयन्ति। न देवताः सात्विकत्वात् पुण्यप्रयत्नं घातयन्तु; किंत्वशुभप्रयत्नं नाशयंत्येव

यदासि चेदिष्टापत्तिः। वस्तुतस्तु देवताः फलं यच्छन्ति न कर्तृबुद्धिमभिघातयन्ति। नापि दृष्टिसृष्टिवादे सर्वकल्पने जीवसामर्थ्यग्रहणाज्जीवसर्वज्ञत्वेन भाविकर्मपारतंत्र्यस्थापनं शंकनीयम्। सर्वसंकल्पकस्य जीवस्य सर्वथा स्वातंत्र्यग्रहणात् प्रयत्नाविधानाच्च। न द्वितीयः, भाविज्ञानमपि बहुशोऽदर्शनात्। न हरिश्चन्द्रनलाद्यैतिह्यतः भाविभावस्थायित्वं शक्यम्। हरिश्चन्द्रविषये विश्वामित्रप्रयत्नबलवत्त्वाच्च। यस्य यत्नः प्रबलो भवति तस्यैव जयो भवतीति पुरा प्रतिपादितमेव। न देवताविघ्नश्रवणात् दैवबलं वाच्यम्। यत्र बृहदारण्यकभाष्ये देवता विघ्नं कुर्वन्तीत्युक्तम्। तत्रैव मुमुक्षुर्देवाराधनपरो भवेदित्यप्युक्तम्। भाष्यम् "अविद्यावन्तं पुरुषं प्रति देवा ईशत एव विघ्नं कर्तुमनुग्रहं चेत्येतद्दर्शयति। यथा ह वै लोके बहवो गोश्वादयः पशवो मनुष्यं स्वामिनमात्मनोऽधिष्ठातारं भुञ्ज्युः पालयेयुरेवं बहुपशुस्थानीय एकैकोऽविद्वान्पुरुषो देवान्देवानिति पित्राद्युपलक्षणार्थं भुनक्ति पालयतीति। इम इन्द्रादयोऽन्ये मत्तो ममेशितारो भृत्यइवाहमेषां स्तुतिनमस्कारेज्यादिनाऽऽराधनं कृत्वाभ्युदयं निःश्रेयसं च तत्प्रदत्तं फलं प्राप्स्यामीत्येवमभिसंधिः। तत्र लोके बहुपशुमतो यथैकस्मिन्नेव पशावादीयमाने व्याघ्रादिनापह्रियमाणे महदप्रियं भवति तथा बहुपशुस्थानीय एकस्मिन्पुरुषे पशुभावाद्व्युत्तिष्ठत्यप्रियं भवतीति किं चित्रं देवानां बहुपश्वपहरण इव कुटुम्बिनः। तस्मादेषां देवानां तन्न प्रियं किं तद्यदेतद्ब्रह्मात्मतत्त्वं कथंचन मनुष्या विद्युर्विजानीयुः। तथाच स्मरणमनुगीतासु भगवतो व्यासस्य। "क्रियावद्भिर्हि कौन्तेय देवलोकः समावृत्तः। न चैतदिष्टं देवानां मर्त्यैरुपरिवर्तनम्" ॥ इति अतो देवाः पशूनिव व्याघ्रादिभ्यो ब्रह्मविज्ञानाद्विघ्नमाचिकीर्षन्ति। अस्मदुपभोग्यत्वान्मा व्युत्तिष्ठेयुरिति। यं तु मुमोचयिषन्ति तं श्रद्धादिभिर्योक्ष्यन्ति विपरीतमश्रद्धादिभिः। तस्मान्मुमुक्षुर्देवाराधनपरः श्रद्धाभक्तिपरः प्रणेयोऽप्रमादी स्याद्विद्याप्राप्तिं प्रति विद्यां प्रतीति वा काक्वैतत्प्रदर्शितं भवति देवाप्रियवाक्येन" ॥ १० ॥

(अ. १ ब्रा. ४।१०) अतो देवाराधनेन देवताविघ्ननाशो भवति। स्मृतिरपि "संन्यस्यतो वै विप्रस्य देवा दारादिरूपिणः। विघ्नं कुर्वन्त्ययं तस्माद्देवाराधनपरो भवेत्" एवमतिक्रमरूपतीव्रप्रयत्नेनापि देवताविघ्नहानिर्दृश्यते। वृहद्वासिष्ठटीकायामपि "अतीव्रमनसा देवता विघ्नं कुर्वन्तीत्युक्तम्। अतो देवकृतविघ्ना अपि स्वप्रयत्नेन नश्यन्ति। कर्णेनाप्युक्तम्, 'दैवायत्तं कुले जन्म मदायत्तं च पौरुषमि'ति। नापि 'दैवं फलति सर्वत्र न विद्या न च पौरुषं। समुद्रमथनाल्लेभे हरिर्लक्ष्मीं हरो विषम्"॥ अनेन दैवबलमनुमन्तव्यम्। दृष्टान्तवैषम्यात्। हरिहरयोरीश्वरत्वात्तयोः पूर्वकर्मैव नास्ति। यद्यपि वृहद्वासिष्ठे जीव एव स्वप्रयत्नेन विष्णुः शिवश्च जात इत्युक्तं तथापि तत् प्रयत्नविधानार्थमेव। लक्ष्मीः स्वशक्तित्वादेव हरिणा स्वीकृता, लक्ष्मीरपि प्रयत्नेनैव भगवतो विष्णोः परिचारिण्यभवत्। एवं गिरिजापि स्वप्रयत्नेन शिवपरिचारिणी। शिवेन विषमपि न दैवपारतंत्र्येण गृहीतं किन्तु परोपकाराय स्वसामर्थ्येनैव। तस्मात् सामर्थ्यरूपो यत्न एव दैवतो बलीयान्। न भीष्मादौ राक्षसावेशाद्दुष्टदेवनिकाय एव दैवसंज्ञः प्रबल इति कल्पयितुं शक्यते। स्वस्य प्रज्ञापराधेनैव भूतोन्माद इति भूतविद्योक्तेः। तथा च, अष्टांगसंग्रहे। एवं दुःशासनकृतद्रौपदीवस्त्रहरणदर्शनं भीष्मादीनां प्रज्ञापराध एव। न तस्य विनाशाय पांडवानुसरणरूपो यत्नोऽपि तैः कृतः। अतः स्वप्रमादेनैव ते राक्षसाविष्टा बभूवुः। तस्माच्च दुष्टदेवनिकायरूपं दैवं प्रबलमिति वाच्यम्। दैवात्कोऽपि मृतो न जीवति, इत्यपि ग्रहीतुं न शक्यते। तद्विरुद्धश्रुतिस्मृतिसत्वात्। ऋग्वेदस्याष्टमाष्टके अयमितिहासो वर्तते। सनातिराज्ञः पुरोहितः कोऽपि सुबंधुरासीत्। स विप्रकृतकूटाभिचारेण निधनं यातः। तस्य भ्राता श्रौतमंत्रेण पुनस्तमस्मिँल्लोके आनीतवान्। तथा च श्रुतिः "यत्ते यमं वैवस्वतं मनो जगाम दूरकम्। तत्त आवर्तयामसीह क्षयाय जीवसे यत्ते दिवं यत् मनो जगाम दूरकम्। तत्त आवर्तयामसीह क्षयाय जीवसे"। (मं. १० सू. ५८ मंत्र १,२) शृगालगृध्रसंवादे

शिवरात् कोऽप्येको मृत उत्थित। यस्याशा बलीयसी तस्य कार्यं दुर्घटमपि भवतीति भीष्माचार्यैरुक्तं युधिष्ठिराय भारते "मात्रास्पर्शास्तु कौंतेय शीतोष्णसुखदुःखदाः । आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत" ॥ इत्यास्मिन् श्लोके भगवता तितिक्षोपदेशाद्दैवबलमनुमन्याहे, तितिक्षापि प्राप्तदुःखसहनप्रयत्न एव। प्राप्तदुःखविषय एव तितिक्षा कर्तव्या। नानागतदुःखविषये। तथा चोक्तं योगशास्त्रैः "हेयं दुःखमनागतमि"ति। भगवद्भिरपि 'अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम्'। 'अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः'। 'प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः'। 'सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि'। एवं प्रचोदनात्। ये चरमे जन्मनि ज्ञानं जायतेऽतो दैवमेव प्रबलमिति वदन्ति तदप्यसत्। अन्योन्याश्रयात्। किं चरमजन्म नाम? । यस्मिन् जन्मनि ज्ञानं जायते तदेव जन्म चरमं भवितुमर्हति। अतो ज्ञानादेव जन्मनश्चरमत्वम्. अन्यथा, अनाद्यनंतस्याध्यासस्य ज्ञानं विनाप्यंतवत्वं प्रसज्येत। अध्यासस्यानाद्यनंतत्वमुपदिष्टं श्रीभवत्पूज्यपादाचार्यैः शारीरकभाष्यारंभे "एवमयमनादिरनन्तो नैसर्गिकोऽध्यासो मिथ्याप्रत्ययरूपः कर्तृत्वभोक्तृत्वप्रवर्तकः सर्वलोकप्रत्यक्ष" इति।

अतो न हि ज्ञानं विना जन्मनश्चरमत्वं सिध्यति। ततश्चरमे जन्मनि ज्ञानं जायत इति न युक्तं किन्तु ज्ञानादेव चरमजन्म भवति तस्मान्न दैवाधीनं ज्ञानम्। ज्ञानार्थे यत्न एव विधेयः। न हि 'बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते' इति भगवद्वचसापि चरमे जन्मनि ज्ञानं जायत इत्यंगीकरणीयम्। 'इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः', 'अपिचेत्सुदुराचारो भजते मामनन्यभाक्। साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः'॥, 'क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति। कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति' भगवद्भिरेव क्षिप्रविशेषणग्रहणात् तीव्रप्रयत्नवतां तूर्णफलं निरूपितम्। 'बहूनां जन्म-

नामन्ते' इत्यादि वचनजातं मृदुप्रयत्नवतामेव । ननु सर्वथा दैवप्रहाणौ पूर्वजन्म एव न स्यात् । पूर्वजन्माभावे कथमस्य जन्मनः प्राप्तिः । एवं ब्रवीषि तर्हि, अकृताभ्यागमकृतप्रणाशौ स्यातामिति चेन्न । पूर्वकृतयत्नस्यैवास्मिन् जन्मनि प्रारब्धत्वेन ग्रहणात् । यदि पूर्वकृतयत्न एव प्रारब्धं स्यात् तर्हि तदस्मिन् जन्मानि कृतप्रयत्नेन जेतुं न शक्यत इति वाचारंभणं महात्मानो न प्रशंसान्ति । किमेतज्जन्म पूर्वजन्मापेक्षया वार्धक्यसंज्ञामुपलभते यस्मिन् कृतप्रयत्नेन न जेतुं शक्यते पौर्वम् ? पूर्वजन्माग्रहणेन कर्म सिध्यति, तत्सिद्धौ कर्तृबलं सिध्यति, कर्तृबलात्यत्न एव सिद्धः । तथा चोक्तम् " पूर्वजन्मजानितं पुराविदः कर्म दैवमिति संप्रचक्षते । उद्यमेन तदुपार्जितं चिरादैवमुद्यमवशं न तत् कथम् " । फलभोगाय जन्मांतरग्रहणं तु मृदुमध्यकर्मकारिणामेव । तीव्रकार्मिणां तु अस्मिन्नेव जन्मनि फलं भवति । तथा च वैय्यासिकयोगभाष्यम् – " तत्र तीव्रसंवेगेन मंत्रतपःसमाधिभिर्निर्वर्तित ईश्वरदेवतामहर्षिमहानुभावानामाराधनाद्वा यः परिनिष्पन्नः स सद्यः परिपच्यते पुण्यकर्माशय इति । तथा तीव्रक्लेशेन भीतव्याधितकृपणेषु विश्वासोपगतेषु वा महानुभावेषु वा तपस्विषु कृतः पुनः पुनरपकारः स चापि पापकर्माशयः सद्य एव परिपच्यते । यथा नन्दीश्वरः कुमारो मनुष्यपरिणामं हित्वा देवत्वेन परिणतः " ( सा. पा. १२ ) । एवमेव भोजवृत्तौ " तथाहि कानिचित् पुण्यानि कर्माणि देवताराधनादीनि तीव्रसंवेगेन कृतानि इहैव जन्मनि जात्यायुर्भोगलक्षणं फलं प्रयच्छान्ति । यथा नन्दीश्वरस्य भगवन्महेश्वराराधनबलादिहैव जन्मनि जात्यादयो विशिष्टाः प्रादुर्भूताः । एवमन्येषां विश्वामित्रादीनां तपःप्रभावाज्जात्यायुषी । केषां चिज्जातिरेव । यथा तीव्रसंवेगेन दुष्टकर्मकृतां नहुषादीनां जात्यंतरादिपरिणामः । उर्वश्याश्च कार्तिकेय वने लतारूपतया । एवं व्यस्तसमस्तरूपत्वेन यथायोगं योज्यम् " । स्मृतिश्च भवति । " त्रिभिर्वर्षैस्त्रिभिर्मासैस्त्रिभिः पक्षैस्त्रिभिर्दिनैः । अत्युत्कटैः पापपुण्यैरिहैव फलमश्नुते " ।

त्रिभिरिति यथोपलक्षणम् । देहाद्यपेक्षया मनसो व्यापकत्वात् तत्तीव्रसंवेगेन क्षिप्रसिद्धिर्युक्तैव । तीव्रवासनया दृष्टं स्वप्नमपि जाग्रतो प्रतीयते । इति बहुशोऽनुभवः । इत्येतदालोडनेन दैवं निहत्य स्वशक्त्या पौरुषमेव रघुनंदन कर्तव्यम् ।

दैवाश्रिताः कुमतयः प्रपतंति पापे, यत्नेन यान्ति परमार्थमिहैव सन्तः । दैवं निहत्य कुरु पौरुषमात्मशक्त्या । धैर्येण ब्रह्मसुतसूनुकुलावतंस ॥ । हरिः ॐ तत्सत् । श्रीरामगुरोश्चरणरजःसेवायां मुमुक्षुव्यवहारप्रकरणे दैवनिराकरणपूर्वकपौरुषोपदेशो नाम षष्ठः सर्गः ।

॥ श्री ज्ञानेश्वर माउली समर्थ ॥

## सप्तमः सर्गः

वसिष्ठ उवाच – श्रुत्या युक्त्या स्वानुभूत्या पौरुषं त्वं समाश्रय । दैवं हित्वा महाबाहो लभस्व परमं पदम् ॥१॥ स्पंदाधीनो भवेद्यत्नः स्पंदोऽनु प्रकृते रत्त । आद्ये विकारिणी चित्स्यादंते यत्नस्तु नश्यति ॥२॥ प्रकृतावपि यः स्पंदो जायते रजसोवशात् । रजसस्तु फलं दुःखं श्रुतेर्यत्नोऽकदायकः ॥३॥ मैवमाशंक्यतां तात निर्विकारेऽखिलात्मनि । माया तत्सत्तया सत्या विशेषज्ञानतो मृषा ॥४॥ परब्रह्मणि कर्तृत्वं सत्यमौपाधिकं भवेत् । तथापि शास्त्रीयो यत्नः दैवतः श्रेष्ठ उच्यते ॥५॥ सामान्यं यद्रवावौष्ण्यं सूर्यकान्तादिशिष्यते । दग्धं करोति सामर्थ्यात्तृणमौष्ण्यं न वै मणिः ॥६॥ गीतिः— मायोपहिता चितिरपि तद्वद्यत्नेन चेष्टते नित्यम् । माया नैव जडत्वात् कर्तृत्वं देहतः परं भवति ॥७॥ रजः कदा सात्विकतामुपैति सत्वं रजस्तामपि तद्वदेति । योग्ये प्रयुक्तं विषमौषधं स्यात् सद्भेषजं स्याद्विषमप्रयुक्तम् ॥८॥ ब्रह्मध्यानमयी वृत्तिः सत्वरूपा निगद्यते । सत्त्वं चेद्विषयाकारं तद्रजः किन्न राघव ॥९॥ बंधुरात्मात्मनस्तस्य येनैवात्मात्मना जितः । सत्वात्संजायते ज्ञानमित्याद्याः श्रुतयः स्फुटाः ॥१०॥ रजस्तु सदा चञ्चलं तस्यानित्यत्वा-

यत्न एव तत्र न संभवति। धैर्येण स्थिरीकरणात् सात्विक एव यत्न इत्यनवद्यम्। "शास्त्रीयः सफलोयत्नः सीमावान् सात्विको मतः। राजसो निष्फलो यत्नो वासना वर्धते यतः ॥११॥ गीतिः- सत्वं लघुप्रकाशकमिश्रमतस्तमस्समं न गुरु। न रजोवचञ्चलमपि स्थैर्ये धैर्यं स एव यत्नः स्यात् ॥१२॥ चित्तात्सत्वमयात्स्पंदो यत्नो निष्पद्यते ततः। प्रत्यक्षोऽयं तथा दैवं न स्यान्मूढैः प्रकल्पितम् ॥१३॥ यदि पूर्वकृतं दैवं तदपि वृद्धिवार्जितम्। वर्तमानः प्रयत्नोऽयं वर्धते धैर्ययोगतः ॥१४॥ अतश्चेत्तेऽशुभं पूर्वं तथापि त्वं शुभं भज। शुभयत्नबलेनाशु पापं प्रहर नन्दन ॥१५॥ शास्त्रीयेण प्रयत्नेन विमुक्तिर्वासनाक्षयात्। अशास्त्रीयप्रयत्नेन वासना वर्धते वृथा ॥१६॥ अतोऽर्थकामौ दैवात् तौ मत्वा धर्मे यतस्व भोः। प्रयत्नस्त्रिविधः प्रोक्तो देहवाणीमनःश्रितः ॥१७॥ तीर्थाटनादिरूपोऽयं दैहिकोऽस्ति महामते। प्रणवादिजपे यत्नो वाचिकोऽस्ति महामते ॥१८॥ ध्यानादिसमये यत्नो मानसो रघुनन्दन। स्वानुकूला हि सामग्री सदा यत्नेन जायते ॥१९॥"

नन्वेवं चेद्भवन्मते चार्वाक इव प्रथमजन्मापत्तिरिति चेन्न। चार्वाकमते जन्मनैव काकतालीयन्यायेन सर्वसामर्थ्यसंभवात्, यत्नापेक्षाहानिः। न तावच्चार्वाकमते स्वभावादिपारतन्त्र्येण सर्वसामर्थ्यसंभवादिति चेन्न, स्वभावादिषु प्रागुक्तदोषात्। वस्तुतस्तु 'सूक्ष्मः स्याद्वासनामय' इति आचार्योक्तलिंगशरीरस्य समष्टिसत्वांशाधारकत्वात् कर्मापेक्षया स्वातंत्र्यम्। तच्च बहुजन्मकृतयत्नवदेव भ्रमति किन्तु प्राग्भवीयो यत्नो दैवं तच्च वर्तमानेन यत्नेन प्रबलेन हातुं शक्यते। ननु कथमनन्तभवकृतं दैवं एकस्मिन् जन्मनि कृतेन यत्नेन जेतुं शक्यत इति चेत् पृच्छामः। किमनन्तजन्मसु कृतं दैवं प्रतिकूलमेव स्वीकृतं त्वया आहोस्विदनुकूलमपि। नाद्यः, प्रमाणाभावात्। नापि द्वितीयः, इष्टापत्तेः। अनुकूलं दैवं शुभयत्नेनाधिमात्रं भूत्वा शीघ्रं फलदायि स्यात्। सम्यगुक्तमेतद्योगभाष्ये साधनपादे। इदं विचार्य्यते, किमेकं कर्म एकस्य जन्मनः कारणमथैकं कर्मानेकं

जन्माऽऽक्षिपतीति। द्वितीया विचारणा, किमनेकं कर्म अनेकं जन्म निर्वर्तयति, अथानेकं कर्मैकं जन्म निर्वर्तयतीति। न तावदेकं कर्मैकस्य जन्मनः कारणम्। कस्मात्, अनादिकालप्रचितस्याऽसंख्येयस्याऽवशिष्टकर्मणः सांप्रतिकस्यच्च फलक्रमानियमादनाश्वासो लोकस्य प्रसक्तः स चानिष्ट इति। न चैकं कर्मानेकस्य जन्मनः कारणम्। कस्मात्, अनेकेषु कर्मसु एकैकमेव कर्मानेकस्य जन्मनः कारणमित्यवशिष्टस्य विपाककालाभावः प्रसक्तः स चाप्यनिष्ट इति। न चानेकं कर्मानेकस्य जन्मनः कारणं, कस्मात्तदनेकं जन्म युगपन्न संभवतीति क्रमेण वाच्यम्। तथा च पूर्वदोषानुषङ्गः। तस्माज्जन्मप्रायणान्तरे कृतः पुण्यापुण्यकर्माशयप्रचयो विचित्रः प्रधानोपसर्जनभावेनावस्थितः प्रायणाभिव्यक्त एकप्रघट्टकेन मिलित्वा न मरणं प्रसाध्य संमूर्च्छित एकमेव जन्म करोति। तच्च जन्म तेनैव कर्मणा लब्धायुष्कं भवति। तस्मिन्नायुषि तेनैव कर्मणा भोगः संपद्यत" इति। (योगभाष्यसाधनपाद सू. १३) गंगास्नानभगवन्नामोच्चारादिना बलवता सहकृतेन किमपि मंदं कर्म यदा तीव्रं भवति तदैव तन्नियतविपाकोन्मुखमिति बोध्यम्। "यस्त्वसावेकभविकः कर्माशयः स नियतविपाकश्चानियतविपाकश्च। तत्राहष्टजन्मवेदनीयस्य नियतविपाकस्यैवायं नियमो न त्वदृष्टजन्मवेदनीयस्यानियतविपाकस्य। कस्मात्। यो ह्यदृष्टजन्मवेदनीयोऽनियतविपाकस्तस्य त्रयी गतिः; कृतस्याविपक्वस्य नाशः, प्रधानकर्मण्यावापगमनं वा, नियतविपाकप्रधानकर्मणाभिभूतस्य वा चिरमवस्थानमिति। तत्र कृतस्याविपक्वस्य नाशो, यथा शुक्लकर्मोदयादिहैव नाशः कृष्णस्य। यत्रेदमुक्तम्। 'द्वे द्वे ह वै कर्मणी वेदितव्ये पापकस्यैको राशिः पुण्यकृतोऽपहन्ति तदिच्छस्व कर्माणि सुकृतानि कर्तुमिहैव ते कर्म कवयो वेदयन्ते'। प्रधानकर्मण्यावापगमनं यत्रेदमुक्तम्। स्यात् स्वल्पः सङ्करः सपरिहारः सप्रत्यवमर्शः कुशलस्य नापकर्षायाऽलम्। कस्मात्। कुशलं हि मे बह्वन्यदस्ति यत्रायमावापं गतः स्वर्गेऽप्यपकर्षमल्पं करिष्यतीति नियतविपाकप्रधानकर्मणाभिभूतस्य वा

चिरमवस्थानम्। कथम्। अदृष्टजन्मवेदनीयस्यैव नियतविपाकस्य कर्मणः समानं मरणमभिव्यक्तिकारणमुक्तम् । न त्वदृष्टजन्मवेदनीयस्यानियत विपाकस्य। यत्त्वदृष्टजन्मवेदनीयं कर्म अनियतविपाकं तन्नश्येदावापं वा गच्छेत्। अभिभूतं वा चिरमप्युपासीत यावत्समानं कर्माभिव्यञ्जकं निमित्तस्य न विपाकाभिमुखं करोतीति" । अथवा प्रतिकूलमपि अनंतजन्म-कर्म स्वीकृतं त्वया चेन्नास्माकं शास्त्रीयप्रयत्नहानिः । बहुकालजन्यो भ्रमोऽपि अधिष्ठानज्ञानेन यथा नश्यति तथा ब्रह्मज्ञानेनायमनादिसंसारो नश्यति। अतो, ब्रह्मज्ञानार्थयत्नः सर्वदा सफल एवेति सिद्धम् ।

सर्वशः सफलो यत्नो ज्ञानेश्वरस्मृतेरिह । तस्माद्विघ्नभयं त्यक्त्वा यत्नमेकं समाश्रय ॥२०॥ । हरि ॐ तत्सत् । श्रीसत्सद्गुरुज्ञानेश्वरकृपाप्रसादे श्रीराम-गुरोश्चरणरजःसेवायां पौरुषस्थापनन्नाम सप्तमः सर्गः

॥ श्रीज्ञानेश्वर माउली समर्थ ॥

## अष्टमः सर्गः

अथ संपद् द्विधा लोके दैवी चैवासुरी तथा । दैवीसंपद्विमोक्षाय निबंधायासुरी भवेत् ॥१॥ एते निरूपिते सम्यग्रमणेन महात्मना । पूर्वकृतेन पुण्येन दैवी पापत आसुरी ॥२॥ बुद्धिश्चेन्ननु कर्मोत्था यत्नहानिस्तदा भवेत् । मैवं ब्रूहि महाबाहो संस्कृतेस्तारतम्यतः ॥३॥ यः करोति मनःकर्म समासक्त्या शुभाशुभम् । वृत्तिं निधाय तत्रैव चरेत्तदनुसारतः ॥४॥ रजस्तमः स्वभावं सा चासुरीसंपदाश्रिता । सात्विकेन स्वभावेन दैवी संपद्विजायते ॥५॥ दैवीसंपच्छ्रिताविर्णा मुखबाहूरुपादजाः । जन्मना गुणकर्मभ्य इति वादोऽस्ति तत्र हि ॥६॥ धर्माद्याः सात्विकाः सन्ति ह्यधर्माद्यास्तु तामसाः । सांख्यैस्ते मानसाः प्रोक्ता जनिस्तस्माद्गुणैर्भवेत् ॥७॥ तथापि केषांचिद्देहः सत्वप्रतिबंधकः केषांचिन्नेति योगभाष्यादवगम्यते । यथा "पूर्वपरिणामापाये उत्तरपरिणामोपजनस्तेषामपूर्वावयवानुप्रवेशाद्भवति । कायेन्द्रियप्रकृतयश्च स्वं स्वं

विकारमनुगृह्णन्ति आपूरेण धर्मादिनिमित्तमपेक्षमाणा इति (कै. पाद सू. २)। न हि धर्मादिनिमित्तं तत्प्रयोजकं प्रकृतीनां भवति। न कार्येण कारणं प्रवर्त्यत इति। कथं तर्हि। वरणभेदस्तु ततः क्षेत्रिकवत्। यथा च क्षेत्रिकः केदारादपांपूर्णात् केदारान्तरं पिप्लावयिषुः समं निम्नं निम्नतरं वा नापः पाणिनापकर्षत्यावरणं त्वासां भिनत्ति। तस्मिन् भिन्ने स्वयमेव आपः केदारान्तरमाप्लावयन्ति। तथा धर्मः प्रकृतीनामावरणमधर्मं भिनत्ति तस्मिन् भिन्ने प्रकृतयः स्वं स्वं विकारमाप्लावयन्ति। यथा वा स एव क्षेत्रिकस्तस्मिन्नेव केदारे न प्रभवत्यौदकान् भौमान् वा रसान् धान्यमूलान्यनुप्रवेशयितुं किं तर्हि मुद्गगवेधुकश्यामाकादींस्ततोऽपकर्षत्यपकृष्टेषु तेषु स्वयमेव रसा धान्यमूलान्यनुप्रविशन्ति। तथा धर्मो निवृत्तिमात्रे कारणमधर्मस्य शुद्ध्यशुद्ध्योरत्यन्तविरोधात्। न तु प्रकृतिप्रवृत्तौ धर्मो हेतुर्भवतीति। अत्र नन्दीश्वरादय उदाहार्याः। विपर्ययेणाप्यधर्मो धर्मं बाधते ततश्चाशुद्धिपरिणाम इति। तत्रापि नहुषाजगरादय उदाहार्याः"। (कैवल्य पाद सू. ३) लोकेऽपि देवादीनां देहः सत्वं न प्रतिबध्नाति। पश्वादीनां च प्रतिबध्नातीति दृश्यते। तद्वत् मानुषे देवपश्वादिवत् चिह्नाभावेऽपि तारतम्येन येषां न देहः सत्वप्रतिबंधकः, येषां च प्रतिबंधकः, ते हि खलु ब्राह्मणादयो भवन्ति। इति जन्मनैव जातिव्यवस्था स्यात्। एवमपि, "सर्वोपायैस्तु क्रोधस्य लोभस्य च विनिग्रहः। एतत्पवित्रं ज्ञानानां तथा चैवात्मसंयमः ॥९॥ वार्यौ सर्वात्मना तौ हि श्रेयोघातार्थमुच्छ्रितौ। नित्यं क्रोधाच्छ्रियं रक्षेत्तपो रक्षेच्च मत्सरात् ॥१०॥" इति शांतिपर्वणि भारते। मोक्षधर्मोक्तैरशुभानिरोधस्तु सर्वैः कार्य एव। शुभनिरोधे प्रयोजनं नास्ति। अतः शास्त्रीयेण यत्नेन स्वभाव विजयादेकस्मिन् जन्मन्यपि गुणकर्मतीव्रत्वेन विश्वामित्रादीनामिव उच्चतरवर्णिनो भवन्ति। अजगरपर्वणि एतदभिप्रायविषयकमेव धर्मवाक्यम्। श्रीमद्भागवतेऽपि सप्तमस्कंधे, "यस्य यल्लक्षणं प्रोक्तं पुंसो वर्णाभिव्यञ्जकम्। यदन्यत्रापि दृश्येत तत्तेनैव विनिर्दिशेत्" ॥ अस्यैव श्रीधरी-

टीकायां "शमादिभिरेव ब्राह्मणादिव्यवहारो मुख्यः, न जातिमात्रादि" त्याह। परमेश्वरेणापि सर्वेषामेव कल्याणकरो मार्गो निदर्शितः स्वमुखेन यथा वाजसनेयसंहितायां शड्विंशेऽध्याये द्वितीयमंत्रे, "यथे मांव्वाचङ्कल्याणीमावदानिजनेभ्यंः ॥ ब्रह्मराजन्याभ्यांशूद्रायचार्य्यायचस्वायचारणायच। प्रियो देवानान्दक्षिणायैदातुरिहभूयासमयम्मेकामं समृध्दयतामुपमादोनमतु" ॥ २ ॥ अतः शास्त्रीयो यत्नः सर्वैः कर्तव्य एव। तस्मिन् यत्ने ब्राह्मणानां सौकर्यमितरेषां च दौष्कर्यं स्यात्। तथाप्येतत् कर्मकाण्डे। भक्तिसाम्राज्ये तु जातिनियमो नास्ति समानमेव सर्वेषामधिकारित्वम्। अत्र हि जागृच्छ्रुतिश्च भवति। "मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः। स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥ अस्यैव आनंदज्ञानविवरणे" 'न मे भक्तः प्रणश्यति' इत्यत्र हेतुमाचक्षाणो भक्त्यधिकारे जातिनियमो नास्ति" इत्युक्तवान्। तथापि उच्चवर्णाभिमाननिवृत्तये ब्राह्मणैः, ईर्ष्यासूयादिनिवृत्तये चेतरैः स्वकर्मैव कार्यम् भक्त्यधिकारेऽपि। तच्च कामवर्जितं परमेश्वरे समर्पितं सत् चित्तशुद्धिं ददाति। तदैवोपासनया विक्षेपनिवृत्तौ सत्यां भगवत्प्रसादश्च भवति। इदमेव भगवतो दयालुत्वं, स्वतरणोपायं निर्मातुम् असामर्थ्येऽपि जीवानां कल्याणार्थं भगवतैव निर्मितो वेदाद्युपायः। तत्प्रसादेनैव शुभा मतिः सच्छास्त्रं सत्संगो योगश्च जायते। "यावन्नानुग्रहः साक्षाज्जायते परमेश्वरात्। तावन्न सद्गुरुः कश्चित् सच्छास्त्रं वापि नो लभेत्" ॥ अतो विषयदोषदर्शने तत्रालंबुद्धिर्विवेकादिसाधनवान् भवति। चत्वारि तानि साधनानि। विवेको विरागः शमादिषट्कं मुमुक्षुत्वं चेति। अस्ति एकं किमपि नित्यम्, एतत् कार्यजातं अनित्यम्, इति सामान्यतो विवेकः। अयमेवाग्रे इतरव्यावृत्तिपूर्वकं ब्रह्मैव नित्यमिति गुरोर्मुखाच्छ्रुत्वा परोक्षज्ञानाकारेण परिणमति। साधनसंपत्तौ तु सामान्य एव। एतन्मूलकं वैराग्यं, फलभोगवैतृष्ण्यं हि तल्लक्षणं। तदपि त्रिविधं मंदं तीव्रं तीव्रतरमिति भेदात्। मंदं नाम स्त्रीपुत्रादिनाशे मास्तु मे

संसार इति क्षणभङ्गुरा मतिः। न हि साधिकारेऽपेक्षमाणा। तीव्रं नाम अस्मिन् जन्मनि माभून्मे संसार इति मतिः। जातेऽस्मिन् विविदिषासंन्यासाधिकारो भवति। तत्रापि सचिह्नसंन्यासस्त्रैवर्णिकानामेव, शूद्राणामप्यचिह्नसंन्यासोक्तिः इत्यत्र श्रुतिर्भवति। "वैराग्यमासाद्य तु पापयोनिः शूद्रोऽपि संन्यासमुपेत्य मोक्षम्। प्राप्नोति पापं तु विधूय विप्रः संन्यासमेत्य ननु मुच्यते वै (वैराग्यभास्कर पा. ३४)। महाभारतेऽपि राजाज्ञया संन्यासग्रहणे शूद्राणामप्रत्यवाय उक्तः। अत्रैव यतमान व्यतिरेकैकेन्द्रियाख्या योगशास्त्रोक्ता वैराग्यभूमिकास्तारतम्येनांतर्भाव्याः। कदापि ब्रह्मलोकपर्यन्तः संसारो मे नाभूदिति मतिस्तीव्रतरं वैराग्यम्। तदपि द्विविधं, अपरं परमिति भेदात्। अपरं हेयोपादेयशून्यमतिरूपमत्यंतविषयवैतृष्ण्यम्। वशीकारसंज्ञं परं नाम गुणवैतृष्ण्यं। तच्च संप्रज्ञातसमाध्यनंतरं भवति। एतत् सकलमपि वैराग्यं शमादिषट्कसंपत्त्या रक्षणीयम्। शमो दम उपरमस्तितिक्षा श्रद्धा समाधानं चेति शमादिषट्कसंपत्तिः। शमो नाम मनोनिग्रहः। दम इन्द्रियनिग्रहः। सर्वथा भोगविषये दीनतानुदय उपरतिः। शीतोष्णसुखदुःखसहिष्णुत्वं तितिक्षा। ऋषिगुरुवेदान्तवाक्येषु विश्वासः श्रद्धा। सा च सात्विक्येव ग्राह्या। या महतां वचनानां समन्वयमपेक्षते। समाधानं नाम ज्ञानाभ्यासेऽचंचला वृत्तिः। एवं लब्धसाधनसंपत्तौ मुमुक्षुत्वं स्पष्टतरं भवति। मोक्षेच्छा हि मुमुक्षुत्वम्। दुःखत्रयनिवृत्तिरत्यंतसुखप्राप्तिश्च मोक्षः। दुःखत्रयं प्रपंचितं बहुषु ग्रंथेष्वस्माभिः। स मोक्षो ज्ञानेनैव भवति न कर्मणा। कर्मणोऽविद्यामूलत्वात्। नापि ज्ञानकर्मसमुच्चयेन तयोरतिविरोधात्। नाप्युपास्तिज्ञानसमुच्चयेन। ज्ञानादेव कैवल्यमिति श्रुतेः। निर्णितमेतत्सर्वं श्रीमद्भगवत्पूज्यपादाचार्यैस्तैत्तिरीयभाष्ये तद्यथा। "अत्रैतच्चिन्त्यते विद्याकर्मणोर्विवेकार्थम्, किं कर्मभ्य एव केवलेभ्यः परं श्रेयः, उत विद्यासंव्यपेक्षेभ्य, आहोस्विद्विद्याकर्मभ्यां संहताभ्यां. विद्याया वा कर्मापेक्षाया, उत केवलाया एव विद्याया इति। तत्र केवलेभ्य एव कर्मभ्यः स्यात्। समस्तवेदार्थज्ञानवतः कर्माधिकारात्।

'वेदः कृत्स्नोऽधिगंतव्यः सरहस्यो द्विजन्मना' इति स्मरणात्। अधिगमश्च सहोपनिषदर्थेनात्मज्ञानादिना। 'विद्वान्यजते' 'विद्वान्याजयति' इति च विदुष एव कर्मण्यधिकारः प्रदर्श्यते सर्वत्र। 'ज्ञात्वाचानुष्ठानम्' इति च। कृत्स्नश्च वेदः कर्मार्थ इति हि मन्यन्ते केचित्। कर्मभ्यश्चेत्परं श्रेयो नावाप्यते वेदोऽनर्थकः स्यात्॥

"न। नित्यत्वान्मोक्षस्य। नित्यो हि मोक्ष इष्यते। कर्मकार्यस्य चानित्यत्वं प्रसिद्धं लोके, कर्मभ्यश्चेच्छ्रेयोऽनित्यं स्यात्तचानिष्टम्। ('तद्य थेह कर्मचितो लोकः क्षीयत' इति न्यायानुगृहीतश्रुतिविरोधात्)। ननु काम्यप्रतिषिद्धयोरनारंभादारब्ध स्य च कर्मण उपभोगेनैव क्षयान्नित्यानुष्ठानाच्च प्रत्यवायानुपपत्तेः ज्ञाननिरपेक्ष एव मोक्ष इति चेत्। तच्च न। शेषकर्मसंभवात्तन्निमित्तशरीरान्तरोत्पत्तिः प्राप्नोतीति प्रत्युक्तम्। कर्मशेषस्य च नित्यानुष्ठानेनाविरोधात्क्षयानुपपत्तिरिति च। यदुक्तं समस्तवेदार्थज्ञानवतः कर्माधिकारादित्यादि तच्च न। श्रुतज्ञानव्यतिरेकादुपासनस्य। श्रुतज्ञानमात्रेण हि कर्मण्यधिक्रियते नोपासनामपेक्षते। उपासनं च श्रुतज्ञानादर्थान्तरं विधीयते मोक्षफलं, अर्थान्तरप्रसिद्धेश्च स्यात्। 'श्रोतव्यः' इत्युक्त्वा तद्व्यतिरेकेण 'मन्तव्यो निदिध्यासितव्यः' इति यत्नान्तरविधानान्मननिदिध्यासनयोश्च प्रसिद्धं श्रवणज्ञानादर्थान्तरत्वम्। एवं तर्हि विद्यासंव्यपेक्षेभ्यः कर्मभ्यः स्यान्मोक्षः। विद्यासहितानां च कर्मणां भवेत् कार्यान्तरारंभसामर्थ्यम्। यथा स्वतो मरणज्वरादिकार्यारंभसमर्थानामपि विषदध्यादीनां मंत्रशर्करादिसंयुक्तानां कार्यान्तरारंभसामर्थ्यम्, एवं विद्यासहितैः कर्मभिर्मोक्ष आरभ्यत इति चेत्। न। आरभ्यस्यानित्यत्वादित्युक्तो दोषः। वचनादारभ्योऽपि नित्य एवेति चेत्। न। ज्ञापकत्वाद्वचनस्य। वचनं नाम यथाभूतस्यार्थस्यज्ञापकं नाविद्यमानस्य कर्तृ। न हि वचनशतेनापि नित्यमारभ्यत आरब्धं वा अविनाशि भवेत्। एतेन विद्याकर्मणोः संहतयोर्मोक्षारंभकत्वं प्रत्युक्तम्॥ "विद्याकर्मणी मोक्षप्रतिबंधहेतुनिवर्तके

इति चेत् । न । कर्मणः फलांतरदर्शनात् । उत्पत्तिसंस्कारविकाराप्तयो हि फलं कर्मणो दृश्यते । उत्पत्त्यादिफलविपरीतश्च मोक्षः । गतिश्रुतेराप्य इति चेत् । 'सूर्यद्वारेण' 'तयोर्ध्वमायन्' इत्येवमादि गतिश्रुतिभ्यः प्राप्यो मोक्ष इति चेत् । न । सर्वगतत्वाद्गन्तृभ्यश्चानन्यत्वात् । आकाशादिकारणत्वात्सर्वगतं ब्रह्म ब्रह्मव्यतिरिक्ताश्च सर्वे विज्ञानात्मानः । अतो नाप्यो मोक्षः । गन्तुरन्यद्विभिन्नं देशं प्रति भवति गन्तव्यम् । न हि येनैवाव्यतिरिक्तं यत्तत्तेनैव गम्यते । तदनन्यत्वप्रसिद्धिश्च 'तत्सृष्ट्वा तदेवानुप्राविशत्' 'क्षेत्रज्ञं चापि मां विद्धि' इत्येवमादिश्रुतिस्मृतिशतेभ्यः ॥ "गत्यैश्वर्यादिश्रुतिविरोध इति चेत् । अथापि स्यादप्राप्यो मोक्षस्तदा गतिश्रुतीनां 'स एकधा' 'स यदि पितृलोककामो भवति' 'स्त्रीभिर्वा यानैर्वा' इत्यादिश्रुतीनांच कोपःस्यादिति चेत् । न । कार्यब्रह्मविषयत्वात्तासाम् । कार्ये हि ब्रह्मणि स्त्र्यादयः स्युर्न कारणे 'एकमेवाद्वितीयं' 'यत्र नान्यत्पश्यति' 'तत्केन कं पश्येत्' इत्यादि श्रुतिभ्यः । विरोधाच्च विद्याकर्मणोः समुच्चयानुपपत्तिः । प्रविलीनकर्त्रादिकारकविशेषतत्त्वविषया हि विद्या तद्विपरीतकारकसाध्येन कर्मणा विरुध्यते । न ह्येकं वस्तु परमार्थतः कर्त्रादिविशेषवत्तच्छून्यं चेत्युभयथा द्रष्टुं शक्यते । अवश्यं ह्यन्यतरन्मिथ्या स्यादन्यतरस्य च मिथ्यात्वप्रसंगे युक्तं यत् स्वाभाविकाज्ञानविषयस्य द्वैतस्य मिथ्यात्वम्, 'यत्र हि द्वैतमिव भवति' 'मृत्योः स मृत्युमाप्नोति' 'अथ यत्रान्यत्पश्याति तदल्पम्' 'अन्योऽसावन्योऽहमस्मि' 'उदरमन्तरं कुरुते अथ तस्य भयं भवति" इत्यादिश्रुतिशतेभ्यः । सत्यत्वं चैकत्वस्य 'एकधैवानुद्रष्टव्यं' 'एकमेवाद्वितीयं' 'ब्रह्मैवेदं सर्वम्' 'आत्मैवेदं सर्वम्' इत्यादिश्रुतिभ्यः । न च संप्रदानादिकारकभेदादर्शने कर्मोपपद्यते । अन्यत्वदर्शनापवादाश्च विद्याविषये सहस्रशः श्रूयन्ते । अतो विरोधो विद्याकर्मणोः । अतश्च समुच्चयानुपपत्तिः ॥ "तत्र यदुक्तं संहताभ्यां विद्याकर्मभ्यां मोक्ष इति । अनुपपन्नं तत् । विहितत्वात् कर्मणाम् । श्रुतिविरोध इति चेत् ।

यद्युपमृद्य कर्त्रादिकारकविशेषमात्मैकत्वविज्ञानं विधीयते । सर्पादिभ्रान्तिविज्ञानोपमर्दकरज्ज्वादिविषयाविज्ञानवत्प्राप्तः कर्मविधिश्रुतीनां निर्विषयत्वाद्विरोधः । विहितानि च कर्माणि । स च विरोधो न युक्तः । प्रमाणत्वात् श्रुतीनामिति चेन्न, पुरुषार्थोपदेशपरत्वात् श्रुतीनाम् । विद्योपदेशपरा तावत् श्रुतिः संसारात् पुरुषो मोक्षयितव्य इति संसारहेतोरविद्याया विद्यया निवृत्तिः कर्तव्येति विद्याप्रकाशकत्वेन प्रवृत्तेति न विरोधः । एवमपि कर्त्रादिकारकसद्भावप्रतिपादनपरं शास्त्रं विरुध्यत एवेति चेन्न । यथाप्राप्तमेव कारकास्तित्वमुपादायोपात्तदुरितक्षयार्थं कर्माणि विदधच्छास्त्रं मुमुक्षूणां फलार्थिनां च फलसाधनं न कारकास्तित्वे व्याप्रियते । उपचितदुरितप्रतिबंधस्य हि विद्योत्पत्तिर्नावकल्पते । तत्क्षये च विद्योत्पत्तिः स्यात्ततश्चाविद्यानिवृत्तिस्तत आत्यंतिकः संसारोपरमः । अपि चानात्मदर्शिनो ह्यनात्मविषयः कामः । कामयमानश्च करोति कर्माणि । ततस्तत्फलोपभोगाय शरीराद्युपादानलक्षणः संसारः । तद्व्यतिरेकेण आत्मैकत्वदर्शिनो विषयाभावात् कामानुत्पत्तिः । आत्मनि चानन्यत्वात् कामानुत्पत्तौ स्वात्मन्यवस्थानं मोक्ष इत्यतोऽपि विद्याकर्मणोः विरोधः । विरोधादेव च विद्या मोक्षं प्रति न कर्माण्यपेक्षते । स्वात्मलाभे तु पूर्वोपचितदुरितप्रतिबंधापनयद्वारेण विद्याहेतुत्वं प्रतिपद्यन्ते कर्माणि नित्यानीति । अत एवास्मिन् प्रकरणे उपन्यस्तानि कर्माणीत्यवोचाम । एवं चाविरोधः कर्मविधिश्रुतीनाम् । अतः केवलाया एव विद्यायाः परं श्रेय इति सिद्धम्" ( तैत्तिरीयोपनिषद्भाष्यं शिक्षाध्यायः १२ )

अतो ज्ञानार्थं श्रीगुरुं समाश्रयेत् । 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्' इति श्रुतेः । 'तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया । उपदेक्षन्ति ते ज्ञानं ज्ञानिनस्तत्वदर्शिनः' इति जागृच्छ्रुतेः । 'तस्माद्गुरुं प्रपद्येत जिज्ञासुः श्रेयउत्तमम् । शाब्दे परे च निष्णातं ब्रह्मण्युपसमाश्रयम्' ॥ इति सात्वतश्रुतेश्च । योऽयं क्रमो निरूपितः स तु पिपीलिकामार्गगामिनामेव । विहगादिमार्गगामिनां तु न नियमः । यथा

साधारणजनस्यैव बाल्यादिवयःक्रमनिर्धारः शक्यः, न रसायनभक्षकादीनाम् ; तद्वत् त्वय्यपि रघुनन्दन प्रबलतरपुण्यपुञ्जेन जाता विरक्तिः संन्यासादिविनैव, एतन्महदाश्चर्यम् । सापि न दुःखातिशयदृष्टिमूला । किं तु केवलविवेकमूलाऽत्यंतसात्त्विकी । अतस्त्वं मोक्षार्थं यतस्व । तव सामग्रीप्राबल्यादल्पायासेनैवाशु कार्यं भविष्यति । इत्यस्माकमाशिषो बह्वः । श्रीमज्ज्ञानेश्वराख्योऽयं सद्गुरुः करुणार्णवः । स मामंतर्बहिः पातु कैवल्यकमलापतिः ॥ । हरिः ॐ तत्सत् । श्रीमत्सद्गुरुज्ञानेश्वरकृपाप्रसादे चंपूबद्धे श्रीरामगुरोश्चरणरजःसेवायां दैवीसंपन्निरूपणपूर्वकमनुबंधचतुष्टयकथनन्नामाष्टमः सर्गः ॥ श्रीज्ञानेश्वरमहाराजार्पणमस्तु



